॥ श्रीः ॥

संस्कृतरत्नाकरस्य

# आयुर्वेदाङ्कः



प्रकाशकः—
महामहोपाध्यायः पं० श्रीगिरिधरशर्मा चतुर्वेदः
राजकीयसंस्कृतविद्यालयाध्यक्षः, जयपुरम्

॥ श्रीः ॥

# विषय-सूची ।



॥ श्रीः ॥

# चित्र-सूची ।



आविर्बभूव कलशं दधदर्णवाद्यः
पीयूषपूर्णममरत्वकृते सुराणाम् ।
रुग्जालजीर्णजनताजनितप्रशंसो
धन्वन्तरिः स भगवान् भविकाय भूयात् ॥

॥ श्रीः ॥

# सरस्वती श्रुतिमहती महीयताम् ।


# संस्कृत-रत्नाकरः

## ॥ आयुर्वेद-विशेषाङ्कः ॥

चित्रं द्विजपतिमण्डलकलासमुद्भवयोगमेधमानोऽपि ।
वेलामनतिक्रामन् संस्कृतरत्नाकरो जयति ॥ १ ॥

वर्षम् २ | जयपुरम्, चैत्रः, संवत् १९९१ वि० | मासः १२


## मङ्गलम्

### कवित्त—घनाक्षरी ।

यत्त्वं बिभर्ति पाणिपङ्कजे यस्य सुधा
सोऽयं वसुधाधाः किं न रोगराशिशोषी स्यात् ।
शङ्खादिकचिह्नान् चतुर्बाहून्विदधानो ह्यसौ
(१) दानोर्जितचारुचतुर्वर्गपरिपोषी स्यात् ॥
मञ्जुनाथ नित्यं निर्जराणाममरत्वकरो
दुरितहरोऽसौ मानवीयामयशोषी स्यात् ।
रोगाम्बुधिमग्ने जने तन्वन् (२) तरितुल्यदयां
धन्वन्तरिरेष नृणां (३) नन्वन्तस्तोषी स्यात् ॥१॥

साहित्याचार्य-भट्टश्रीमथुरानाथशास्त्री ।

१ दानेन अर्जिता यः चतुर्वर्गः (धर्मादिपुरुषार्थः) तस्य परिपोषकः । चतुर्बाहुधारको भगवानस्माकमपि चतुर्वर्गपरिपोषकः स्यादित्याशयः ।

२ रोगाम्बुधौ मग्ने लोके दयां कृत्वा नौकावत् रोगाम्बुधेस्तारकोऽयमित्यर्थः ।

३ ननु निश्चयेन, अन्तःकरणसंतोषकः ।

### गीतिः ।

जय जय, मङ्गलमय, निगमेश[1] जय जय ।
ब्रह्मगदित, सुरभिषगभिपूजित,
जितमद, वरद, महेश । जय जय० ॥ १ ॥
इन्द्रादिकसुरवृन्दनिषेवित,
वारितजनताक्लेश । जय जय० ॥ २ ॥
अधिकृतजडजङ्गम, हृदयङ्गम,
मुनिजनमननिवेश । जय जय० ॥ ३ ॥
साधितनिगमगवीबल, निर्मल,
खलदलदलनदिनेश । जय जय० ॥ ४ ॥

विद्यावाचस्पतिश्रीशालग्रामशास्त्रिणः ।

१ 'निगमेश' इत्यायुर्वेदस्य संबोधनम् ।

२ वेदप्रामाण्यसिद्धौ ह्यायुर्वेदो दृष्टान्तत्वेनोपन्यस्यते ।

संस्कृतरत्नाकरः



आविर्बभूव कलशं दधदर्णवाद्यः
पीयूषपूर्णममरत्वकृते सुराणाम् ।
रुग्जालजीर्णजनताजनितप्रशंसो
धन्वन्तरिः स भगवान् भविकाय भूयात् ॥

॥ श्रीः ॥

सरस्वती श्रुतिमहती महीयताम् ।

# संस्कृत-रत्नाकरः

## * आयुर्वेद-विशेषाङ्कः *

चित्रं द्विजपतिमण्डलकलासमृद्ध्याघमेधमानोऽपि ।
वेलामनतिक्रामन् संस्कृतरत्नाकरो जयति ॥ १ ॥

| वर्षम् २ | जयपुरम्, चैत्रः, संवत् १९९१ वि० | मासः १२ |
|---|---|---|


## मङ्गलम्

### कवित्त—घनाक्षरी ।

प्रत्यक्षं विभाति पाणिपङ्करुहे यस्य सुधा
सोऽयं वसुधायाः किं न रोगराशिशोषी स्यात् ।
चक्रादिकचिह्नान् चतुर्बाहून्दधानो ह्यसौ
(१) दानोचितचारुचतुर्वर्गपरिपोषी स्यात् ॥
मञ्जुनाथ नित्यं निर्जराणाममरत्वकरो
दुरितहरोऽसौ मानवीयामयमोषी स्यात् ।
रोगाम्बुधिमग्ने जने तन्वन् (२) तरितुल्यदयां
धन्वन्तरिरेष नृणां (३) नन्वन्तरतोषी स्यात् ॥१॥

साहित्याचार्यभट्टश्रीमथुनाथशास्त्री ।

१ दानाय उचितो यः चतुर्वर्गः (धर्मादिपुरुषार्थः) तस्य परिपोषकरः । चतुर्बाहुधारको भगवानसावश्यं चतुर्वर्गपरिपोषकरः स्यादित्याशयः ।

२ रोगाभिभूतं लोकं दयां कृत्वा नौकावत् रोगाम्बुधेस्तारयन्नित्यर्थः ।

३ ननु निश्चयेन, अन्तःकरणसंतोषकः ।

### गीतिः ।

जय जय, मङ्गलमय, निगमेश[1] जय जय ।
ब्रह्मगणित, सुरभिषगभिपूजित,
जितगद, वरद, महेश । जय जय० ॥ १ ॥
इन्द्रादिकसुरवृन्दनिषेवित,
वारितजनताक्लेश । जय जय० ॥ २ ॥
अधिकृतजडजङ्गम, हृदयङ्गम,
मुनिजनमनननिवेश । जय जय० ॥ ३ ॥
साधितनिगमगवीबल, निर्मल,
खलदलदलनदिनेश । जय जय० ॥ ४ ॥

विद्यावाचस्पतिश्रीशालग्रामशास्त्रिणः ।

१ 'निगमेश' इत्यायुर्वेदस्य संबोधनम् ।

२ वेदप्रामाण्यसिद्धौ ह्यायुर्वेदो दृष्टान्तत्वेनोपन्यस्यते ।

॥ श्रीः ॥

# सामयिकं निवेदनम् ।

निर्मायमनुग्राहकाणां पाठकमहाभागानां नेदमविदितं स्याद्यत् प्रतिदिनं परितः प्रवर्द्धमानयाऽनया 'विशेषाङ्क'प्रकाशनप्रथया हिन्दीसंसारे कीदृशी वा नवीनता प्रतिदिशं प्रसारितेति । अद्यत्वे ह्येकैकं विषयमालम्ब्य गहनान्वेषणशालिनां निबन्धानाम्, भव्यभावाभिव्यञ्जकानां काव्यानाम्, हृदयतलस्पर्शिनां चित्रादीनां च यान्यायोजनानि विधीयन्ते, एतैः किल साहित्यसेविनामभिरुचिरुत्तरोत्तरमाभिनिविशमानेवालक्ष्यते । अपि नाम नाभिनन्दनीयोऽयं साहित्यसेविभिरध्यवसायः? अस्तु, सोयं प्रकारो विविधवैभवशालिन्यां सुरभारत्यामपि प्रचुरं प्रचरेदिति हृद्यभिसंधाय संस्कृतरत्नाकरेणाऽनेन विशेषाङ्कप्रकाशनमिदमाघोषितमासीत् । भारतविश्रुतानां श्रीश्रीमल्लक्ष्मीरामस्वामिमहाभागानां पाठशालाध्यापनकार्यतो विश्रामग्रहणावसरे संपादनीयमभिनन्दनमप्यनेन कृतं स्यादित्यभिसन्धिना स चायमायुर्वेदाङ्को निरधारि । नितरामुत्साहिभिरायुर्वेदप्रचारकामुकैः श्रीस्वामिमहोदयानां शिष्योत्तंसैश्चात्र समुचितं साहाय्यं संपादितमिति महता संभारेण तदिदमायोजनं प्रावर्तत ।

भारतप्रसिद्धैरनुभविभिर्वैद्यमहाभागैर्निबन्धलेखनं स्वीकृतं निर्व्यूढं च । निबन्धानुबन्धीनि नानाविधानि ब्लाकचित्राणि सर्वतः समगृह्यन्त । चित्राणि मनोहरतमानि भवेयुरिति कृत्वा कलिकत्तादिमहानगरेषु तान्येतानि निरमाप्यन्त । अक्रियत भूयान्धनव्ययः । मुद्रणमुपक्रान्तमभूत् । स्थानीयेन मुद्रणालयेन सर्वतः सौकर्यं स्यादिति विचार्य अत्रत्यः सर्वतः प्रसिद्धो 'मनोरञ्जन'मुद्रणालय एव चैतदर्थमालम्ब्यत । किन्तु विद्यानुरागिभिः स्वामिमहोदयानां शिष्यैर्निजोत्साहेन यथा यथा आयोजनवृद्धिरकारि तथा तथा मारुतिनिगरणकामुका सुरसेव 'प्रेसाध्यक्षमहोदयस्य' तृष्णापि प्रवर्द्धितुमारेभे । नियतावधिकमस्मन्मुद्रणकार्यं शिथिलीकृत्य अन्यान्यानि कार्याणि लाभलोलुपः सोयं संजग्राह । अत एव ग्राहनिगीर्णो गज इव सोयं विशेषाङ्कप्रकाशनस्य नियतोऽवधिरुत्तरोत्तरं जलमग्न इवाऽभवत् । अनयैव चान्तरिकविपदा समाक्रान्ता वयं बहूनवधीन्प्रकल्प्यापि तस्मिं समये प्रकटयितुं न प्राभूम, समभूम च पाठकमहाभागानामविश्वासस्य उपालम्भस्य च भाजनानि ।

अस्तु । संप्रति सोयं विशेषाङ्कः श्रीमतामङ्कमाश्रयति । अस्मत्कृतमपराधमगणयद्भिरनुग्राहकैः श्रीमद्भिः सोयमधुना करुणादृशा पावनीयः । क्वचिद्विलम्बोपि प्रियाकरो भवति (देर आयद दुरुस्त आयद) इति पारस्यप्रवादानुसारमत्रापि श्रीमतां किञ्चिदनुकूलमेव संवृत्तम् । अङ्गीकृतानामपेक्षया भूरिभूरीणां पृष्ठानां समभूदत्र संवृद्धिः । चित्राण्यपि समधिकान्यायोजितानि, येषु हि सन्ति रङ्गत्रयचित्रितान्यपि कानिचित् । अस्तु, किं वा प्रकत्थनेन । यादृशमिदमभूत् तादृशमेव श्रीमतां पुरतः समुपस्थाप्यते । किञ्च विलम्बापराधिनोपि श्रीमत्कृपाऽवलम्बा वयमिदमाघोषयितुं पुनरप्युत्सहामहे यत्—यदि पाठकमहोदयानामेवमेवाऽनुग्रहः स्यात्तर्हि विशेषाङ्कप्रकटनसेवया समयान्तरे पुनरपि समुपस्थास्यामहे श्रीमत इति ।

विनीतः प्रकाशकः

**श्रीगिरिधरशर्मा चतुर्वेदः ।**

---

१ जडमग्नः ।



आयुर्वेदमार्त्तण्ड-प्राणाचार्य-वैद्यरत्न-भिषगाचार्य-श्रीलक्ष्मीरामस्वामिमहाभागाः

आयुर्वेदमार्तण्ड-वैद्यरत्नायुर्वेदाचार्याद्यनेकबिरुदालङ्कृतानां

श्रीमतां लक्ष्मीरामस्वामिमहाभागानाम्

# आदर्शजीवनम् ।

( काव्यम् )

( साहित्यमहोपाध्यायकविभूषणाशुकविपण्डितश्रीहरिशास्त्रिणा प्रणीतम् )

---

गौरीशङ्करयो राधाकृष्णयोः भक्तितत्त्वयोः ।
तद्दिव्यमव्ययं भव्यं साहित्यं धाम कामये ॥१॥

[1]यत्पाणिपद्मयुगलाङ्गुलिकानखेभ्यो
मत्स्यादयः किल भवन्ति दशावताराः ।
विश्वेश्वरी हरिहरादिसुरौघ-सेव्या
मन्मानसे लसतु सा ललिता पराम्बा ॥२॥

[2]पश्यं हरौ हरिमथाऽखिलविश्वरूपे
विज्ञाय वाङ्मनसकर्मधनादिभिर्ये ।
सन्तो लसन्ति जनतां परिसेवमानाः
तेषां [3]पदाम्बुजयुगेऽस्तु मम प्रणामः ॥३॥

[4]स्नेहं क्षिणोति न, न तापयते च पात्रं
नापि स्वयं ज्वलति, नाशयते दशां च ।
मालिन्यमुद्वमति नो, स्थिरसुप्रकाशो
रत्न-प्रदीप इव भात्यवनौ महात्मा ॥४॥

---

१—अत्र ब्रह्माण्डपुराणस्थं ललितोपाख्यानं प्रमान्तु पाठकाः ।

२—'यो मां पश्यति सर्वत्र, मयि सर्वं च पश्यति' इति भगवदुक्तिं कृतार्थयन्तो जनतामेव जनार्दनं मन्यमानाः सन्तो मे वन्द्या इति भावः ।

३—अत्र पदाम्बुजमिति रूपकं सूक्तिसीमन्तिन्यास्तुर्यांशगतचरणस्थानावलम्बितया शोभाविशेषाधायकत्वात्, नूपुरालङ्कारतां भजते । तथा हि—'तुर्यपादेऽपरे भागे रूपकेणालङ्कृतिर्यदा । तदा सा ललना पाद इव नूपुरमिष्यते'' इति लक्षणमस्मदलङ्कारकौतुके विलोकनीयम् । एवमपरत्रापि समाकलनीयम् ।

४—एतस्य प्रेयसोऽलङ्कारस्य भणितिरमण्यास्तुर्यांशचतुर्थभागरूपचरणाग्रस्थानावलम्बितया चमत्कृतिजनकत्वादलक्तकालङ्कारत्वं पूर्वोक्तास्मदलंकारकौतुकतोऽवसेयम् । 'अलंकृतिर्भवेत्तुर्यपादे तुर्यांशराजिता । सूक्तिकान्तापदे लग्नमिवालक्तकमस्ति सा ' इति अलक्तपदेनालक्तकजन्यो रागोऽरुणिमा ग्राह्यः, उपचारात् ।

[ एतस्मिन् काव्यगुम्फे ये येऽलङ्काराः संनिविष्टास्तेषु सर्वेष्वेव एवमेव स्थानविशेषमहिम्ना कान्तानां प्रसिद्धनानाभूषणत्वं साधितं कविमहोदयेन । तल्लक्षणादिकं तु तद्रचितात् 'अलंकारकौतुक' नामकाद् ग्रन्थादवगन्तव्यम् । विस्तरो मा भूदिति टिप्पण्यां सर्वत्र तदुल्लेखो न कृत इति—

प्र० संपादको भट्टमथुरानाथशास्त्री ]



आयुर्वेदमार्तण्ड-प्राणाचार्य-वैद्यरत्न-भिषगाचार्य-श्रीलक्ष्मीरामस्वामिमहाभागाः

आयुर्वेदमार्तण्ड-वैद्यरत्नायुर्वेदाचार्याद्यनेकविरुदालङ्कृतानां
श्रीमतां लक्ष्मीरामस्वामिमहाभागानाम्

# आदर्शजीवनम् ।

## ( काव्यम् )

( साहित्यमहोपाध्यायकविभूषणाशुकविपण्डितश्रीहरिशास्त्रिणा प्रणीतम् )

---

गौरीशङ्करयो राधाकृष्णयोः भक्तिज्ञयोः ।
तद्दिव्यमव्ययं भव्यं साहित्यं धाम कामये ॥१॥

[1]यत्पाणिपद्मयुगलाङ्गुलिकानखेभ्यो
मत्स्यादयः किल भवन्ति दशावताराः ।
विश्वेश्वरी हरिहरादिसुरौघ-सेव्या
मन्मानसे लसतु सा ललिता पराम्बा ॥२॥

[2]विश्वं हरौ हरिमथाऽखिलविश्वरूपे
विज्ञाय वाङ्मनसकर्मधनादिभिर्ये ।
सन्तो लसन्ति जनतां परिसेवमानाः
तेषां [3]पदाम्बुजयुगेऽस्तु मम [4]प्रणामः ॥३॥

स्नेहं क्षिणोति न, न तापयते च पात्रं
नापि स्वयं ज्वलति, नाश्रयते दशां च ।
मालिन्यमुद्वमति नो, स्थिरसुप्रकाशो
रत्न-प्रदीप इव भात्यवनौ महात्मा ॥४॥

---

१—अत्र ब्रह्माण्डपुराणस्य ललितोपाख्यानं प्रमाणन्तु पाठकाः।

२—'यो मां पश्यति सर्वत्र, मयि सर्वं च पश्यति' इति भगवदुक्तिं कृतार्थयन्तो जनतामेव जनार्दनं मन्यमानाः सन्तो मे वन्द्या इति भावः ।

३—अत्र पदाम्बुजमितिरूपकं सूक्तिसीमन्तिन्यास्तुर्यांशगतचरणस्थानावलम्बितया शोभाविशेषाधायकत्वात्, नूपुरालङ्कारतां भजते । तथा हि—'तुर्यपादेऽपरे भागे दृश्येतालङ्कृतिर्यदा । तदा सा ललना पाद इव नूपुरमिष्यते'' इति लक्षणमस्मदलङ्कारकौतुके विलोकनीयम् । एवमपरत्रापि समाकलनीयम् ।

४—एतस्य प्रेयसोऽलङ्कारस्य भणितिरमण्यास्तुर्यांशचतुर्थभागरूपचरणाग्रस्थानावलम्बितया चमत्कृतिजनकत्वादलक्तकालङ्कारत्वं पूर्वोक्तास्मदलंकारकौतुकतोऽवसेयम् । 'अलंकृतिर्भवेत्तुर्यपादे तुर्यांशराजिता । सूक्तिकान्तापदे लग्नमिवालक्तकमस्ति सा' इति अलक्तपदेनालक्तकजन्यो रागोऽरुणिमा ग्राह्यः, उपचारात् ।

[ एतस्मिन् काव्यगुम्फे ये येऽलङ्काराः संनिविष्टास्तेषु सर्वेष्वेव एवमेव स्थानविशेषमहिम्ना कान्तानां प्रसिद्धनानाभूषणत्वं साधितं कविमहोदयेन । तल्लक्षणादिकं तु तद्रचितात् 'अलंकारकौतुक' नामकाद् ग्रन्थादवगन्तव्यम् । विस्तरो मा भूदिति टिप्पन्यां सर्वत्र तदुल्लेखो न कृत इति—

पू० संपादको भट्टमथुरानाथशास्त्री ]

आदर्श-जीवन-विनिर्मितिकामुका ये
सभ्या बुभूषव इहोन्नतिमर्थयन्ते ।
तेषां कृते सफलमौषधमस्ति साधोः
प्राज्ञस्य कस्यचन राचरितं पवित्रम् ॥५॥

निहन्ति तापं प्रददाति शान्तिं
सत्त्वं समुद्भावयतेऽन्तरा च ।
निरस्य दुष्कर्म, तनोति शर्म
सतां पवित्रं चरितं सुतीर्थम् ॥६॥

इत्थं समुद्भावितधीर्महात्मनां
गुणैरहं लोकसुधारणाकृते ।
ब्रवीमि साधोश्चरितं मनस्विनः,
कस्याऽप्युदारस्य सतो यशस्विनः॥७॥

क्व दुस्तरोऽसौ चरिताम्बुधिर्महा-
न्क चाहमोजो-बल-वेग-विक्लवः ।
चन्द्रं जिघृक्षोरिव बालकस्य मे
प्रयत्नमालोक्य जगत्स्मयिष्यते॥८॥

सतां तथाप्यङ्घ्रिसरोजलग्ना
रतिर्मतिं श्राद्धतरा तरिर्मे ।
विलङ्घ्य दुस्तुङ्गतरङ्गविघ्ना-
न्संनेष्यतेह्यु तरपारमाशु ॥९॥

अस्ति प्रभूतायशा मनीषी
दयालुमार्ग-प्रवणो महात्मा ।
पीयूषपाणिर्विदितोऽत्र लक्ष्मी—
रामोऽश्विनोरेकतराऽवतारः ॥१०॥

मन्ये स नीरोगयितुं महेन्द्र-
प्रणोदितो भारतवर्षमेतत् ।
दृष्ट्वा स्थलीमन्तिमयज्ञपूतां
प्रान्तेऽवतीर्णो जयपत्तनस्य ॥११॥

गुणेषु सर्वप्रथमो भविष्यन्
विद्योपदेशे च गुरुत्वमेष्यन् ।
दिव्यो भिषक् स्वीकृतवानिहापि
स्वोद्भूतये ब्राह्मणवर्णमेव ॥१२॥

जनुर्विभावस्य गतो निमित्त-
मात्रं मणेर्वंश इवोद्भवस्य ।
गौड-द्विजन्मा बुधभूरजीति-
ख्यातो दशग्रामगुरुत्ववृत्तिः ॥१३॥

हरिष्यमाणां जगदर्त्तिजातं
नासत्यमेतं दधती स्वगर्भे ।
माता स्वरूपाऽस्य न विव्यथे यत्
परोपतापाय न सन्ति सन्तः ॥१४॥

अतः सितां भारतमाप्स्यते भा-
मितीव मुक्तान्तरितेव शुक्तिः ।
उद्यत्सुतेजःप्रकरैरमुष्य
साम्बा भृशं पाण्डुमुखी बभासे ॥१५॥

एकोनविंशे शतकेऽथ वर्षे
त्रिंशत्तमे विक्रमराजकीये ।
अनुप्रपन्नेष्वखिलग्रहेषु
षष्ठ्यां तिथौ श्रावणमासि शुक्ले ॥१६॥

निशाद्वितीयप्रहरेऽत्र वैद्य-
विद्याचमत्कारनिदर्शनाय ।
आविर्बभावेष भिषक् स्वमातुः
कुक्षेः सुखं चन्द्रमसा सदैव ॥१७॥

इन्दाविवास्मिन्नुदिते तदानीं
तमोरुजां वृन्दमिवाप नाशम् ।
ग्रामे गृहे सर्वजनाननेषु
मोदः परं स्वास्थ्यमिवाप भासम् ॥१८॥

ग्रामस्त्रियो वंशविवृद्धिगीती-
स्तारं जगुर्गेहमुपेत्य चास्य ।
प्रकाशयामास कृतार्थतां च
भेरीरवो मङ्गलवासरस्य ॥१९॥

मातुः पितुः किं मुदमीरयामः
प्रपश्यतोराननचन्द्रमस्य ।
कुमारवक्त्राम्बुजदत्तदृष्ट्यो-
गौरीशयोः प्रीतिमिवोल्लसन्तीम् ॥२०॥

उपात्तसंस्कारविधिः स चार्यं
पित्रा स्वयं ज्यौतिषिकैर्द्विजैश्च ।
अर्थानुगुण्यं समवेक्ष्य, लक्ष्मी-
रामाभिधानं प्रथयाम्बभूवे ॥२१॥

द्विहायनेऽप्यत्र सुचेष्टनानि
गुणाश्च नैरोग्यमुदारभावः ।
रुच्या तनुश्रीरिति सर्व एव
स्निग्धाश्छदा भव्यतराविवासन् ॥२२॥

स पञ्चमेऽब्देऽयमुदारभाग्यो
मात्रा समं प्राप पुरं जयाख्यम् ।
तत्रैनमालोकितवान्महात्मा
श्रीचन्दनश्चन्दनदासनामा ॥२३॥

श्रीदादुमार्गप्रथितः स विद्वान्
भिषग्वरो भावितयोगतत्त्वः ।
विज्ञाय चैनं किल दत्तमायु-
र्विद्याप्रचाराय कृतावतारम् ॥२४॥

स्वप्नाग्विचारानुगुणं तपस्या-
फलस्वरूपो भगवानिहाप्तः ।
अतो विनीयात्मगृहं चिराय
लोकोपकारस्य खनिर्भवामि ॥२५॥

इत्थं विनिध्याय विराजमानं
सुतेजसा गौरवपुःश्रिया च ।
जातिस्वभावादिगुणैश्च बाह्यै-
रप्यात्मनीनं भुवि भावुकं च ॥२६॥

एह्येहि भोः! कौतुकदर्शनाय
भवाधिरूढो वृषयानमेतत् ।
उक्त्वेति बालं सममात्मनैव
निनाय गेहं प्रति तत्त्वदर्शी ॥२७॥
( कलापकम् )

दिनाष्टकेनास्य च मातरं स
सन्तोष्य वेदान्तवचश्छटाभिः ।
ग्रामप्रयाणोत्कलिकां चकार
सद्यःफलोद्भावकरी सतां वाक् ॥२८॥

प्रदत्तबोधास्य चिराय माता
गृहप्रयाणभिमना बभूव ।
प्रिये सुतेऽप्यत्र ममत्वबन्धं
स्त्रियो न तन्वन्ति विवेकवत्यः ॥२९॥

सोऽयं मनस्वी शिशुकोऽपि साधो-
र्वसन्समीपे न हि जातु दध्यौ ।
स्वमातरं वा पितरं, हि सन्तो
विश्रामशालाधिकृतं विदन्ति ॥३०॥

ततोऽब्दयुग्मे ललतोऽस्य याते
स चन्दनो दादुमतावलम्बो ।
दयालुदीक्षां प्रददावमुष्मै
पात्रे न सन्तः कलयन्त्युपेक्षाम् ॥३१॥

उपात्तदीक्षाविधिरेष शिष्यः
समाहितात्मा गुरुचन्दनस्य ।
छन्दानुवर्ती समभूदमन्दं
गन्धो यथा वायुगतानुसारी ॥३२॥

स्वजन्मनः सप्तमकेऽयमब्दे
गुरोरवाप्ताक्षरयोगतत्त्वः ।
गीर्वाणभाषां पठितुं विलग्नो
देवा हि दिव्यां गिरिमाद्रियन्ते ॥३३॥

अधीत्य कोशं ह्यमराभिधानं
गुरोर्गुरूणां गृह एव सम्यक् ।
अवाप्तसारस्वतको गणेशा-
त्सुसंस्कृतं भाषितुमुल्ललास ॥३४॥

ततोऽस्य वर्षे दशमे समाप्ते
गुरुः स वै चन्दनदाससाधुः ।
योग्यं चमत्कारिगुणाढ्यमेनं
स्वपट्टशिष्यं प्रथयाम्बभूव ॥३५॥

आसन्गुरोरस्य किलान्यशिष्या
ज्येष्ठा वयस्तोऽप्यथ पारदर्शी ।
स चन्दनोऽमुं कृतवान् प्रधानं
सतां महत्त्वे हि वयो न हेतुः ॥३६॥

गोवर्धनं रक्षणपाठनादि-
समीक्षणायास्य नियोज्य शिष्यम् ।
गुरुः कृतार्थं स्वमवेक्षमाणः
समाधिमास्थाय दिवं जगाम ॥३७॥

अकालजन्यात्स्वगुरोर्वियोगा-
दयं नितान्तं मनसि प्रखिन्नः ।
साध्ये स्वके तं प्रथमान्तरायं
मेने, सविघ्नानि शुभानि नूनम् ॥३८॥

संस्कारकृत्यानि विधानपूर्वं
गुरोः स्वकस्यानुविधाय सोऽयम् ।
पुनः स्वकर्तव्यविधौ ससज्ज
मोहस्य वश्या न भवन्ति सन्तः ॥३९॥

स कामबाणश्रुतिनन्दभूमि-
स्वरूपके विक्रमवत्सरेऽसौ ।
राज्याश्रितां संस्कृतपाठशालां
विवेश वर्णीव कुलं गुरूणाम् ॥४०॥

स चन्द्रिकां व्याकरणस्य मग्नी-
रामात्सतो गर्गपदाभिधेयात् ।
अध्यैष्ट जाबालिमुनेः सकाशा-
द्धारीतनामेव बटुः स्वविद्याम् ॥४१॥

श्रीजानकीलालबुधोऽपि सम्यक्
सहायकोऽस्यात्र बभूव पाठे ।
परोपकारव्रतिनां सतां हि
वाचोऽर्थनाया न जगत्युपेक्षा ॥४२॥

कृपाविशेषाच्च तयोर्महर्ष्योः
प्रवेशिकामेष चकार पारम् ।
बभौ च सर्वान्तसदां वरिष्ठः
सम्प्राप्तवाञ्छात्रसहायवृत्तिम् ॥४३॥

विद्यालयाध्यापयितार एन-
मीषुः स्वकीये विषये विनेतुम् ।
व्युत्पन्नबुद्धिं विनतं सुशीलं
शिष्यं सुतं केऽत्र न कामयन्ति ॥४४॥

तथापि कृष्णस्य कवेरिहाभू-
द्वृद्धस्य साधौ प्रबलोऽनुरोधः ।
उवाच सोऽमुं, मयि ते निधानं
न्यस्तं कुसीदेन समं गृहाण ॥४५॥

तस्यानुरोधादुत भाग्ययोगा-
दथो तथा भाव्यतया च तस्य ।
आयुष्यवैद्यागमतन्त्रमेव
प्राध्येतुमस्योत्कलिका चकासे ॥४६॥

अथ स्वराम्नायनवैकरूपे
संवत्सरे विक्रमराजकीये ।
दक्षो गुणैर्वैषवपुर्वलक्ष
आयुष्यवेदस्य विवेश कक्षाम् ॥४७॥

वर्षद्वयेनैव सहर्षमेष
तस्यानुपाध्याय-पदं दधार ।
सतां हरेरंशतयाऽऽगतानां
निमित्तमात्रं गुरवो भवन्ति ॥४८॥

छात्रेषु सर्वाग्रतया च सोऽयं
परीक्षकाच्छ्रीविजयाख्यसेनात् ।
सुपुस्तमष्टाङ्गहृदाख्यमाप
सर्वत्र संमानमयन्ति भव्याः ॥४९॥

दिनेषु चामीषु जनैरनेकैः
पुनर्गृहस्थाश्रमधारणाय ।
कृतः स यत्नोऽत्र बभूव मोघो
न यान्ति सन्तो विषयाभिषङ्गम् ॥४७॥
स साधुवेषेण हि लोकसेवां
कर्तुं व्रती दादुदयालुधर्मम् ।
सदा सिषेवे गुरुणोपदिष्टं
धीराः स्वधर्मान्न परिच्यवन्ते ॥४८॥
सर्वाणि सांख्यादिकदर्शनानि
भव्यानि काव्यानि कथाश्च सर्वाः ।
गुरोर्गृहानेत्य विदाम्बभूव
मेधाविनां कोऽविषयो गुणोऽस्ति ॥४९॥
एषोऽब्दयुग्मेन महान्मनीषी
भिषक्परीक्षाम्बुधिमुत्ततार ।
सुखेन, सर्वप्रथमः प्रशस्यां
न क्वापि सन्तो वितथा भवन्ति ॥५०॥
तुष्टो गुरुस्तन्मतिवैभवेन
मध्येसभं साधुगिराऽभिनन्दन् ।
सम्मानमाविष्कलयाम्बभूव
संश्राव्य पद्यं शुचि भावहृद्यम् ॥५१॥
संसेवमानश्चरणौ गुरूणां
धर्म्याणि कर्माणि चकार नाना ।
लोकप्रवृत्तिं परिलक्ष्य सन्तः
शर्मोत्तरं कर्म न सन्त्यजन्ति ॥५२॥
धर्मादिहाविर्भवतोऽर्थकामौ,
इतीव हेतोर्न तु भोगबुद्ध्या ।
चिकित्सने कर्मणि सम्प्रवृत्त-
श्चिकाय चार्थाननुपङ्कलभ्यान ॥५३॥
सर्वत्र सर्वैरभिनन्द्यमानः
सोऽयं सुविख्यातिमवाप्य शुद्धाम् ।

यशो वितन्वंश्च वसुंधरायां
ज्योत्स्नाप्रसारीन्दुरिवातिरेजे ॥५४॥
विद्यालये शास्त्रिपदान्तमासी-
दध्यापनं तच्च समाप्य सोऽयम् ।
विज्ञातुमग्रेतनशास्त्रतत्त्वं
शिक्षाविभागाधिपतिं ददर्श ॥५५॥
दाक्षिण्यवान् सोऽस्य कृते महात्मा
शिक्षाधिपः कालिपदो बनर्जी ।
आचार्यकक्षां त्वरितं चुखोल
सतां विचारानुगतार्थसिद्धिः ॥५६॥
ज्वलत्प्रतापोऽयमुदारबुद्धि-
र्भिषग्वरो दादुसमाजरत्नम् ।
विवेश सर्वप्रथमोऽयमस्यां
श्रेण्यां समुच्चैः सरसीव हंसः ॥५७॥
गुरोर्निदेशादनुभावतश्च
स्वयंकृताभ्यासबलेन शीघ्रम् ।
आचार्यकक्षामतरत्सुखेन
सलीलमम्भोधिमिवाञ्जनेयः ॥५८॥
तदीयनैपुण्यगुणेन तुष्टो
गुरुः परं मोदमविन्दतास्य ।
स्थानमुच्चैःपदमाप्नुवन्तः
शिष्याः सुता निर्वृतये भवन्ति ॥५९॥
समभ्यनन्दत् स गुरुस्तमेन-
माचार्यनाम्ना मुहुराजुहाव ।
सभान्तरा पण्डिततल्लजानां
हृद्याक्षराण्येव गुरोः प्रसादः ॥६०॥
निधाय तत्रैव च हृद्यपद्यं
संप्राहिणोत्स्वपुरि कालिकायाः ।

*"यः प्राचां भिषजां विवेद महितास्तिस्रोऽपि वाः संहिताः।
साहित्यं च सधर्मशास्त्रमभितः स्वच्छन्दवाक् छन्दसि

राजे कवीनां विजयाभिधाय
न संकुचत्यन्तरुदग्रहर्षः ॥६१॥
तुर्यं परावृत्य पदं तदेव,
स प्रत्युपास्थापयदत्र पद्यम् ।
अनेन तद्भेषजरत्नमाला-
विन्यस्तमद्यापि वरीवरीति ॥६२॥
आचार्यतामेत्य स इत्थमायु-
र्वेदस्य तन्त्रं सकलं समाप्य ।
चिकित्सयाध्यापनतोऽपि लोक-
सेवां विधातुं प्रयतान्तरोऽभूत् ॥६३॥
समुल्लसद्व्याकरणप्रबोधः
साहित्यसत्काव्यरसप्रवीणः ।
विज्ञातवैद्यागमगूढमर्म्मा
सोऽयं भिषग्वाग्भटतामयासीत् ॥६४॥
गतेऽथ वर्षे गुरुमेकदाऽसा-
वुपेत्य संप्राह विभो ! मया किम् ।
समर्पणीयं गुरुदक्षिणायां
सोऽप्याह भक्तिस्तव दक्षिणैव ॥६५॥
विज्ञाय निर्बन्धपरं स चैनं
प्रोवाच भट्टो हृदि मुक्तपट्टः ।
सम्बध्य मे वैद्यकसुप्रयोगान्
क्रमाल्लिखित्वा प्रकटीकुरुष्व ॥६६॥
श्रुत्वेति तस्मिन्दिन एव तस्य
योगान्विकीर्णान् दलपट्टिकासु ।

---

लक्ष्मीरामसुधीः स एष भिषगाचार्यप्रशस्तिं वह-
न्नद्यास्मामिमरुदुत्सवेन मनसा ख्यातिं परां लम्भितः ॥"

एतदेव पद्यं स्वामिनामनिच्छायामपि
गुरोरिच्छया प्रतिगुच्छकं वाभाति ।

संचेतुमेकाग्रमना मनीषी
मुक्ताकणान् हंस इव प्रवृत्तः ॥६७॥
चिकित्सनाध्यापनधर्म्मकर्मा-
ण्यनेकशोऽयं कलयन् महात्मा ।
ग्रन्थे गुरोर्योगमणीन् विकीर्णान्
संगुम्फ्य तट्टिप्पणमुट्टङ्क ॥६८॥
साम्येव तट्टिप्पणमीक्षयित्वा
निर्वाणतामाप गुरुप्रदीपः ।
इदं द्वितीयं हृदि शल्यमासी-
दाकस्मिको देशिकविप्रयोगः ॥६९॥
आपूर्य तट्टिप्पणमेष शीघ्रं
प्रकाशयामास गुरुं समर्प्य ।
ग्रन्थः स वर्वर्ति जगत्प्रसिद्धो
गुरोरमुष्यात्र यशः सुमूर्तम् ॥७०॥
गुरौ परेतेऽस्य विधाय शिक्षा-
धीशो द्विधाऽध्यापनकार्यमार्यः ।
प्रधानमस्मै पदकं द्वितीयं
व्यदात्सहर्षं गुरुसूनवे च ॥७१॥
भट्टावतंसः स च सूरिगङ्गा-
धरो बभूवोद्भट एव विद्वान् ।
भैषज्यनिष्णातमतिर्मृगेन्द्र
इवाबभौ वादिगजच्छटायौ ॥७२॥
अध्यास्य पीठं स्वगुरोर्यशस्वी
छात्राँस्तथाऽध्यापयितुं प्रवृत्तः ।
आयुष्यवेदस्य मुखे मुमूर्षो-
र्यथा सुबाढं दशनायितं तैः ॥७३॥
इत्येष वैद्यो जयपत्तनस्य
शोभाविधायी मणिवन्मनुष्यैः ।
अमन्यतात्यन्तमुदग्रधैर्याः
सन्तो जगद्भास्वरभूषणानि ॥७४॥

स्वामिमहोदयस्य
आचार्यपरीक्षोत्तरणोपलक्ष्ये—



रा० वै० कविमूर्द्धन्यभट्टश्रीकृष्णरामशर्माणः स्वामिगुरवः ( मध्ये वेत्रासनस्थाः )
अग्रिमपङ्क्तौ उपविष्टाः—रा० वै० भट्टगङ्गाधरशास्त्री (स्वर्गतः) स्वामिमहोदयः रा० वै० माधवप्रसादशर्मा स्वर्गतो भिषगाचार्यः
रा० वै० श्यामलालशर्मा स्वर्गतः शिशु-कलाधरभट्टः श्रीकृष्णशर्मणां मध्यमपुत्रः

वै० यं० अजमेर

अतः परं चास्य जवाच्चलन्ती
लोके चिकित्साति चमत्चकार ।
रुग्णा अहंपूर्विकयैव वृत्त्या
सहस्रशोऽस्याङ्घ्रियुगं स्म यान्ति ॥७५॥

एकोऽपि रोगी समुपेत्य रोगी
नाभूदमुष्यात्यवदातमूर्त्तिम् ।
गङ्गेव साऽऽरादपि दर्शनेन
संस्पर्शनेनापि पुनाति लोकान् ॥७६॥

देशे विदेशेऽपि स आतुराणां
रोगापनोदार्थमितो ध्रुवं द्यः ।
सदाऽऽययौ कान्तयशो विकीर्य
संगृह्य चार्थान् स्वपदं प्रपन्नान् ॥७७॥

स इत्थमल्पीयसि काल एव
धन्यश्च मान्यश्च भवन् महात्मा ।
शरेषु-नन्दावनिवत्सरादौ
तीर्थाटनायापि मतिं चकार ॥७८॥

यथावकाशं प्रतिवर्षमेष
हर्षेण साकं शुभतीर्थयात्राम् ।
कर्त्तुं प्रवृत्तो भिषजां वरिष्ठः
श्रेयःप्रवृत्त्यै प्रभवन्ति सन्तः ॥७९॥

महात्मनां दर्शनतीर्थराज-
स्नानादिना संचितपुण्यकर्म्मा ।
ततः प्रयातः पुरि कालिकायाः
जीवो यथा विश्वमनु प्रविष्टः ॥८०॥

श्रीद्वारिकानाथकवेः समीपेऽ-
वसच्चिकित्सानुभवप्रवृद्ध्यै ।
विशेषमुद्बोधयितुं निजेन
सहानयद् रोगिचिकित्सनायाम् ॥८१॥

मारीव्यथाभूत् पुरि कलिकायां
प्रवेगपूर्णेति स चात्र काले ।
भैषज्ययोगेन सहस्रशो नॄन्
दयालुवृत्त्याऽनुदिनं ररक्ष ॥८२॥

येऽनेन गुप्ता मनुजाः कुमृत्यो-
स्तेऽन्ये च सर्वेऽपि च तत्र लोकाः ।
धन्यं तमेतं कलितोपकारं
सुरा इव श्रीहरिमाशशंसुः ॥८३॥

प्रयोगसाफल्यगुणप्रकर्षौ
श्रीद्वारिकानाथ इहावधार्य ।
अमन्यतैनं किल वैद्यरत्नं
पदं तदस्मै मुदितोप्ययच्छत् ॥८४॥

विभूषितोऽसौ पदकेन तेन
भृशं दिदीपे पुरि कालिकायाः ।
प्रभाविशेषोज्ज्वलरत्नयोगा-
दलंकृतिः शोधितकाञ्चनेव ॥८५॥

हर्षप्रकर्षेण समुष्य वर्षं
संसेवमानोऽत्र जनानजस्रम् ।
वैद्यत्वमर्म्माणि गुणान् विशेषान्
चिकित्सनेऽप्यप्रतिमत्वमाप ॥८६॥

गुरुं समापृच्छ्य ततो गृहान्स्वान्
प्रति प्रयानेष गुणोज्ज्वलश्रीः ।
उपेत्य काशीं प्रभुविश्वनाथं
ददर्श भक्त्या नमितोत्तमाङ्गः ॥८७॥

अन्तेसदा श्रीकविराजगङ्गा-
धरस्य तत्रादृत एष साधुः ।
शास्त्रीयचर्चासु समश्रितासु
तस्मिन् प्रभावोऽस्य कलं चिखेल ॥८८॥

परेशनाथोऽत्र बुधे प्रसद्य
प्रमाणपत्रेण समं दुरापाम् ।
समर्पयामास स जल्पकल्प-
द्रुमाभिधानां चरकस्य टीकाम् ॥८९॥

मूर्त्तं स्ववैदुष्यफलं तदैत-
दादाय भक्त्या स्वगृहानयासीत् ।
स्वाम्येष दादूपदभक्तिनिष्ठो
जनुर्भुवेऽलं स्पृहयन्ति सन्तः ॥९०॥

इत्थं प्राप्य यशः सुधोज्ज्वलमलं
पाण्डित्यजन्यं सुधीः
लक्ष्मीरामभिषङ्मणिर्जयपुरं
सम्प्राप्य सर्वादृतः ।
छात्रान् वैद्यकमर्म्मशर्म
नृपतेर्विद्यालयेऽध्यापयन् ।
लग्नो रोगमृगव्रजे कलयितुं
शार्दूलविक्रीडितम् ॥९१॥

## ❋ मध्यमोंऽशः ❋

इत्थं यशो मालतिकावदातं
समर्जयन्तं सुपुमांसमेनम् ।
विलोक्य भैषज्यकलैकविज्ञं
रुजोऽप्यशेषाः सरुजो बभूवुः ॥ १ ॥

संभूय मन्ये सकलाभिराभि-
रेतस्य वैदुष्यपरीक्षणाय ।
पुरे जयाख्ये महती विषूची
चुकोप चण्डीव रणे प्रचण्डा ॥ २ ॥

दिवा च नक्तं जयपत्तनेऽसा-
वाक्रामिकी रुङ् नितरां चिखेल ।
संवत्सरे (१९५७) सप्तशराहिचन्द्रे
दुर्व्याधकन्येव पतत्रिवृन्दे ॥ ३ ॥

इमां विषूचीकलितां कुलीलां
भिषग्वरोऽसौ कलयञ्जनेषु ।
बभूव सान्द्रः करुणारसेन
सतां कृपाकोमलमस्ति चेतः ॥ ४ ॥

तदा गदव्याकुलितान् मनुष्या-
ननेकदिव्यौषधसुप्रयोगात् ।
सोऽयं भिषग् रक्षितुमाजुघोष
विपन्नबन्धुर्भवतीह साधुः ॥ ५ ॥

रुग्णास्तदानीं तु खले कपोत-
न्यायेन साधोः सविधेऽस्य शीघ्रम् ।
नैरोग्यलाभोत्कलिका ह्यमर्त्या
धन्वन्तरिं वैद्यमिवोपसेदुः ॥ ६ ॥

चिकित्सितं प्राप महात्मनोऽस्य
तदा प्रभृत्येव विराट्स्वरूपम् ।
रोगाक्रमे दक्षमखप्रणाशे
विष्वक्प्रसारीव महेशतेजः ॥ ७ ॥

अनेहसीहैव मृतोऽस्य साधो-
र्मान्यः सखा माधवलालनामा ।
आकस्मिकीयं घटनाऽस्य चित्त-
मक्षोभयत् "कालकला न लक्ष्या" ॥८॥

संस्तभ्य शोकं स महाशयोऽसौ
कर्त्तव्यमग्रेतनमाकलय्य ।
चिकित्सनाध्यापनकर्म्मणाऽऽयु-
र्वेदोद्धृतिं कर्त्तुमलं ससज्ज ॥ ९ ॥

श्रीरप्यमुष्मिन् निजकाश्रयाहान्
दृष्ट्वा गुणान् रागवती बभूव ।
यतोऽस्य गेहे धनधान्यसम्पद्
गुणावकृष्टेव समाविवेश ॥१०॥

गतेऽब्दयुग्मेऽथ पथाऽमुनैव
श्रीद्वारिकानाथगुरुः प्रगच्छन् ।
चिकित्सितुं वीरमहीन्द्रपुत्रं
संप्रापितो भक्तिभरेण गेहम् ॥११॥

सोऽतीत्य भूभृत्सचिवानुरोध-
मप्यातिथेयीमुररीचकार ।

अस्यैव साधोः किल भावपूतां
महात्मनां तोषकरी न सम्पत् ॥१२॥
एषोऽपि वैद्यस्तमुदारभावैः
सम्पूज्य तस्याशिषमाससाद ।
सुशीलशिष्या गुरुपादपद्म-
समर्चनेनैव भवन्ति धन्याः ॥१३॥
प्रसह्य स श्रीगुरुराशिषोऽस्मिन्
शुभाः अयोज्योदयपत्तनाख्यम् ।
पुरं प्रतस्थे नृपचक्रचूडा-
मणेः कुमारस्य चिकित्सनार्थं ॥१४॥
इमं तदाशीःप्रभवादिवारं
दिग्भ्यो विदिग्भ्यश्च महामहान्तः ।
आढ्या नृपा अह्वायितुं प्रवृत्ताः
भक्ता इवार्चा भगवन्तमिष्टम् ॥१५॥
एषोऽप्यमीषां गदपीडितानां
स्वास्थ्यप्रदानेन समर्जितश्रीः ।
वर्धिष्णुतेजा इव तिग्मरश्मि-
र्भूमण्डलं चारु चमच्चकार ॥१६॥
एवं समाप्तेऽब्दयुगेऽङ्गरत्नो
ज्येष्ठोऽस्य गोवर्धनदाससाधुः ।
ज्ञात्वेव सर्वज्ञमपेनमाप्तो
लोकान्तरं, को न मृतोऽत्र जन्मी ॥१७॥
आसीदमुष्मिन् भिषजोऽस्य भक्ति-
र्ज्येष्ठे गुणश्रेष्ठतया वरिष्ठे ।
अतोऽस्य दाहादिकृतीः समस्ता
गुरोरिवाग्र्यं विदधे विधानात् ॥१८॥
श्रीमानुदाराशय एष साधु-
र्ज्येष्ठं तमुद्दिश्य ददौ द्विजेभ्यः ।
दानानि नानाविधभोजनानि
पुण्यं परेतस्य सुखोपलब्ध्यै ॥१९॥

कालक्रमात् साम्प्रतमस्य गेहे
समस्तसम्पद्व्यवहारकाणाम् ।
निभालनाऽप्यापतिता, समर्थ-
धुर्या न कार्ये कलयन्ति मानम् ॥२०॥
गृहस्य सम्पद्व्यवहारकार्य-
प्रणालिकाऽनेन तथा प्रणीता ।
यथाऽधुना सा व्ययमागमं च
संसूचयन्ती लिपितो विभाति ॥२१॥
ऋणप्रदानं स्वगुरोः पुराण-
मुद्यानकूपस्य सुधारणादि ।
कृत्वा गृहेऽसौ श्रिय आगताया
दास्या इवोत्पोषणमेव चक्रे ॥२२॥
शुभ्रं यशो दिक्षु विदिक्षु साधो-
र्विस्तारयन्तोऽन्तसदोऽस्य नाना ।
आयुष्यवेदप्रतिमानभूता
वर्षन्ति नैरुज्यसुधां स्म लोके ॥२३॥
द्विसप्तनन्देन्दुमितेऽथ वर्षे
हर्षप्रकर्षेण निमन्त्रितोऽसौ ।
वङ्गैर्भिषग्भिः समभून्महात्मा
सम्मेलनस्याधिपतित्वमाप्तुम् ॥२४॥
आमन्त्रणं प्राप्य मनस्विमौलि-
मालायितोऽयं सह शिष्यवर्यैः ।
पुरं प्रतस्थे किल कालिकायाः
कार्ये सतां श्रेयसि को विलम्बः ॥२५॥
निशम्य चैनं नगरोपकण्ठे
वङ्गाः समुद्धाटितसत्त्वमाङ्गाः ।
प्रत्याययुः स्वागतमुद्गिरन्त-
स्तुङ्गास्तरङ्गा इव चन्द्रमब्धेः ॥२६॥
सुसत्कृतोऽसौ महनीयमूर्ति-
र्वङ्गैर्भिषग्भिर्महितैर्महौजाः ।

धन्वन्तरेरासनसंनिविष्टः
श्रीशङ्कराचार्य इवोच्चकासे ॥२७॥
व्याख्यानलग्नोऽप्ययमुदारभाषी
ह्यष्टाङ्गमायुः प्रवदन् सभायाम् ।
वाचा रसप्राञ्जलया विभावै-
रुल्लासिभिर्वाग्भटतां प्रपेदे ॥२८॥
तेजोभरोल्लासितयाऽग्निवेशः
श्रुतावबोधात् किल सुश्रुतोऽसौ ।
अदृश्यतास्यां समितौ भिषग्भि-
रेकोऽपि नानेव गुणी महेशः ॥२९॥
ये वङ्गवैद्या निजभूमिभागात्
परं न वैद्यं किल मन्वते स्म ।
तानद्य वैदुष्यकलां प्रदर्श्य
सर्वानयं प्रह्वमुखांश्चकार ॥३०॥
केचित् सुहृद्भावमुपानयन्तः
केऽप्यर्चनीयं च परे नमस्यम् ।
स्तुत्यं च सेव्यं च विदन्ति चान्ये
अहो विभिन्ना हृदयस्य भावाः ॥३१॥
इत्यात्मवैदुष्यसमुद्रिताङ्गान्
संतोष्य वङ्गान् दिवसत्रयेण ।
जयाभिधानां निजदेशभूमिं
प्रत्यागतोऽसौ विजयीव वीरः ॥३२॥
वर्षद्वयानन्तरमस्य साधो-
र्गुरोः कनीयान् गुरुतुल्यमान्यः ।
अस्योन्नतिं श्रीगुरवेभिधातु-
मिवोद्गतः स्वर्गनमोहनाख्यः ॥३३॥
पूज्यानुरागस्य सुसम्पदां च
वदान्यताया यशसः प्रसिद्धेः ।
समं प्रशस्यां कृतवान् महात्मा
संस्कारमन्त्यां मनमोहनस्य ॥३४॥
साधून् द्विजान्त्सद्व्यवहारिणोऽपि
छात्राननेकान्त्समतोषयच्च ।
भोज्यैश्च वस्त्रैरपि दक्षिणाभिः
सुदुर्निवारः खलु लोकचारः ॥३५॥
इत्थं स लोकोचितमप्यनेकं
कुर्वन् स्वकर्तव्यमलौकिकं च ।
उपैति धीमानुभयत्र सिद्धिं
सतां किलैकत्र न पक्षपातः ॥३६॥
कालक्रमेणाथ रुजां प्रवृत्तिं
प्रवर्द्धमानां पुनरप्यवेक्ष्य ।
नव्यां चिकित्सामपि चार्थसाध्यां
दध्याविति स्वीयमनस्युपायम् ॥३७॥
दीना अनेके मनुजा गदार्त्ता
विनौषधं चापि विना चिकित्साम् ।
म्रियन्त एते बत रक्षणीयाः
प्राणोपसन्त्राणनमस्ति धर्मः ॥३८॥
काप्यत्र मध्येनगरं चिकित्सा-
कृते भवेत्सार्वजनीनसंस्था ।
यस्यां च दीनार्त्तिनिवारणाय
शुभौषधीभिर्भिषजो यतन्ताम् ॥३९॥
अस्मिन् विधौ कंचिदहो सहायं
कुर्वे स्वकीयं सुहृदं सयोगम् ।
संश्रूयते नीतिरसौ प्रसिद्धा
नैकेन चक्रेण गती रथस्य ॥४०॥
इत्थं विनिध्याय महामनस्वी
स्वकीयमित्रेषु परं प्रधानम् ।
श्यामाभिधानं परिपूर्णकामं
ह्यभिन्नचित्तं मनसा जगाम ॥४१॥
एष प्रसिद्धः खलु राजवैद्य-
श्चूडामणिः सर्वचिकित्सकानाम् ।



कलिकाताधिविष्ट—नि० भा० षष्ठवैद्य-सम्मेलने समागतानां विविधप्रान्तीयवैद्यवराणां मध्यगतः
सभापतिपदे श्री ल० स्वामिमहोदयः

श्रीस्वामिनां परमसुहृदः



वैद्यरत्न स्वर्गीय कविराज श्री० योगीन्द्रनाथसेन एम० ए० महाभागाः, कलिकाता



वैद्यरत्न आयुर्वेदविद्याप्रचारक-सुप्रसिद्ध स्वर्गीय डी० गोपालाचार्लुमहाभागाः, मद्रास

आयुर्वेदमार्तण्ड–वैद्यरत्न–

# पं० डी० श्रीगोपालाचार्लुमहाभागाः ।

( ले० आयुर्वेदभूषणः पं० लक्ष्मीनारायणशर्मा, अजमेर )

महाभागोऽयमासन्नचतुःषष्टेभ्यो वर्षेभ्यः पूर्वं 'मुसलीबन्दर'नाम्नि नगरे सुप्रतिष्ठितश्रौतब्राह्मण-वंशे जन्म लब्धवान् । जन्मनः सप्तमे वर्षे समारब्धविद्याध्ययनः, दशमे च कृतोपनयनः, पञ्चदशवर्षवया एव पर्यणैषीत् । अथासन्नपञ्चशतेभ्यो वर्षेभ्यः कुलपरम्पराप्राप्तं वैद्यकं स्वपितुरेवाध्येतुमारब्धमनेन, किन्तु कुशाग्रीयधियोऽस्य नैतदलंबुद्धिजनकमभूत्, आसीच्चास्य 'मैसूर' नगरस्थ आयुर्वेदविद्यालये पिपठिषा, पितृभ्यां प्रतिषिद्धोऽप्ययं परिणमितवांश्च तामचिरेणैव कार्यरूपेण । अनन्तरमात्मनः प्रौढशिक्षासतृष्णत्वं तदर्थमेवैतद्विद्यालयप्रवेशं च सूचितोऽप्यस्य तातः, सम्पन्नोऽपि, अर्थसाहाय्यशून्योऽयं प्रत्यावर्त्स्यतीति संचिन्त्य याचितं प्रतिमासं रूप्यकदशकदानमपि नान्वमन्यत । किन्तु 'क इप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्' इति कविकुलचूडामणेरुक्तिं चरितार्थयन्नयमनुद्विग्नः कुतश्चन रामानुजसंप्रदायसंबद्धान्मन्दिराल्लभ्यं चिञ्चाजलतण्डुलौदनमात्रमेकवारमेवाभ्यवहरन् साध्यसिद्धयेऽध्ययनतत्परतामयासीत् । एवंविधेनास्य कष्टसहिष्णुत्वेन विद्यालयीयोऽध्यापकवर्गोऽतितराममतुष्यत्, अभ्यलष्यच्चास्य क्रमिकामुन्नतिम् ।

वर्षचतुष्टयमस्मिन् विद्यालयेऽधीत्यैनेन महाभागेन 'बंगलोर' नगरे चिकित्साकार्यमारब्धम्, छात्रांश्च पाठयितुं प्रक्रान्तम् । चिकित्सायाम् 'आर्ताः पुत्रवदुपाचरणीयाः' इति सिद्धान्तवाक्यमासीदस्यादर्शः, प्रापच्च तदनुसरणेनासौ तत्रत्यजनतायां परां प्रसिद्धिम् । अथ वर्षमात्र एवातीतप्राये तत्रायातेन सुगृहीतनामधेयेन तात्कालिकप्रधानन्यायाधिकारिणा ( चीफ़ जस्टिस ) श्रीसुब्रह्मण्यमहोदयेनास्य कार्यमवलोक्य संतुष्यत्स्वान्तेन महाभागोऽयमत्याग्रहेण 'मद्रास' नगरे चिकित्सां व्यवसातुमनुरुद्धः । नातिचिरेण तत्र प्रयातस्यास्याधिकारे 'कन्यकापरमेश्वरीदेवस्थानौषधालय'स्योद्घाटनं तस्यैव महाभागस्य प्रयत्नेनोपनतम्, एनेन चौषधालयोऽयं चिकित्साकौशलेन तथा ख्यातिं नीतो यथा रोगिणां पञ्चशती प्रतिदिनं तत्रोल्लाघत्वप्राप्तये समायान्त्यदृश्यत, पाश्चात्त्यभिषजश्च तद्गुणाकृष्टा अभूवन् । इतः पूर्वं मद्रासीया आङ्गलभिषज आयुर्वेदीयां पद्धतिमवैज्ञानिकीं मन्वाना अपि नातः परं तथाऽभिधातुमपारयन् । अत्रापि छात्राध्यापनं लक्ष्यलक्षणपुरस्सरं यथापूर्वं प्रक्रान्तमेवासीत् । पं० दुरेस्वामी आयंगर–पं० सुब्रह्मण्य ऐयरप्रभृतयस्तत्र सर्वप्रथममस्यान्तेवासित्वमयासुः । तदानीमायुर्वेदशास्त्रीयः पाठ्यक्रमो वर्षचतुष्टयसमाप्य आसीत्, परीक्षकाश्च वङ्ग–महाराष्ट्र–जयपुरादिदेशस्थाः सुप्रसिद्धा वैद्यविद्वांस आसन् ।

अथैवं मद्रासनगरे तादृशमायुर्वेदप्रचारमसहमानैः कतिभिश्चिद् वैद्यम्मन्यैः स्वार्थहानिभीतैस्तथा प्रयतितं यथाऽस्य कन्यकापरमेश्वरी-औषधालयात्सम्बन्धविच्छेदो जातः, किन्तु 'न हि कस्तूरिकामोदः शपथेन विभाव्यते' इति न्यायेन सत्यपि सुमहति विरोधेऽस्य यशःसौरभं न केवलं मद्रासप्रान्त एव प्रसृतम्, प्रत्युत राजपूताना–युक्तप्रान्त–बर्मा–लङ्का–पञ्जाबप्रभृतिप्रान्तेभ्योऽप्यन्तेवासिसमुदायः शिक्षार्थमशिश्रियदेनम् ।

इत्थं वत्सरदशकं निरन्तरं प्रयतमानोऽयं महाभागः स्वीयं गृह्यविद्यालयमेवोन्नमय्य 'मद्रास-आयुर्वेदिक- कालेज' रूपेण परिणामितवान्, 'मद्रास-आयुर्वेदप्रचारणीं' नाम काञ्चन समितिं च राजपरिचितां ( Registered) विधाय तं तदधीनं कृतवान् । पाठ्यक्रमे च न केवलमायुर्वेदीयग्रन्थानेव किन्तु आङ्गलग्रन्थानपि नियमितवान्, येन च्छात्रैरुभयविधमपि नैपुण्यमुपलभ्येत । छात्राणां प्रायोगिकशिक्षार्थं च तत्र धर्मार्थ-चिकित्सालयमपि स्थापितवान्, निरूढवांश्चास्य विद्यालयस्य भूयसांशेन व्ययभारम् । विद्यालयेऽस्मिन् वैद्यपञ्चकम्, डाक्टरत्रयम्, साइन्साध्यापकश्चेति वैतनिकाः, वैद्यत्रयम्, डा० लक्ष्मीपति-महाशयश्चेत्यवैतानिकाः कार्यकर्तार आसन् । विद्यालयमेनं सुदृढीकर्त्तुकामेनैनेन महाभागेन पञ्चविंशतिं वर्षाणि यावत् केवलं फलानि पयश्चाभ्यवहरता तपः प्रारब्धम्, सफलीकृतं च तत् मद्रासनगरे प्रत्यक्ष-शारीरशिक्षासहितं पौरस्त्यपाश्चात्त्योभयविद्याशिक्षाप्रदं विद्यालयमाविष्कुर्वता ।

महाभागस्यास्य स्थायी वैद्यकव्यवसायोऽप्यतिशायितामुन्नतिमापन् । एतन्निर्मितानि 'हैमादि-पानक' 'कालरा मिक्श्चर' 'प्लेग-मिक्श्चर'—'अमृतामलकतैला'दीन्यौषधानि तु म्यूनिसिपिलवोर्ड- पोस्ट-आफिसप्रभृतिष्वपि 'कुनैन' वदक्रीयन्त । औषधानि चैतन्निर्मितानि विशुद्धायुर्वेदीयान्यासन्, न मिश्रितानि । अत एवायमायुर्वेदसंमेलनेन 'आयुर्वेदमार्त्तण्ड'पदवीप्रदानेन, बम्बईनगरीये संमेलने सभापतित्वेन, भारतीयसाम्राज्यसदस्यै ( Government ) श्च 'वैद्यरत्न'पदवीप्रदानेन सममान्यत । मैसूर-ट्रावनकोर-पीठापुरप्रभृतिमहाराजानां चैष पारिवारिकवैद्य आसीत् । आयुर्वेदविद्यापीठस्याप्यनेन वर्षसप्तकं यावद् व्ययभूयिष्ठा सेवा विहिता ।

१९१४ तमे ईसवीये वत्सरे मद्रास-मेडिकल-सदसि समुपस्थितस्यायुर्वेदावैज्ञानिकत्वसाधकस्य प्रश्नस्य महाभागेनैनेन न केवलमुग्रो विरोध एव विहितः, किन्तु स्वीयेनानुभवपूर्णेन व्यवसायेन तस्य निस्सारताऽपि दर्शिता । अथास्यैव प्रयत्नेन मद्रासराज्येन मेडिकल-कमीशनं स्थापितम्, येन भारतीयवैद्यसमुदायस्य साक्ष्याणि गृहीत्वा तथा निर्णयः समुपस्थापितो यथा सीलोनद्वीपे आयुर्वेदीयविद्यालय उद्घाटितोऽभूद्, यत्र चास्यैव महाभागस्य प्रियशिष्यः डा० श्रीनिवासाचार्यः प्रिन्सिपलत्वमग्रासीत्, मद्रासराज्येन चायुर्वेद-प्रचारे यथाशक्ति प्रयतितम् ।

चरकसुश्रुतवाग्भट्टमाधवनिदानादीनाम्बहूनामायुर्वेदीयग्रन्थरत्नानामान्ध्रभाषानुवादं विधाय सर्वेऽपि ग्रन्थाः प्रकाशितास्तेन महात्मना । स्वकीये आयुर्वेदपुस्तकालये ताडपत्रेषु लिखितानि प्राचीनपुस्तकानि च सहस्राधिकानि संगृहीतानि ।

आयुर्वेदशिक्षायाः सुमहान् प्रचारको दीनजनजीवातुरन्तेवासिनां पितेव हितं नियोजयिता महाभागोऽयमात्मनो देहावसानेऽपि निजतनयमयोग्यं मन्वानः स्वीयौषधालयमायुर्वेदाचार्य एन्. माधवमिनन् महाशयाय स्वीयानुजाय च समर्प्य, स्वोपार्जितां सम्पदं चायुर्वेदसेवार्थं प्रदाय वैकुण्ठवाससुखमन्वभवत् ।

सोयमस्य महाभागस्यासद्गुरुवरस्य संक्षिप्तः परिचयः । विस्तृतस्तु यथावकाशमग्रे प्रकाशयिष्यत इत्यलं पल्लवितेन ।

---

श्यामोऽभिरामो निखिलप्रजानां
मान्यो यदूनामिव नन्दसूनुः ॥४२॥
सोऽयं भिषग्राडुपकारकर्म-
ण्यस्मिन् भवेन्मे सुसहायकश्चेत् ।
फलेदवश्यं शुभमीहितं मे
किं तद्वदैक्ये सति नैव सिद्ध्येत् ॥४३॥
उपेत्य चैनं महितं महीयान्
समीहितं स्वं कथयाम्बभूव ।
यथा स्वकर्त्तव्यसमर्थराज-
मेकाकिनं मन्त्रितवान् मुकुन्दः ॥४४॥
निशम्य सोऽप्यस्य परोपकार-
कार्यं तदेतत् प्रससाद चित्ते ।
समभ्यनन्दच्च सखायमंसे
मुहुः समास्फाल्य करं स्वकीयम् ॥४५॥
प्रोवाच चैनं स चिकित्सकानां
चूडामणिर्वैद्यमणिं प्रमोदात् ।
समीहितद्रुर्भवदीय एष
यशः फलिष्यत्यचिराय शुभ्रम् ॥४६॥
इतीरयित्वा स सखीन् स्वकीयान्
राज्याधिकर्त्तृ न् क्षितिपाननेकान् ।
वैश्यानमुष्मिन्नथयल्लकादीन्
नियोजयामास पवित्रकार्ये ॥४७॥
तदन्वितः श्यामभिषग्वरिष्ठः
श्रीस्वामिना सार्धमिदं सुकृत्यम् ।
निर्वोढुमर्थान् प्रचुरान्विचिन्वन्
धनञ्जयस्येव ययावभिख्याम् ॥४८॥
इत्थं समावेशितमित्रवर्गः
प्रभावसम्पादितभूरिवित्तः ।
क्रीत्वा विशालं भवनं च तस्मिन्
अतिष्ठिपत् सार्वजनीनसंस्थाम् ॥४९॥

रसस्वराहीन्दुमिते (१९७६) सुवर्षे
हर्षेण पूर्णोऽयमुदग्रभाग्यः ।
आषाढशुक्ले द्वितयेह्नि धन्व-
न्तर्यौषधागार इति प्रसिद्धाम् ॥५०॥ युग्मम्
कायेन वाचा मनसा धनेन
संस्थाप्य सुस्वास्थ्यविधानसंस्थाम् ।
बभौ प्रसन्नोऽयमुदारदीप्ति-
र्धर्मो यथा पूरितराजसूयः ॥५१॥
संस्थेयमद्यापि पुरस्य मध्ये
नीरोगयन्ती शतशो गदार्त्तान् ।
विभाति वैद्यानपि वर्धयन्ती
मूर्त्ताऽस्य साधोरिव लोकसेवा ॥५२॥
इत्यादि सम्पाद्य विशेषकार्य-
मार्यः कदाचित् स्वगृहे विराजन् ।
स्वके समाजे विचचार भावैः
सतां कवीनां प्रतिभा विमानम् ॥५३॥
ददर्श कांश्चित् किल नाम साधू-
नन्यान् गृहस्थानिव संग्रहाढ्यान् ।
अशिक्षितान् प्राय उपोढरागान्
विषीदतो दंभपराननेकान् ॥५४॥
विचारयामास मनस्युदारो
विद्वानसौ साधुरहो किलामी ।
अधीत्य विद्यामुपदेशकार्यं
कुर्युस्तदा देश उदञ्चितः स्यात् ॥५५॥
महात्मभिर्दादुपदारविन्दै-
रिहावतीर्योद्धृत एष देशः ।
तत्वोपदेशैरपि धर्मबोधै-
र्नानाचमत्कारभरैश्च कृत्यैः ॥५६॥
तेषां हि कल्याणकरी सुवाणी
संपूज्यते मूर्तिरिवेश्वरस्य ।

परं न विज्ञायत एभिरेषाऽ-
प्यर्थादहो दैवगतिर्विचित्रा ॥५७॥
सोऽयं समाजेऽत्र हि दुष्प्रभावो
विद्याप्रचारेण विना न हार्यः।
कृते ततो दादुपथानुगानां
स्थाप्यः सुविद्यालयको मयैकः॥५८॥
इत्थं विनिध्याय महाशयोऽयं
स्वसाधुसम्मेलनदर्शनार्थी।
अभ्यर्चितुं दादुपथं च भक्त्या
नारायणाख्यं पुरमाससाद॥५९॥
स तत्र नानापटमण्डपेषु
विराजमानान् खिलसाधुवर्यान्।
एकत्र कृत्वा समयप्रभावं
विद्यामहत्त्वं शुचि धर्मतत्त्वम् ॥६०॥
समादिशन् मेघगभीरवाचा
साधूचितं कर्म विमर्शयंश्च।
प्रभावयामास सतः समस्तान्
भवन्ति मान्या ह्यनुभाववन्तः॥६१॥ युग्मम्
प्रस्तुत्य विद्यालयमेकमेषु
चित्वा यथाशक्ति धनं तथैभ्यः।
ऊनं स्वमापूर्य निजार्थकोषा-
द्विद्यालयं स्थापयितुं समागात् ॥६२॥
जयं पुरं प्राप्य महानुभावो
वैद्येषु मार्त्तण्डपदाभिधेयः।
साधूंश्च मुख्यानुपहूय सर्वा-
नुद्यानमध्ये रतिरामसाधोः ॥६३॥
द्विसप्तनन्देन्दुमिते (१९७७)ऽब्दकेऽसौ
विद्यालयं दादुमतानुगानाम्।
संस्थापयामास शुभे मुहूर्त्ते
कालोप्तबीजानि हि संफलन्ति॥६४॥ युग्मम्

उद्घाटितोऽनेन महाशयेन
विद्यालयोऽसौ जयपत्तनान्ते।
विभाति राजोपवनस्य पृष्ठे
गुरोरिवादेशगृहं दिवौंसे ॥६५॥
सुसाधवो माणवका अमुष्मिन्
पठन्ति वै दादुमतानुयाताः।
वसन्ति तत्रैव च भुञ्जतेऽन्नं
धरन्ति वासांसि च देशजानि ॥६६॥
स इत्थमासाद्य निजाभिलाषं
लोकोद्धृतेरेकनिदानमत्र।
निपाय्य पीयूषममर्त्यवृन्दं
तीर्णप्रतिज्ञो हरिवद् रराज ॥६७॥
तमद्य विद्यालयमेकसाधु-
र्महामना मंगलदासनामा।
शिष्यो ऽस्य वैद्यप्रवरस्य बाला-
नध्यापयन् पाति कृताधिपत्यः ॥६८॥
इत्याद्यनेकानि नवोपकार-
कर्माणि शर्माण्यपि साधयंश्च।
अध्यापयंश्छात्रगणांश्च रुग्णां-
श्चिकित्सयन् शं चिनुते बुधोऽसौ ॥६९॥
भैषज्यतन्त्रे सफलप्रयोगः
समस्तदेशीयभिषक्समित्या।
वैद्येषु मार्त्तण्डपदं प्रपेदे
सतां हि सर्वत्र समर्चनानि ॥७०॥
अद्यापि सेवां कुरुतेऽयमायु-
र्वेदे महामण्डलकस्य तस्य।
परीक्षणाद्यैरपि रक्षणाद्यैः
सन्तः कृतं जातु न विस्मरन्ति ॥७१॥
काले क्वचिन्मोहमयीं प्रयातः
पुरीमसौ दादुसमाजरत्नम्।

वैद्यः समर्च्यो बहुधा भिषग्भि-
रन्यैश्च धन्यैर्मनुजैरवाप ॥७२॥
तत्रैव लेभे प्रभुरामविद्या-
लयप्रबन्धानुमतैः सुवैद्यैः।
वैदुष्यमुग्धैश्चरितार्थप्राणा-
चार्यं पदं सत्कृतिपूर्णदत्तम् ॥७३॥
कुर्वन्ननेकानि सुशर्मकर्म्मा-
ण्यतीव विख्यातिमवाप देशे।
पीयूषपाणिः सुचिकित्सनायां
मान्योऽस्त्यथर्वेव महामहर्षिः ॥७४॥

## उत्तरांऽशः।

मद्रासकमीशनसाक्ष्यम्।

कालक्रमादत्र कलेः प्रभावाद्-
विद्यासु सर्वासु सनातनीषु।
सुगूढविज्ञानभरासु नव्याः
पाश्चात्यलोकाश्च न विश्वसन्ति ॥७५॥
तेन क्रमेणैव युरोपवैद्या
आयुष्यविद्यापरिलोपनाय।
आपातभद्रां स्वनवीनविद्या-
मुदश्चितुं मन्त्रितवन्त इत्थम् ॥७६॥
वैद्या इमे भारतवासिनो वै
विज्ञानशून्याः किल तन्न चैषाम्।
चिकित्सना लोकहितावहेति
तस्याः प्रचारोऽपि निरोध्य एव ॥७७॥
एवं हि मद्रासमहासभायां
प्रतुष्टुवुः सा च सदेतदर्थम्।
निर्णेतुमायोजितवत्यमीषां
बोर्डेतिनाम्नोपसदं बुधानाम् ॥७८॥
सा सच्च मद्रासकमीशनाख्या
बभ्राम वै भारतभूतलेऽत्र।
विज्ञानपूर्वोऽस्ति न वाऽस्ति चायु-
र्वेदे चिकित्सेति बुभुत्समाना ॥७९॥
क्रमादुपेता किल साऽस्य लक्ष्मी-
रामस्य साक्ष्यं समवाप्तुमत्र।
प्रश्नांश्च पप्रच्छ बहूनरालान्
दुराशयाः किं सरला भवन्ति ॥८०॥
निशम्य तानेष महामनीषी
विचार्य चायुर्विद आपदं च।
श्रीशारदायाश्चरणारविन्दं
ध्यात्वा प्रजज्वाल महोग्रधाम्ना ॥८१॥
ओजस्विपाथोदगभीरवाचा
तथा च तानुत्तरयाम्बभूव।
प्रभाविताास्तेऽपि यथा सदस्या
वैदुष्यमस्यातितरां शशंसुः ॥८२॥
व्याख्यानमेतस्य च वैद्यविद्या-
चार्येण तन्नन्दकिशोरकेण।
प्रकाशितं चास्ति सुमुद्रितं च
जिज्ञासवो वैद्यवराः पठन्तु ॥८३॥
प्रसद्य ते धन्यमिमं वदन्तो
भक्ता इवास्यात्र बभूवुरेते।
गताश्च मद्रासकमीशनस्य
सर्वे सदस्या निजमद्राज्यम् ॥८४॥
नभोऽष्टनन्दावनिवत्सरेऽसौ (१९८०)
सभाऽत्र मद्रासकमीशनस्य।
निपीय वैद्येन्दुमुखात्स्रवन्तीं
विज्ञानपीयूषझरीं शशाम ॥८५॥

## लङ्कायात्रा।

अथैकदा भारतवर्षवैद्यैः
सम्मेलनार्थं समवेत्य लङ्काम्।

निमन्त्रितो नैषधदिवाकरोऽयं
प्रयातुकामो मनसीति दध्यौ ॥८६॥
अदृष्टपूर्वो बहुलप्रशंसो
देशोऽयमास्ते रघुनाथपादैः ।
पूतावनिर्बद्धमहाम्बुराशि-
रवश्यदृश्योऽस्ति सुतीर्थरत्नम् ॥८७॥
निर्धार्य चेत्थं स रिपुर्गदानां
शिष्यैरनेकैः सह संप्रतस्थे ।
रामेश्वरं द्रष्टुमना मनीषी
तीर्थप्रियाः सन्त इति प्रसिद्धम् ॥८८॥
धराष्टनन्दाहि (१९८१)मितेऽब्दकेऽसौ
वैद्यावतंसोऽब्जकलावतंसम् ।
महोदधिप्रान्तमुपेत्य लक्ष्मी-
रामो हि रामेश्वरमुद्ददर्श ॥८९॥
द्वीपं च लङ्काभिधमीक्षमाणो
वैद्यैश्च तत्रत्यजनैरनेकैः ।
मिलन्महात्माऽयमवाप तोष-
मुत्कृष्टपुण्येन मिलन्ति सन्तः ॥९०॥
शिष्यैः समेतैः समितौ समेत-
मेनं निशाम्यात्र समस्तसभ्याः ।
छात्रैः समं राजसदि प्रविष्टं
वैद्यं दिवोदासमिवावजग्मुः ॥९१॥
इति प्रतापं स्वमुदग्रमेव
आस्तीर्य लङ्कां परितोऽगदंकृत् ।
मार्गानुयातानमरांश्च तीर्था-
न्यासेवमानः स्वगृहानवासः ॥९२॥

## बुन्दीतः स्वर्णलाभः ।

आकर्ण्य पीयूषकरत्वमस्य
रसौषधादीन् सफलप्रयोगान् ।
मातुः स्वकायाः सुचिकित्सनायै
बुन्दीपुरेन्द्रोऽप्यमुमाजुहाव ॥९३॥
आमन्त्रितोऽनेन च सानुरोधं
बुन्दीपुरीं प्राप्य स भाग्यशाली ।
चिकित्सया मातरमस्य शीघ्रं
चकार नैरोग्यवतीं सुहृष्टाम् ॥९४॥
तस्यास्य साधोः सफलप्रयोग-
मसाध्यरोगेषु समीक्ष्य राजा ।
हिरण्यसद्भूषणधारणेन
पादारविन्दं समलंचकार ॥९५॥
सम्पूजितः क्षौमपटैश्च वित्तैः
फलैश्च पुष्पैरपि सत्कृतोऽसौ ।
राज्ञा च धन्वन्तरिवन्मतोऽभूत्
सर्वत्र विद्वाँल्लभतेऽर्चनानि ॥९६॥

## बीकानेरनरेशचिकित्सा ।

पीयूषपाणित्वममुष्य साधो-
र्भिषङ्मणेः संश्रुतवान् चिराय ।
विक्रेयनीरेश्वरभूपगङ्गा-
सिंहोऽपि संदर्शनमाचकाङ्क्ष ॥९७॥
अस्वस्थमेनं नरराजमन्ये
न द्राक्तरा नव्यचिकित्सनेन ।
अलं नयन् स्वास्थ्यकमौषधानां
गुणाः स्वदेशानुगुणं फलन्ति ॥९८॥
तदैनमाहूय स भूरिमानं
प्रदर्श्य च स्वां प्रकृतिं सरोगाम् ।
चिकित्सितुं प्रार्थितवान् विनीत-
वाचा न भूपाः प्रभवन्ति सत्सु ॥९९॥
एषोऽपि वैद्यः सकलां चिकित्सां
विक्रेयनीराधिपतेरकार्षीत् ।



श्रीलक्ष्मीरामोपवनम्, जयपुर

वै० यं० अजमेर.

यथास्य नैरोग्यगुणेन सार्कं
श्रद्धा तनौ माप च बाढमूलम् ॥१००॥
धनेन मानेन च सोऽवनीशः
सम्पूज्य चैनं परया च भक्त्या ।
प्रास्थापयत् पत्तनकं जयाख्यं
भिषग्वरं दादुदयालवंश्यम् ॥१०१॥
तदाप्रभृत्येव स भूमिपालो
दृढं कृतप्रत्ययकोऽधुनापि ।
स्वास्थ्यं किलास्यैव चिकित्सनेन
प्राप्नोति चैनं बहु सत्करोति ॥१०२॥

## जयपुरमहाराजचिकित्सा ।

नन्दाद्रिनागक्षिति (१९७९) वत्सरे च
श्रीमाधवेन्द्रो जयपत्तनेशः ।
व्याधेः स्वकीयस्य चिकित्सनायां
न्ययूयुजन् मानपुरःसरं वै ॥१०३॥
श्रद्धाऽस्य भूमीशितुरप्यमुष्मिन्
बभूव बाढं सफलप्रयोगैः ।
दाक्षिण्यतोऽसौ प्रससाद भूरि
गुणाः सतां कैर्न समाद्रियन्ते ॥१०४॥
इत्येष विद्वान् विषमेऽपि काले
विजृम्भितेऽप्याङ्ग्लचिकित्सने च ।
राज्ञोऽतिदासानपि डाक्टराणा-
मायुष्यवेदे नमयाश्चकार ॥१०५॥

## आरामसमृद्धिः ।

भुजार्जितोदग्रसमृद्धिशाली
स्वेषां गुरूणां सितकीर्त्तिरूपम् ।
उद्यानमारक्षितुकाम एष
व्यचीचरत् प्राज्ञ इति स्वचित्ते ॥१०६॥
देशान्तरादत्र चिकित्सनार्थ-
मायान्ति येऽस्मत्सविधं गदार्त्ताः ।
वासोपचारादिविधौ न तेषा-
मायुष्यशास्त्रानुसृतोपयोगः ॥१०७॥
तदातुरारोग्यसुखोपलब्ध्यै
अस्मिन् स्वकीयोपवने विशाले ।
कश्चित्प्रयत्नो मयका विधेयो
येनार्त्तिमन्तः शिवमाप्नुयुस्ते ॥१०८॥
ध्यात्वेत्थमात्मन्ययमर्थसम्प-
दावासभूर्भद्रवदान्यभावः ।
सुहृद्वरश्यामममतानुसक्तो
नचीचकारोपवनं स्वभूत्या ॥१०९॥
चत्वारि सुस्वास्थ्यनिकेतनानि
रम्याणि पार्श्वस्थजलोन्नलानि ।
अपेक्षिताशेषकृतिस्थलानि
सूर्यांशुसद्वातगतागतानि ॥११०॥
सुधाविलेपद्युतिराजितानि
विद्युत्प्रदीपातिचमत्कृतानि ।
सर्वर्तुयुक्तस्थितिकान्यनेक-
पुष्पोल्लसद्गन्धसुवासितानि ॥१११॥
सुसज्जितानेककपाटकानि
त्रिद्वारकोदारमुखानि धीमान् ।
मुदां विधायीन्यपि दर्शकानां
सुचारु निर्मापितवानमुष्मिन् ॥११२॥
आरोग्यलब्ध्यै कृतमङ्गलानि
पृष्ठोल्लसन्मञ्जुलजङ्गलानि ।
इमानि गेहानि विभान्ति नूनं
फिरंगकाणामिव बङ्गलानि ॥११३॥

## षोडशायुर्वेदसम्मेलनम् ।

पुण्यां पुमर्थानुविधौ समर्थां
विद्यामिमां ये भिषजः श्रयन्ते ।

ताँल्लोकसंरक्षणकर्म्मदक्षान्
सर्वान् कदाचित् सममञ्चयामि ॥११४॥
इत्थं विमृश्यात्मनि सोऽयमाप्तः
संमेलने पञ्चदशे समेत्य ।
आमन्त्रयामास समस्तवैद्यान्
पुरे जये षोडशवारमेतुम् ॥११५॥
आगत्य चायं निजमित्रवर्या-
ञ्छ्यामादिकांश्चान्तसदः समस्तान् ।
पौरान् प्रधानान् वणिजो महीपा-
नभ्यायुयोजात्र वरे प्रबन्धे ॥११६॥
तेऽप्यस्य निर्देशमवाप्य सर्वे
सम्भूय सर्वं प्रववन्धुरेवम् ।
यथाऽऽगता अत्र भिषग्वरिष्ठाः
श्रीस्वामिनेऽदुर्बहु साधुवादान् ॥११७॥
अस्यानुरोधादिह वैद्यसंमे-
लनस्य वैशिष्ट्यमुदञ्चनाय ।
प्राप्तो मुदा भारतमुख्यनेता
श्रीमालवीयो मदनो महीयान् ॥११८॥
सुस्वागतीकृत्य तमेनमत्र
ददौ प्रधानासनमेष साधुः ।
संमानयामास च सर्ववैद्यान्
प्रह्वेन भावेन महानुदारः ॥११९॥
स मालवीयोऽत्र भवन् प्रधानः
सम्यक् प्रजाभ्यः सदुपादिदेश ।
कथां सुरम्यां विपुलार्थसारां
कुर्वन् मुनिर्व्यास इवोल्ललास ॥१२०॥
प्रदर्शिनी चापि बहुप्रशस्ता
सर्वौषधानां बहुधा रसानाम् ।
निरीक्षकाश्चर्यकरी प्रयुक्ता-
ऽऽयुर्वेदमाहात्म्यविकासनार्थम् ॥१२१॥

इत्थं दिनानां त्रितयेन सर्वो-
ऽगदंकृतो भारतभूषणानि ।
संमेलने षोडशकेऽत्र दृष्ट्वा
साफल्यमेनं बहुधन्यमाहुः ॥१२२॥
कूपोऽप्यनेनोपवने नवीनो
निखानितोऽगाधसुमिष्टवारिः ।
शम्पा, तदम्भःसमुदञ्चनार्थं
दासीव चास्योपरि संप्रयुक्ता ॥१२३॥
आरामभूमध्यगतं गुरूणां
पादाब्जपूजाञ्चितशर्म सम्यक् ।
लक्ष्मीविलासोचितमस्ति तस्य
पृष्ठावलग्नं भवनं सुभव्यम् ॥१२४॥
इत्याद्यनेकैः सुखदप्रकारै-
रराम एषोऽनुगुणोऽभिरामः ।
कृतोऽमुना वैद्यवरेण भाति
बहिर्विभागे जयपत्तनस्य ॥१२५॥

## द्वारिकायात्रा ।

सोऽयं मनीषी भगवत्पदाब्ज-
भक्तिप्रकर्षातिपवित्रभावः ।
द्वारावतीदर्शनकांक्षयाऽऽशु
दिशि प्रतस्थे किल पश्चिमस्याम् ॥१२६॥
द्व्यष्टाहिचन्द्रप्रमिते (१९८८) ब्दकेऽसौ
द्वारावतीमाप हरिं प्रणन्तुम् ।
भक्त्या सुतीर्थे भगवत्पदाब्ज-
संदर्शनं जन्मफलं वदन्ति ॥१२७॥

## बदरीनाथयात्रा ।

अथैकदा स्वोपवने विराजन्
नीरोगयन्नातुरमर्त्यसंघान् ।
आलोचयन् स्वं च वयश्चकाङ्क्षे
यात्रां विधातुं बदरीवनस्य ॥१२८॥

जयपुरीय नि० भा० वैद्यसम्मेलने सभापतिमालवीयमहोदयानां मण्डपप्रवेशे, स्वागतम्



वै० श्यामलालः, नायब रामनिवासगुप्तः, वि० वा० पं० मधुसूदनसरस्वती, जयपुरराजसभाप्रधानपण्डितः, ल० स्वामी, श्रीमदनमोहनमालवीयाः भारतसुप्रसिद्धाः, सर पु० गोपीनाथ एम. ए. C. I. E. स्वागताध्यक्षः, स्व० रामप्रतापगुप्तः मेम्बर कौंसिल, जयपुर. पं० श्यामसुंदरशर्मा रजिस्ट्रार आगरा युनिवरसिटी स्वा० का० प्र० मन्त्री

ततश्च केदारशिवं प्रणम्य
विष्णुप्रयागादि समेत्य तीर्थम् ।
सम्प्राप्य दिव्यं बदरीशधाम
अभूत्कृतार्थः सपरिग्रहोऽयम् ॥१२९॥
प्रणम्य नारायणमत्र सार्द्धं
नरेण तन्मुख्यपरिग्रहेण ।
सौख्यं किमप्यात्मविचारनिष्ठो
वैकुण्ठनिष्ठं स्वमुपेत्य मेने ॥१३०॥
खनन्दाधिकनन्देन्दु मिते(१९९०)ऽब्दे मासि भाद्रके।
विद्यालयाश्रितां राजसेवां संत्यक्तवानसौ॥१३१॥
भिषक्तन्त्रस्वतन्त्रोऽयं सर्वतन्त्रस्वतन्त्रताम् ।
प्राप्तः स्वशरणापन्नलोकनैरोग्यदायकः ॥१३२॥
भुजोपार्जितसंपत्तिसंभारं सर्वकर्मसु ।
नियोजयँल्लक्षमुद्राप्रदानं कृतवानसौ ॥१३३॥
महात्मनो वदान्यस्यैतस्येदं कर्म्म शर्मदम् ।
प्रशशंसुर्जनाः सर्वे दानं पुण्यं यशस्करम् ॥१३४॥
इत्यायुर्वेदतन्त्रं गलितबलमिव प्रातिभेनाऽऽमृतेन
प्रायो नीरोगयित्वा द्रुततरमखिले भारते भूमिभागे ।
व्याप्तं कृत्वा चिकित्सामपि बहुलितवान् छात्रवर्गैः स्वकीयैः
वक्त्राणि द्राकुतराणामपि च कलितवान् मुद्रितान्यासमुद्रम्
समाप्तकृत्यश्च मनीषिवर्यो
विराममेषोन् मनसा विरक्तः ।
समाधिमाधाय विविक्तदेशे
द्रष्टुं स्वरूपं परमेश्वरस्य ॥१३६॥
सोऽयं सम्प्रति वैद्यराजमुकुटालङ्काररत्नं परं
स्वीयां कार्यधुरं निधाय विनते शिष्ये प्रधाने निजे।
सत्साधौ जयरामनामनि निजोद्याने निधाने मुदा
लक्ष्मीरामकृती विराजतितरां संसेवमानो हरिम्॥१३७
अयमपि जयरामः साधुवर्योऽभिरामः
सकुतुकजितकामो यौवनेऽयातयामः ।
अधिगतसकलायुर्वेदतन्त्रो गुरुभ्यः
कलयति सुचिकित्सामातुराणाममोघाम् ॥१३८॥
महाशयोऽयं गुरुवर्त्मगामी
हरौ परेशे दृढबद्धभावः ।
विद्यालये सम्प्रति राजकीये
भैषज्यमध्यापयते सुशिष्यान्॥१३९॥
गुणरत्नाकरस्यास्य लक्ष्मीरामभिषक्पतेः ।
संख्यानमिव भङ्गानामब्धेः सद्गुणकीर्त्तनम्?४०
तथापि लोकशिक्षायै जगतोऽनुभवं गतान् ।
महात्मनो स्य कतिचित् प्रोक्तवान् सुगुणानहम्१४१
शौचं क्षान्तिः शमो ब्रह्मचर्यं भक्तिर्गुरौ परा ।
सत्यं दयाऽऽर्जवं लोकसेवाभावश्च धीरता १४२
आस्तिक्यं धर्म्मनिष्ठा च प्रमिता सूनृता च गीः।
गुणिनामादरः शास्त्रतत्त्वाभ्यास उदारता १४३
उत्साहश्चेत्यमी लक्ष्मीरामस्योन्नतिहेतवः ।
अनुस्रियन्तां सुगुणा भावुकैर्मनुजैर्भुवि ॥१४४॥
आदर्श जीवनं ह्यस्य संक्षेपात्कृतवानिदम् ।
जयपत्तनवास्तव्यः श्रीहरिः कविभूषणम् ॥१४५॥
लक्ष्मीरामो विजयतां श्रीहरिः कुरुतादिमम्।
चिरायुषं वैद्यरत्नमित्याशीर्मे फलत्वलम्॥१४६॥



* श्रीः *

# संपादकीयं निवेदनम् ।

वैदेशिकविज्ञानमयेऽप्यस्मिन् समये न केवलं जयपुर एव, प्रत्युत भारतवर्षस्य प्रायः प्रत्येक-प्रान्त एव प्रख्यापितप्राचीनायुर्वेदगौरवैरायुर्वेदमार्तण्डैः श्रीमल्लक्ष्मीरामस्वामिमहाभागैरस्माकमार्षविज्ञानस्य यदेतन्महत्त्वमास्थापितं नेदं विचक्षणानां परोक्षं नाम । एतदेवोपलक्ष्य संतुष्टान्तःकरणैः स्थानीयैर्विद्वद्भिः श्रीमतः स्वामिमहाभागस्य राजकीयविद्यालयाध्यापनकार्यतो विश्रामग्रहणावसरे समयोचितमभिनन्दनं विशे-षतश्चिकीर्षितमभूत् । यस्य किलायुर्वेदस्य गौरवमाघोषितं समन्तात् स्वामिमहाभागेन तस्यैव सेवोचितं चेत्कि-ञ्चिदाचर्येत कार्यं तर्हि तदिदं सामयिकं स्यात्, परमनिरभिमानः शान्तशिष्टः श्रीमान् स्वामिमहाभागश्चापीदं संमन्येतेत्यभिविचार्य 'संस्कृतरत्नाकरस्य' आयुर्वेदाङ्कप्रकाशनं निरधार्यत । स्वामिमहाभागस्योत्साहिभिः शिष्यमहोदयैः सर्वतः समाकलितसाहाय्याः संस्कृतरत्नाकरस्य कार्यकर्तारः ससंभारमिदं सर्वतोऽपि समसू-चयन् । लेखनीयानामायुर्वेद-निबन्धानां सूची सुप्रसिद्धानां वैद्यकविराजमहोदयानां सविधे सर्वतः प्राहीयत । प्रसिद्धप्रसिद्धमहापुरुषाणां सेवायां तदिदमपि निवेदितमभूत् यत्ते निजचरित्रं चित्रं चापि प्रकाशयितुमस्मभ्यं प्रहिणुयुरिति ।

परं बहुभिरनुरोधपत्रैर्भूयो भूयः स्मारिता अपि त इमे वैद्यमहाभागा न समये स्वीयं निबन्धं प्रेष-यितुं कृपामकुर्वन् । अथाऽनुरोधशतैर्यथाकथंचित्प्रहितोपि केषांचन महाभागानां लेखस्तादृशः समध्यगम्यत यस्य हि प्रतिलिपिः पुनरत्र कारणीया समभवत् । भारतप्रसिद्धानां महामहावैद्यानां मध्ये बहुभिस्तु कृतेप्य-नुरोधशते न प्रहित एव स्वीयो लेखः । कैश्चिच्च निबन्धप्रेषणं प्रतिज्ञायाऽपि, अनुरोधशतं स्वीकृत्याऽपि, भूयोभूयः कृतमवधिकालमुल्लङ्घ्यापि, अन्ते स्वनिबन्धदर्शनसौभाग्याद्विफलीकृता एव वयम् । कैश्चित्तु महामहोदयैः सुदृढमध्यवसितेऽपि निबन्धप्रेषणे अस्वास्थ्यवशान्न तथा कर्तुं पारितमिति सत्यतमं वयं जानीमः । हन्त हन्त तेषु भारतसुप्रसिद्धयशसः कलिकातावास्तव्यश्रीश्यामादासकविराजमहाभागाः, आयुर्वेदाचार्यखुरजावास्तव्यपण्डितनारायणदत्तमहोदयाश्चैतस्मिन् समयान्तराल एव दिवमप्यधिरूढा इति परमं खेदास्पदम् । एवमेव जयपुरराजकीयसंस्कृतमहाविद्यालये प्रत्यक्षशारीरविषयाशिक्षको डाक्टरश्री-अमरनाथयाज्ञिकमहाभागोप्यस्मिन्नेवाऽवधौ लोकान्तरमुपयात इति भूयसे खेदाय । एतल्लिखितः सूर्यरश्मि-चिकित्साविषयकोऽन्तिमो हिन्दीनिबन्धः पाठकमहाभागानां लोचनगोचरीभवेत् । श्रीमतां कविराजमहा-भागानामायुर्वेदविषयिणी लोकसेवाकीर्तिश्च समग्रेऽपि भारतवर्षे सुप्रसिद्धाऽभूदिति को वा न जानीयात् । अस्तु, एतेषां महाभागानां लोकान्तरप्रस्थानेन विषण्णहृदया वयममीषां कृते शाश्वतिकीं शान्तिं भगवतश्चरा-चरनायकादभ्यर्थयामहे ।

बहूनां पुनः सुप्रसिद्धमहोदयानां चित्रस्य चरित्रस्य चाधिगतये बहुधा पुनः पुनरनुरुद्धं परं न तैरस्माकमभ्यर्थना कर्णेऽकारि । यावच्छक्यमस्माभिः प्रकारान्तरेण तेषां चरित्रादिप्राप्तिः कृता किन्तु बहूनां चित्रमद्यावध्यपि नाधिगतमेव । अत एव परतन्त्रा वयं केषांचित्केवलं चरित्रमेव प्राकाशयाम । मन्ये, विवशानामस्माकं सोयं मन्तुः क्षन्तव्यो भवेत् ।

विवेकिभिः पाठकमहाभागैरुपरिलिखितेन विवरणेन कदाचिदवबुद्धमेव भवेद् यत् रत्नाकरे पुनः पुनः प्रकटितानां विशेषाङ्कप्रकाशनावधीनामुल्लङ्घने यथाऽन्यान्यानि कारणान्यभवँस्तथा वैद्यकविराजमहोदयानां महत्त्वसहभाविन्युपेक्षाप्यन्यतमं कारणमजनीति । इतश्च स्थानीयेन मुद्रणालयस्वामिना यदस्मिन् कार्ये सौजन्यमाविष्कृतं तदेतद्वृत्तं प्रकाशकवक्तव्यादंशतोऽवगतमेव भवेत्पाठकमहाभागानाम् । अनेन हि समये प्रकाशनं प्रतिज्ञायाऽपि धनगर्द्धाभिभूततया उभयविधोऽपि समयः पङ्क्त्यामवमर्दित इति किं किं वा पाठकमहोदयानां पुरस्तादावेदयामः । मुद्रणादेशपत्रे ( आर्डरीप्रूफ ) यानि किल संशोधनान्यस्माभिः समसूच्यन्त मुद्रणालयाधिकृतैस्तान्युपेक्षावशादेवमेव त्यक्तानि । किमधिकम्, बहूनां पुटकानाम् ( फार्म ) मुद्रणादेशम् ( आर्डर ) अस्मत्तोऽधिगत्यापि स्वसौकर्यानुरोधाद्बहुकालं यावदस्माकमलाक्षितं न तान्यमुद्र्यन्त तैः । पूर्वमुद्रितानां पुटानामेकैकप्रतिरूपकप्रेषणं तु पुनः पुनरनुरुद्धैरपि तैर्नानाप्रवञ्चनाभिरुपेक्षितमेव । ततश्च स्वसुविधानुसारं मुद्रणकार्यं कुर्वद्भिस्तैर्बहवः प्रमादा मुद्रणकार्ये संघटिताः । यथा 'आदर्शजीवन'काव्यस्य···पृष्ठे···श्लोकादनन्तरं श्लोकाः प्रमादतः संयोजिता यैर्हि क्रमप्राप्तः प्रसङ्गः सर्वथा विच्छिन्नो भवति । मुद्रणसौष्ठवमपि स्थाने स्थाने तैरुपेक्षितमेव । एवमादीन्यनेकानि स्खलितानि तैरापादितानि येषां कृते वयं पाठकमहोदयानां सविधे हृदयतः क्षमामभ्यर्थयामहे । किञ्च येषां महाभागानां निबन्धः संदर्भबाहुल्यान्नात्र निवेशयितुमशक्यत तेभ्योऽपि महानुभावेभ्यो वैवश्यविलक्षा वयं क्षमामुपयाचामः । यतो हि पूर्वनिर्धारणाद् द्विगुणप्रायाऽस्य कलेवरवृद्धिः समभवत्, किमितः परमस्माभिः क्रियताम् ? अतः साञ्जलिबन्धं क्षमामर्थयमाना वयं यथावकाशमिमान्निबन्धान् रत्नाकरे प्रकाशयितुं प्रयतिष्यामहे ।

स्थानीयमुद्रणालयाधिकृतानामेवंविधैरेव विविधैरनुग्रहैर्विवशीकृता रत्नाकरकार्यकर्त्तारोऽवशिष्टं मुद्रणकार्यमजयमेरुनगर एव पूरयितुं प्राहैषुः । अत्र हि मेयोकालेजस्य धर्मोपदेशकेन संस्कृताध्यापकेन च साहित्याचार्यश्रीपुरुषोत्तमशर्मचतुर्वेदिमहाभागेन संशोधने संपादने च बहुविधमस्माकं साहाय्यमनुष्ठितमिति हृदयेन तत्कृतज्ञतामावहामः । एवमेव कविवरश्रीहरिशास्त्रि-साहित्याचार्यकथाभट्टवंश्यश्रीनन्दकिशोरशर्मप्रभृतिभिरपि संशोधनविषये यत्किञ्चित्साहाय्यमापादितं तत्कृतेऽपि रत्नाकरकार्यकर्तारः कृतज्ञतां प्रकाशयन्ति । यैश्च स्वामिनां शिष्यमहोदयैर्धनादिनाऽस्मिन् कार्ये साहाय्यमनुष्ठितम्, यैश्च वपुषा परिश्रान्तम्, यैश्च नाममात्रार्थमप्यत्र सहयोगः संपादितस्तेषां सर्वेषामेव महोदयानां सेवायां यथोचितान्साधुवादान् भूयोभूयः समर्पयामः।

किं बहुना निवेदनेन, दयालवः पाठकमहाभागाः !! दयालवश्चेद्भवतामधिगम्येत तर्हि प्रतिपदं संजाता अप्यस्माकमिमे प्रमादा न क्षणमपि स्थानमधिगच्छेयुः श्रीमतां हृदयसीमानि । अस्तु, स्वदयालुतया शाम्यन्तः सुरसरस्वतीनिर्व्याजसेवकाः श्रीमन्तः पाठकमहाभागास्तमिमं विशेषाङ्कं कृपापीयूषपावनेन सत्यं सत्यं विशेषाङ्कमेव संपाद्यासुरित्याशासानो विरमामि विफलविस्तरादिति—

भट्टश्रीमथुरानाथशास्त्री ।

[ संपादकः ]

# दीक्षागुरुः

( ले० पं० पुरुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च )

श्रीस्वामिमहाभागानां दीक्षागुरुः श्रीचन्दनदासस्वामी जयपुरीयजनसमाजे 'चुन्नीलालजी'ति नाम्ना प्रसिध्यति । महाभागोऽयमेकोत्तरैकोनविंशतिशततमे विक्रमवत्सरे जयपुरपरिसरस्थे कस्मिंश्चिद् ग्रामे जनिं लेभे। जन्मनाऽयं गौडब्राह्मण आसीत् । पञ्चवर्षोऽसौ जयपुरं समानीय 'दादूपन्थी' संप्रदायेऽदीक्ष्यत ।

अस्य दीक्षागुरुः श्रीध्यानदासमहाभागोऽतीव विद्यानुरागी बभूव । तेन स्वयमयमायुर्वेदशास्त्रमध्यापितः, इतरैश्च तैस्तैर्विपश्चिद्वरैरन्यान्यानि शास्त्राणि । महाभागोऽयं छन्दःशास्त्रस्य महाविद्वानासीत् । 'जयपुरविलासा' दिविविधकाव्यनिर्मितिलब्धप्रतीतिः कविश्रेष्ठः श्रीकृष्णरामभट्टमहाभागः (श्रीस्वामिनां विद्यागुरुः) स्वविद्यागुरूणां गणनावसरे तमेनं 'छन्दश्चन्दनदासतः सगणितम्' इत्येवं ससंमानं साभिमानं च स्मरति । सैषा छन्दोविद्याऽनेन 'विचारसागर'– 'वृत्तिप्रभाकर'प्रभृतिविविधविद्वन्मान्यनिबन्धनिर्मातुः श्रीनिश्चलदासस्वामिनः सकाशादधिगता । स एव महाभागोऽप्यस्यैव संप्रदायस्यानुयायिषु बभूव ।

इदमत्र श्रूयते यत् 'रसपुञ्जा' भिधानो महात्मा छन्दोविद्याया निधिरिवासीत् । लोकमिममुत्स्रष्टुकामो महाभागोऽयं वाराणस्यां भवभयभङ्गविधायिन्या भगवत्या जह्नुजाया जले जलसमाधिं जिघृक्षुरस्मार्षीत् यदियं सविशेषमभ्यस्ता छन्दोविद्या मया सहैव यास्यतीति । दैवात्तत्रैव पूर्वोक्तः श्रीनिश्चलदासस्वामी समुपतिष्ठते स्म । महात्मैनमुपयुक्तं पात्रं मन्यमानोऽस्य विषयस्य सर्वमप्युपयुक्तं वस्तुजातं संक्षिप्य निरूपितवान् । ततो विद्येयं पल्लविता पुष्पिता च सती चरितनायकमुपाजगाम । न केवलं छन्दःशास्त्रमेव किन्तु वेदान्तविद्याऽपि तत एतेनाधिगता, न्यायशास्त्रं साहित्यशास्त्रं च गुरूपनाम्नः श्रीजीवनाथमैथिलमहाभागात् ।

साहित्यशास्त्रस्य विशिष्टविदुषा नांगल्योपनामकश्रीगोपीनाथदाधीचेन कविप्रवरश्रीकृष्णरामभट्टप्रभृतिभिश्च सेयं छन्दोविद्याऽस्मान्महाभागादधीता ।

चिकित्सायामस्य महन्नैपुण्यमासीत् । जयपुरनरपतेर्नर्मसचिवस्य पण्डितपुरन्दरशर्मणो भ्रातृजस्य चरणे कश्चिन् महाव्याधिरुदभूत् । तदात्वे जयपुरे डा० हैन्डलीमहाशयश्चिकित्साविभागाध्यक्षः ( M. d.) आसीत् । तेन पादच्छेदाय संमतिर्दत्ता । अथ पुरन्दरमहाशयः क्लाम्यन्नेनं शरणमयासीत्। एनेन शस्त्रस्पर्शमन्तरैव केवलैरौषधैः स उल्लाघतां गमितः ।

अरिष्टज्ञानं यथाऽस्मिन् महाशये दृष्टम्, तथा नेदानीं क्वापि दृश्यते । अस्मिन् विषये घटनेयमधुनाऽपि जयपुरजनतायां प्रसिध्यति । स्वामी रामस्वरूपो विशिष्टो योगी बभूव । जयपुरीयः सर्वोऽपि जनोऽस्माकं चरितनायकश्चापि तत्र सुमहत् श्रद्दधातिस्म । तदीयं वाक्यं प्रायः सत्यं भवतीति श्रूयते । कदाचिदस्माकं चरितनायकः कञ्चन रोगिणं द्रष्टुं गतस्तमासन्नमृत्युमादिदेश स्वस्य सुभृशमभ्यस्तयाऽरिष्टविद्यया । अथ दैवादुक्तो योगि-

महाशयोपि तं प्रदेशं जगाम, रोगिणोऽनतिचिरान्मृत्युं च निषिषेध । तदेतद्वृत्तं कर्णाकर्णिकयावगत्य स्वामिमहाभागो योगिनो निवासस्थानमयासीत् विस्मितवांश्च तस्य स्वविरुद्धं निर्णयमाकर्ण्य. यतोऽयमपि तस्मिन्नतीव श्रद्धधान आसीत् । अथ योगिनः सविधमुपगतेनैतेन योगिनोऽप्यनतिचिरान्मृत्युरादिष्टः, तस्य भ्रान्तेः कारणं चैतदेवास्तीति सूचितम् । तदात्वे योगिमहाशयः पश्यतां जनानां दृष्टौ स्वस्थ इव प्रतीतोऽभूत् । किन्तु सर्वेणाऽपि जनेन सविस्मयं दृष्टं यद् घटनाद्वयमप्येतत् सत्यमभूत । अन्या अपि सन्त्येवंविधा भूयस्यो घटनाः, या विस्तरभयान्नेह प्रपञ्चयितुं शक्यन्ते ।

सप्तविंशत्युत्तरैकोनविंशतिशततमे विक्रमवत्सरेऽस्य दीक्षागुरोः स्वर्गवासोऽभूत् । ततः प्रभृत्येनेन गृहप्रबन्धः स्वायत्तीकृतः, स्वल्पेनैव समयेन तत्र संपादिता च सुव्यवस्था । महाभागेनैनेन रुचिरमेकमुपवनमपि निर्मापितम् यदिदानीं स्वामिमहाभागैः प्रतिसंस्कृत्य सुन्दरतरतामापादितम् ।

एतेन [1]छन्दोविन्मण्डनम्, पथ्यापथ्यमित्यादीनि पाण्डित्यपूर्णानि पुस्तकान्यपि निर्मितानि । संगीतशास्त्रस्य चायमासीन्मार्मिको विद्वान् ।

महाभागस्यास्य चत्वारिंशेब्द एव ब्रह्मभूयता जातेति भूयांसि समाशासितानि कार्याणि न कर्तुं पारितानीति निवेदयतां नश्चेतसि भवति सुमहान् खेदः ।

स एष महाशय उपवनप्रशस्तौ मयैवमुपश्लोकितः—

छन्दोविदामभवदग्र्यतमस्त[2]दीय-
शिष्यः, प्रबन्धनपटुः प्रथितप्रभावः ।
विद्वद्वरो विदितकीर्तिररिष्टबोधे
सत्संमतः स किल चन्दनदाससाधुः ॥

एतस्योत्तराधिकारिणोऽस्माकं स्वामिमहाभागाः स्वयशसा भुवस्तलं मण्डयन्तो महाभागमेनमपि पुण्यवतां धुरि स्थापयन्तीति न विशेषेण विवेचनार्हम् ।

---

१ पुस्तकमिदं मया संपादितम्, श्रीस्वामिमहाभागैश्च प्रकाशितम्, श्रीस्वामिमहाभागानां सविधाल्लब्धुं शक्यते ।

२—ध्यानदासशिष्यः

---

### आदर्शचरितानां श्रीगुरुप्रवराणाम्—

# अध्ययनकालस्तद्वैशिष्ट्यं च

( ले० आयुर्वेदाचार्यवैद्यदुर्गाप्रसादशर्मा )

अपि पाठकमहाभागाः

श्रीमतां वन्दनीयचरणानां गुरुप्रवराणां श्रीस्वामिमहाभागानामध्ययनकालस्य तात्कालिकानां च विशिष्टगुणानां वेत्ता प्रत्यक्षदर्शी चाहमेक इदानीमिति नाभिमानपुरःसरं मद्वचः, अपि तु याथार्थ्यानुगतम् ।

यतो हि श्रीगुरुचरणानां मम चाध्ययनस्य कियाँश्चित्कालः समान एवावर्त्तत । यदा श्रीगुरवः श्रीमद्राजराजेश्वररामसिंहमहाभागैः प्रचालितायां दिगन्तव्या-

पियशःप्रसरायां सुप्रसिद्धायां जयपुरराजकीयप्रमुख-संस्कृतपाठशालायामायुर्वेदकक्षायां भिषग्वरश्रेणावधीयाना आसन्, श्रीमन्तो गुरुगुरवोप्यस्मद्गुरवः सिद्धभेषजमणिमालायाः पलाण्डुराजशतकस्य (निघण्टुकाव्यस्य) जयपुरविलासजयपुरमेलककुतुकपञ्चमहाकाव्यसारशतकच्छवंशमहाकाव्यप्रभृतीनां मुद्रितामुद्रितानां बहूनां च काव्यानां रचयितार आयुर्वेदोदधिपारङ्गताः सर्वशास्त्रनिष्णाताः पण्डितप्रकाण्डा जयपुरराजवैद्याः प्रातःस्मरणीयाः कविवरा भट्टश्रीकृष्णरामशर्माणश्च प्रोक्तपाठशालाया आयुर्वेदविभागे धुरन्धरा अध्यापका आसन्। तस्मिन्नेव समये सौभाग्येनाऽहमपि प्रवेशिकां परीक्षां दत्त्वायुर्वेदोपाध्यायश्रेणावध्येतुं प्रविष्ट आसम्। ततः प्रभृत्येव च तत्राधीयानानां श्रीस्वामिमहाभागानामहं कृपापात्रतामगमम्।

श्रीस्वामिमहाभागा यद्यपि जन्मना गौडब्राह्मणकुलजा जयपुरनगरान्नातिदूरवर्त्तिनि मांग्यासनाम्नि साधारणग्रामे समुत्पन्ना आसन्, परं दैवबलादथवा महतामुन्नतिक्रमोऽपि भिन्न इति प्रसिद्ध्यनुसारं जयपुरवास्तव्यैराचार्यदादूसंप्रदायप्रविष्टैः साधुप्रवरैश्छन्दःशास्त्रनिष्णातैर्विद्वद्भिर्वैद्यवरैश्चुन्नीलालापराभिधैः [1]श्रीचन्दनदासस्वामिभिः शिष्यत्वेन गृहीताः पञ्चवर्षदेशीया एव च जयपुरे समानीय दीक्षिता बाल्यकाल एव जयपुरवास्तव्यदादूपथानुयायिनश्च संजाताः। एतेषां दशवर्षात्मके वयस्येव संप्रदायगुरवः श्रीचन्दनदासस्वामिनोऽकाले स्वर्गमधिरूढाः।

ततः श्रीस्वामिनां शिक्षाभारोपि गृहकार्यसंचालकानां श्रीगोवर्धनदासस्वामिनामुपर्येव समापतितः। तैः श्रीस्वामिनां प्रारम्भिकशिक्षार्थमाश्रम एवाध्यापकत्वेन नियुक्तेभ्यो वैयाकरणकेसरिश्रीविजयचन्द्रशर्मगुर्जरगौडेभ्यः श्रीस्वामिभिः सारस्वतव्याकरणकोषादिकमधीतम्। त्रयोदशवर्षात्मके वयस्येव च प्रसिद्धायुर्वेदविद्वद्भ्यो राजवैद्यपुरोहितजातीयश्रीगङ्गाबक्सव्यासमहोदयेभ्यो माधवनिदानशार्ङ्गधरवैद्यजीवनत्रिशत्यादिग्रन्थाः सम्यगधीताः। तत्र च पठतां श्रीस्वामिनां स्वगुरुपुत्रैः सब्रह्मचारिभिर्माधवप्रसादशर्मभि. साकमभिन्नहृदया मैत्री संजाता।

साधारणायुर्वेदज्ञानप्राप्त्यनन्तरं स्वामिमहाभागा विशेषतो व्याकरणादिपठनार्थं संस्कृतपाठशालीयप्रवेशिकाश्रेणौ प्रविष्टाः। तस्मिन् समये सारस्वतचन्द्रिकयोः पठनपाठनप्रचारोधिकतरः समादरणीयश्चासीत्। अतः प्रायः सारस्वतचन्द्रिकयोरेवाधिकतराश्चासन् विद्वांसः। पूर्वोक्तगुणाः श्रीगुरुचरणा भट्टश्रीकृष्णरामशर्माणो महाभागा अपि व्याकरणे केवलं सारस्वतचन्द्रिकाध्ययने नैवासाधारणव्युत्पत्तिमधिगत्य दिगन्तव्यापियशःप्रसरायां कवित्वशक्तौ सुप्रथिता अभूवन्।

तदा पाठशालायामपि प्रवेशिकाश्रेण्यां द्वौ विभागावास्ताम्। एका श्रेणी कौमुद्याः। द्वितीया च सारस्वतचन्द्रिकयोः। तत्र स्वामिनः पूर्वं सारस्वतचन्द्रिकयोः पठनमेव शीघ्रबोधकत्वात्समादृत्याधीत्य च तत्र नियतानन्यानपि ग्रन्थान् षोडशवर्षात्मके वयस्येव प्रवेशिकां परीक्षां दत्त्वा सम्यगुत्तीर्णाः। एवं संस्कृतसाहित्यप्रवेशयोग्यतां प्राप्यायुर्वेदाध्ययनकृतमतय उक्तराजकीयपाठशालायामायुर्वेदस्य मुख्याध्यापकानां पूर्ववर्णितगुणानां कविवरभट्टश्रीश्रीकृष्णरामशर्मणामन्तेवासित्वमङ्गीकृतवन्तः। ततः प्रभृत्येव च श्रीस्वामिनः

[1] एते एव महानुभावा गुरुवरश्रीभट्टमहाभागानां छन्दःशास्त्रगुरवः।

सर्वस्मिन्नपि शिष्यमण्डले गुरूणामसाधारणकृपाभाजनतामभजन् ।

ततश्चायुर्वेदोपाध्यायपरीक्षायां सबहुमानमुत्तीर्णानां श्रीस्वामिनां बुद्धिमत्तां सौशील्यं सच्चारित्र्यं चावलोक्य तेषामत्युत्तमां व्युत्पत्तिं काङ्क्षमाणाः श्रीगुरवः साहित्यदर्पणकाव्यप्रदीपपञ्चमहाकाव्यशाकुन्तलादिनाटककादम्बरीच्छन्दोगणितादीन्यप्येतान् सम्यगपाठयन्।

ततः क्रमेण भिषग्वरपरीक्षोत्तरणानन्तरं शास्त्रीययोग्यतायामायुर्वेदविज्ञाने चातीव चमत्कृतबुद्धयः श्रीस्वामिनो भट्टमहाभागैर्नितान्तपरिश्रमेण तथाध्यापिता यथा स्वान्तःकरणे निगूहितमायुर्वेदसर्वस्वं निष्कास्येव दत्तं भवेत्। तदानीमेव च गुरुगुरुभ्यः सर्वशास्त्रनिष्णातेभ्यो मैथिलश्रीजीवनाथगुरुभ्यो मिताक्षरासहितयाज्ञवल्क्यस्मृतिमधीतवन्तः । एवं क्रमेण द्वाविंशे वर्षे भिषगाचार्यपरीक्षां समुदतरन् । आचार्यपरीक्षोत्तरणानन्तरं दादूसंप्रदायवर्त्तिविद्वद्भ्यः श्रीमद्भ्यो महानन्दस्वामिभ्यः साङ्ख्यतत्वकौमुदीमपठन् ।

श्रीस्वामिनामधीयानानां सर्वोऽपि समयश्चाञ्चल्यदोषस्य नितान्तं विरहेणासाधारणच्छात्रोचितगुणबाहुल्येन च पाठशालीयानां संप्रदायसंबद्धानां च सकलानामपि नियमानां सम्यक् परिपालन एव व्यतीतः । तात्कालिकैः सहाध्यायिभिरन्यैश्च पाठशालीयच्छात्रैः सर्वैरपि साकमनुपमप्रेमपूर्वको व्यवहारः, अध्यापकानन्यांश्च सर्वानपि पूज्यान् प्रति पूर्णादरभावः, प्रकृत्या प्रसादसदनं वदनम्, पयःपूराप्लाविते इव लोचने, सदयं हृदयम् , सुधामुचो वाचः, निरुपमं गाम्भीर्यम्, अखण्डं ब्रह्मचर्यम्, सर्वेष्वप्यात्मभावः, इत्यादिगुणानवलोक्य गुरूणामन्येषां च सर्वेषां तात्कालिकानां विदुषां पाठशालीयाध्यक्षमहोदयानां च श्रीस्वामिषु पूर्णं प्रेमावर्त्तत ।

पाठशालायामधीयानानां नासीदेतेषां सौजन्यैकधनानां केनापि छात्रेण विरोधिभावः । तथापि तेषां छात्राणां मध्ये कोटकासिमस्थशिवदयालुशर्मोमाशङ्करशर्मश्रीरामशर्मप्रभृतयः कतिचिच्छात्रा उत्कृष्टतराः सुहृद आसन् । अहमदाबादीयरणछोड़लालशर्मपुरोहितमाधवलालशर्माणौ तु एतेषामभिन्नहृदयौ सुहृदावास्ताम् । किमधिकं पुरोहितमाधवलालशर्माणस्तु आचार्यपरीक्षोत्तरणकाले शिष्यत्वमनुभूयापि सौहार्दमहर्निशमेभिर्वर्द्धमानमेवान्वभूवन् । तदानीं श्रीस्वामिनः पूज्यपादभट्टमहाभागानां समीपेऽधीयाना यदेकवारमधीतवन्तः, तावतैव श्रीगुरूणां समीपेऽवस्थाय १छात्रांस्तदानीमेव तथाध्यापयन् यथा छात्राणामनायासेनैव ग्रन्थाशयो हृदयङ्गमो भवेत्। तेन श्रीगुरवः सहाध्यायिनोऽन्तेवासिनश्चातीव संतुष्टा आसन् ।

अध्ययनकाल एव श्रीस्वामिनां चिकित्सापद्धतिरप्यद्भुतासीत् । यतो हि श्रीस्वामिनः कुलक्रमागते स्वाश्रम एव वर्त्तमाने औषधालये समागतरोगिणां चिकित्सां कर्त्तुं प्रावर्तन्त । बुद्धिवैभवेन क्रियमाणया चिकित्सया रोगिणः प्रतिदिनमारोग्यमापुः । समये समये चैषां चिकित्सापद्धतिप्रसारः पीयूषपाणिता च वृद्धिं गते एव समवलोक्येते स्म सर्वैः ।

छात्रावस्थायामेव स्वामिमहाभागानां प्रतिभाऽसाधारणी आसीत् । तस्याः परिचयाय जयपुरराजसभाप्रधानपण्डिताः विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलमहाभागा दुरूहान् कतिचित्प्रश्नानप्राक्षुः । स्वामिमहाभागैः समञ्जसानि तदुत्तराणि तदात्व एव वितीर्णानि। स हि प्रश्नोत्तरपटलो विद्यावाचस्पतिमहा-

१ तेषु छात्रेष्वहमप्यन्यतम आसम ।

भागैः स्वहस्तेन विलिख्य प्रेषितो निम्ने अविकल-मुद्रियते—

"छात्रावस्थायामधीयानाः श्रीलक्ष्मीरामस्वामिमहाभागा मया श्रेहोसमयात् विश्रुतायास्तत्कृतिभायाः परिचयायेत्थमनुयुक्ताः—

शुक्रं हि प्रायः चरणशीलं वस्तु। न च तत् प्रवलं सत्केनापि निरोद्धुं सुशकम्। ततः कथमेते शास्त्रेषु लोके च विश्रुता आबाल्यब्रह्मचारिणो भवितुमर्हन्तीति। किञ्च पुरुषस्य पुनर्विवाहः प्रसिद्धो विहितश्च शास्त्रेषु न नारीणाम्। तदत्र किं बीजमिति कामयामहे वयमवगन्तुमिति।"

अथ निम्ननिर्दिष्टमदीयत तैः प्रतिवचनम्—

"त्रिविधा हि लोके पुरुषा भवन्ति ऊर्ध्वस्रोतसः, तिर्यक्स्रोतसः, अवाक्स्रोतसश्चेति। ये ह्यूर्ध्वस्रोतसस्तेषां शुक्रस्य गतिरूर्ध्वं ( मस्तिष्के ) भवति, परिणमते चैतन्मनोरूपेण। ततश्चैते भवन्ति मननशीला ज्ञानविज्ञाननिधयश्च। ये पुनस्तिर्यक्स्रोतसस्तेषां शुक्रस्य गतिस्तिरश्ची ( सर्वस्मिन् शरीरे ) भवति, परिणमते चैतदोजोरूपेण, भवन्ति चैते तेजःसहोबलसंपन्नाः। अथ ये ह्यवाक्स्रोतसस्तेषां शुक्रस्य गतिरधस्ताद्भवति चरति चैतदवरुद्धं सत्, जनयति च तांस्तान्धातुविकारान् कर्षयति चावरोद्धारम्। ततश्च ये ह्यूर्ध्वस्रोतसस्ते ह्येते नैष्ठिकब्रह्मचारित्वेनोर्ध्वरेतस्त्वेन च श्रूयन्ते शास्त्रेष्विति न किञ्चिदनुपपन्नम्।

अथ यदनुयुज्यते पुरुषाणां पुनर्विवाहविधाने स्त्रीणान्तु तन्निषेधे तत्रेदं प्रतिवचनम्—

पुरुषाणां हि शुक्रं नाम सप्तमो धातुः कामजनकः, स्त्रीणां पुनस्तृतीयो धातुः शोणितं तथा। नियमश्चायं नियतेर्यत् सर्वमपि प्रागच्छद्वस्तुजातमप्रतोऽवरुद्धं सत् प्रतिनिवर्त्तते, प्रत्याहन्ति च। तेन ये ह्युपरिनिर्दिष्टा ऊर्ध्वरेतसस्तेष्ववरुद्धं सदेतन्मनोरूपतामायाति, ये च तिर्यक्स्रोतसस्तेष्वोजोरूपेण परिणतं भवतीति न काममप्यापदमुत्पादयति।

ये पुनरवाक्स्रोतसस्तेष्ववरुद्धमेतदुपजनयति भूयसो विकारान् शुक्रचयादीनुन्मादादीन् क्षयादींश्चेति तैरवश्यमेव विवाहो विधेय इत्यत्र नास्ति शङ्कालेशोऽपि। नारीणां पुनः कामजनकस्तृतीय एव धातुः। सन्ति च ततः परस्ताच्चत्वारो धातवस्तत्परिणमनाय। तेन तदवरुद्धं सन्मांसादिषु परिणमते। न च कमप्युत्पादयति विकारमिति नावश्यकस्तासां पुनः परिणयः।"

तदेतद्युक्तियुक्तं च शास्त्रानुमोदितं च प्रतिवचनमुपश्रुत्य समतुष्यन्मे स्वान्तमाशासे चास्य महानुभावस्य भूयांसमभ्युदयम्। संप्रति तु तदाशासनं प्रत्यक्षफलं विलोक्य परमं प्रसीदामि। किमन्यत्।

विद्यावाचस्पतिः
**श्रीमधुसूदनशर्मा ओझा,**
जयपुरराजकीयधर्मसभाप्रधानपण्डितः

श्रीमतां स्वामिमहाभागानामायुर्वेदाचार्यपरीक्षोत्तरणात्कियत्कालानन्तरमेवास्मद्दौर्भाग्यवशाद् गुरुचरणाः श्रीभट्टमहाभागाः सुरांश्चिकित्सितुमिव स्वर्गं गताः। सौभाग्येन च साकमेवास्माकं चरितनायकाः श्रीस्वामिमहाभागाः श्रीगुरुगृहीतायुर्वेदसर्वस्वाः लब्धाचार्यपदवीकाः सकलशास्त्राध्यापने दक्षाः संमानिता विद्वद्भिः पाठशालाध्यक्षमहाभागैरायुर्वेदप्रधानाध्यापकपदे नियुक्ताः।

तदा मम भिषक्परीक्षामुत्तीर्य भट्टमहाभागेभ्योऽधीयानस्य भिषग्वरपरीक्षानियता ग्रन्था समाप्ता इवासन्। ततः श्रीस्वामिमहाभागानां सकाशादायुर्वेदशास्त्र-

मन्यांश्च नियताननियतांश्च साहित्यधर्मशास्त्रकाव्यादीनधिगतवान् । तेषामसीमया कृपया चाहमपि भिषग्वरपरीक्षामुत्तीर्य क्रमशो लब्धायुर्वेदाचार्यपदवीकः समभूवम् । शिष्योचितया कृपया च वर्धितोहं श्रीस्वामिमहाभागानां विशेषतः कृपापात्रतङ्कजतामन्वभूवम् ।

यद्यपि श्रीस्वामिनोध्ययनदशायां ग्रीष्मकाले श्वेतटोपीधारणं शीतकाले च कौशेयवस्त्रनिर्मितटोपाधारणं कुर्वन्तः स्वसंप्रदायवेषेणैव पाठशालामागच्छन्ति स्म तथापि तात्कालिकानां पाठशालीयाधिकारिणामध्यापकानां च तथा संप्रदायादर्शभूतानां राजमान्यानां महन्ताभिधानानां वेषपरिवर्त्तने महान्तमाग्रहमालोच्यानभिलषन्तोऽपि स्वामिनो महतामाग्रहेणाध्यापकपदप्राप्त्यवसरे पूर्वतोऽपि संप्रदायिषु प्रचलितेन शिरोवेष्टनधारणेन वेषं परिवर्त्तितवन्तः । सोयं परिवर्त्तितवेषोधुनापि उत्तमोत्तमतया भाति । ( यस्य चित्रमप्यत्र भवद्भिरवलोक्यते )

आचार्यपदवीप्राप्त्यनन्तरं समारभ्यासम्पूर्णायामेव प्रायोगिकचिकित्सापद्धतौ सर्वकार्यपटुषु प्रायोगिकचिकित्सानिधिषु श्रीभट्टमहाभागेषु दौर्भाग्यादेकवत्सरानन्तरमेव स्वर्यातेषु दूयमानहृदयाः श्रीस्वामिनः–

'यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥' इति–

सुश्रुतोक्तं वचः संस्मरन्तः पूर्णप्रायोगिकशिक्षामृते आयुर्वेदाध्ययनमर्धं मन्यमानाः कलिकातानगर्यां कविरत्नोपाधिधारिणां प्रसिद्धचिकित्सकानां महामहोपाध्यायश्रीद्वारकानाथसेनमहाभागानां सविधे गतवन्तः । स्वल्पेनैव कालेन स्वकुशाग्रबुद्ध्या निरुपमं चिकित्साकौशलं "वैद्यरत्नो"पाधिं च संप्राप्य जयपुरं प्रत्यागताः ।

अध्यापनसमय एव श्रीमन्तः स्वामिनः समस्तशास्त्रविद्भ्यः परमप्रशान्तमूर्त्तिभ्यः श्रीमन्नारायणस्वामिभ्यो वेदान्तशास्त्रे शाङ्करभाष्यं पंचदशीं चाध्यगीषत ।

श्रीस्वामिनो यदोपाध्यायपरीक्षामुत्तीर्णास्तदोपाध्यायपरीक्षकत्वेन नियुक्तैः कविराजश्रीविजयरत्नसेनमहोदयैः श्रीस्वामिनामुत्तराणि युक्तमान्यालोच्य प्रसन्नहृदयैः श्रीस्वामिनां कृते "अष्टाङ्गहृदयसंहितानामक"मेकं पुस्तकं पारितोषिकरूपेण प्रेषितम् । अदृष्टपूर्वमश्रुतपूर्वं चैतद्यदेवं केनचित्परीक्षकमहोदयेन परीक्ष्याय पारितोषिकं वितीर्णमिति ।

भिषग्वरश्रेणावध्ययनकाले श्रीमद्भिर्भट्टमहाभागैर्दुरधिगमे चरके टीकामनुपलभ्य प्राधान्येन स्वामिनामेव कृते स्वहस्तेनैव लिखिते "चरकचिकित्सास्थानदीपिका" नाम्नि टीकापुस्तके प्रतिज्ञायामेवं लिखितोऽयम्–

"श्रीकृष्णरामवैद्येन लक्ष्मीरामादिवृद्धये ।
लिख्यते हन्त चरकचिकित्सास्थानदीपिका ॥"

आद्यः श्लोको मया दृष्टो भट्टमहाभागानां कृपातिरेकं स्वामिनां च शास्त्रीयां विशिष्टयोग्यतां द्योतयति।

भिषग्वरपदवीप्राप्तिमहोत्सवाऽवसरे विद्वत्परिषदा स्वामिभ्यो "वैद्यवर्यप्रशस्ति"रदायि । तद्विषयकस्तदानींतनगोष्ठ्यां मया श्रुतः—

"अश्रौषीद्यः सटीकं दुरधिगमतया सुश्रुतं सुश्रुतं यत्
चक्रव्याख्यानवक्रामलभत चतुरश्चारकीं यश्चिकित्साम्।
यो हेमाद्रिप्रतीपाशयमिह घटते वाग्भटाब्धिं तरीतुम्
लक्ष्मीरामाय तस्मै बुधपरिषददाद्वैद्यवर्यप्रशस्तिम् ॥"

श्लोक एष स्मृतिपथमुपयातोऽद्यापि कमप्यनिर्वचनीयमेवानन्दं समातनोति चेतसि ।

यद्यपि पाठशालायां वेदान्तन्यायव्याकरणसाहित्यायुर्वेदज्यौतिषादिविभागेषु द्वे एव श्रेण्यावास्तामुपा-

ध्यायशास्त्रिपरीक्षयोस्तथाऽपि तात्कालिकाः संस्कृतपाठशालाध्यक्षाः श्रीकालीपदबनर्जीमहानुभावाः स्वनिकटस्थश्रीभट्टमहाभागाध्यापनासनान्तिकेऽधीयानानां श्रीस्वामिनां गुरुसमक्षमेव तत्तत्कर्त्तृकीयच्छात्राध्यापनकौशलं समवलोक्य सुप्रसन्नचेतसो भिषग्वरपरीक्षोत्तीर्णानामेषामेव कृते सर्वप्रथममाचार्यश्रेणीमुदघाटयन् । किञ्च प्रसन्नैरध्यक्षमहाभागैः स्वसंगृहीता द्राक्षरीसिद्धान्तलेखा अपि स्वामिभ्यो वितीर्णाः ।

आयुर्वेदाचार्यपरीक्षायां सुश्रुतचरकसंहितयोः प्रश्नपत्रे पृष्टस्यैकस्यायुर्वेदोदधिपारङ्गतेन केनाऽप्यनुभवशालिना महाविदुषा समाधेयस्य महतो गरिष्ठस्य प्रश्नस्योत्तरं पूर्णविवेचनयुक्त्या बुद्ध्या सम्यगदुः श्रीस्वामिनः ।

प्रश्नश्चैष आसीत्—

'अथ केचिद्वर्त्तन्ते मतभेदाश्चरकसुश्रुतयोः । यदि वर्त्तन्ते तदा प्राधान्येनाष्टौ भेदा उल्लिख्यन्ताम् । अपि संभाव्यते किञ्चित्समाधानं तस्य मतभेदस्य ।'

एत एव महानुभावा जयपुरीयसंस्कृतोपाधिपरीक्षाविश्वविद्यालयस्य सर्वप्रथमा आचार्या अभूवन् । अतो जयपुरसंस्कृतोपाधिनियमावलौ सर्वोत्कृष्टाचार्यपरीक्षोत्तीर्णानां विदुषां नामावलौ संस्कृतपाठशालीयेतिहासे च सर्वप्रथमत्वेनोल्लिखिताः सर्वदा शिरोमणिरूपेण स्थास्यन्ति ।

आचार्यपरीक्षोत्तरणानन्तरं गुरुवरश्रीभट्टमहाभागैरेभ्यो नानालङ्कृतिललितेषु नैकविधमनोहरवृत्तेषु मुक्तकत्वेन निर्मितान् क्षुद्रपत्रेषु विलिखितान् तत्तद्व्याधिहरविषयकाननुभूतान्योगविशेषान् प्रदाय सोपदेशमभिहितम्-योगानेतान् क्रमबद्धान् विधाय दुरधिगमानामेषां टिप्पणी भवता विधेयेति ।

ततः स्वामिनो गुरूपदिष्टदिशा टिप्पण्या समलङ्कृतान् क्रमबद्धान् विधाय सिद्धभेषजमणिरूपानेतान्योगान् पुस्तकरूपेण च विलिख्य श्रीगुरुचरणेभ्यः समर्पितवन्तः । ततो गुरवो निबन्धस्यास्य सिद्धभेषजमणिमालेति नाम विधाय मुद्रणोपयोगिगुच्छकद्वयं स्वहस्तेन विलिख्य गुच्छकान्ते टिप्पण्याम्—

'यः प्राचां भिषजां विवेद महितास्तिस्रोऽपि ताः संहिताः
साहित्यं च सधर्मशास्त्रमभितः स्वच्छन्दवाक् छन्दसि ।
लक्ष्मीरामसुधीः स एष भिषगाचार्यप्रशस्तिं वहन्
व्याचष्ट प्रथमं गुलच्छममलं भैषज्यरत्नस्रजः ॥'

स्वनिर्मितेन पद्येनानेन समयोजयन् । तद् गुच्छकद्वयं मुद्राप्य स्वयमालोक्य चातीव हृष्टास्तुष्टाश्च संजाताः । अवशिष्टगुच्छकत्रयन्तु तेषु स्वर्यातेषु मुद्रितम् । तद् गुच्छकद्वयं श्रीगुरुचरणस्वहस्तलिखितमद्यापि निधिरूपं स्वामिनां सकाशे सुरक्षितमस्ति ।

येषान्तु योगानामतिदुरधिगमानां पश्चादुपदेक्ष्याम इति कृत्वा तत्त्वं तदानीं नोपदिष्टं गुरुवरैः स्वर्यातेषु तेषु तत्तत्वानधिगामात्ते कतिचन योगाष्टिप्पणीविरहिता एव पश्चान्मुद्रिताः ।

श्रीस्वामिनां कवित्वशक्तिरप्यध्ययनकालत एव विशिष्टासीदिति श्रीस्वामिमहाभागनिर्मितसिद्धभेषजमणिमालाटिप्पण्यां गुच्छकारम्भपद्येभ्यः प्रतीयते ।

यथा—

'कलितविविधस्वरूपा विगलितदोषा मुदं वितन्वाना ।
स्फुरतु सदायतिसुखदा[1] श्रीपथ्या[2] सर्वजनपथ्या' ॥ द्वि.गु.
'[3]बलेः सर्वस्व[4]हरणं प्रवणं भव[5]तारणे ।

---

[1] हरीतकीपक्षे सत्याशोभनया आयत्या उत्तरकालेन सुखदा, पक्षे सदा सर्वदा यत्या विच्छेदसंज्ञिकया सुखदा, पक्षे सदा यतीनां यतात्मनां सुखदेति । [2] हरीतकी, पथ्यार्या छन्दोविशेषः भगवती चेति त्र्यर्थेयमार्या स्पष्टमन्यत् । [3] बलिराजस्य । पक्षे गन्धकस्य । [4] वामनरूपेण पक्षे जारणादिविधिना । [5] भवः संसारः, पक्षे पारदः ।

साधूनामेकशरणं श्रीकृष्णचरणं नुमः ॥' च. गु.
'यस्मिन्भवोद्भवाभावौ भवनं विभवस्य यः ।
भूतिभव्यः स भवतां भवताद्भूतये भुवः ॥' पं. गु.

एकदा गुरुवरश्रीभट्टमहाभागाः स्वामिनामायुर्वेदाचार्यपरीक्षोत्तरणानन्तरमेषां गुणगणगरिमतो मुग्धाः सन्तोऽध्यापनासनेऽधिष्ठिताः कृपापात्रं मां प्रत्यवोचन् यदस्माभिः श्रीस्वामिभ्योऽभ्युत्थानं दातुमिष्यते। यतः श्रीराजराजेन्द्रमहाराजाधिराजाः श्रीमाधवसिंहमहाभागा अपि योग्यतमेभ्योऽभ्युत्थानं ददतीति ।

श्रीस्वामिनामायुर्वेदाध्यापकपदप्राप्तिरपि विशिष्टैव यदकाल एव श्रीगुरुचरणेषु गोलोकगतेषु तदध्यापनासनं विनिश्रोक्तुकामाः जयपुरराजकीयशिक्षाविभागाध्यक्षपदमलङ्कुर्वाणाः श्रीकालीपदबनर्जीमहाभागाः प्रार्थनापत्रग्रहणनियममनादृत्य श्रीस्वामिमहाभागानां प्रार्थनापत्रमनादायैव सुनिगूहितं जयपुरराजकीयप्रधानराजसभातः स्वीकृतिमानाय्य श्रीगुरुचरणाध्यापनासनदानावसरे श्रीस्वामिनो विदितसर्ववृत्तान्तानकार्षुः ।

अहो महात्मनामेतेषां चरित्रबलम्। जन्मान्तरोपार्जितपुण्यसंचयजनितसंस्कारोपनिबद्धा मनसा वाचा कर्मणा चैषां ब्रह्मचर्यव्रतपालनप्रवणता बाल्यादेवासीत्। एतद्ब्रह्मचर्यपरिपालनं च सदैवास्मादृशैरन्तरङ्गैः सहचारिभिरहोरात्रं सहवासिभिश्चान्यैरप्यखण्डमेव दृष्टं श्रुतं च । किमधिकमेतेषां महाभागानामहर्निशं पठतां पाठयतां चिकित्साकर्मव्यापृतानां च कश्चित्काललवोऽपि सकलानर्थकारिण्यपि तारुण्ये प्रौढे च यौवने न रहस्यतीतोऽभूत् । लोकद्वयरसायनं ब्रह्मचर्यमुपसेवमानानां सदैव युक्ताहारविहाराणां युक्तचेष्टानां युक्तस्वप्नावबोधानां चैषां महाप्रभावाणां मुखमण्डलमुद्यद्भानुसंनिभमरुणं विराजते । स्वभावेनैवैते महाभागाः सर्वदैव सत्यां मधुरां परिमिताक्षरां सर्वजनहितावहां च वाचमुदीरयन्ति। सङ्गीतकलामाद्रियमाणा अप्येते भगवद्गुणवर्णनात्मकं सत्सङ्गीतं पुंभिर्गीयमानमेव सेवन्ते । विलासात्मकं तु सङ्गीतं दूरादेव परिहरन्ति । अध्यापनसमये परीक्षानियतेषु काव्यसाहित्यादिग्रन्थेषु प्रसङ्गागतान्यपि श्रृङ्गारपद्यानि यथासंभवमुपेक्षन्ते। एवं सततसत्त्वभावभावितहृदां महात्मनामेषां प्रत्यक्षदृष्टैः स्वाभाविकैः शुद्धैरेभिराचारैः—

"जपव्रतब्रह्मचर्यहोमाध्ययनसेविनम् ।
ज्ञानविज्ञानसम्पन्नमृषिसत्त्वं नरं विदुः ॥"

इति सुश्रुतोक्तदिशा ऋषिसत्त्वा एते, तथा-
"सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम् ।
शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ।
शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्तिनः ।
बुद्धिरस्खलितार्थेषु परिपूर्णं रसायनम्" ।
इत्यष्टाङ्गहृदयसंहिताप्रोक्तदिशाचैतं
नित्यरसायनसेविन इति मन्ये ।

पाठकमहाभागाः—

सोऽयं गुरुवराणामादर्शभूतानां श्रीस्वामिमहानुभावानामनुकरणीयः परिचयो यथादृष्टो यथानुभूतश्च विस्तारभिया स्वल्पाक्षरैरेव यथामति भवत्समक्षमुपस्थापितः। यद्यप्येतेषां लोकोत्तरचरितानां महात्मनामेकैकोऽपि काललवो गुणबहुल आदर्शरूप उल्लेखनीयश्च सर्व एव। तथापि मया दर्शिता दिगियं"अनुक्तमप्यूहति पण्डितो जनः" इति न्यायान्महामान्यानां विपश्चितां भवतां कृतेऽलं भविष्यतीति मन्ये ।

प्रार्थये च यद्भगवान् जगदीश्वर एवंविधानायुर्वेदोद्धारकान् पण्डितप्रकाण्डान् भाविन्यपि काले समुत्पादयिष्यन् भारतं वर्षं विशेषतश्चायुर्वेदशास्त्रमनुगृह्णीयात्।

आशासे चादर्शचरितानामेषां महापुरुषाणामाचरणमनुकुर्वाणा वैद्यबान्धवाः सदाचारे लोकोपकारे आयुर्वेदोद्धारे च प्रवर्त्तमाना ऐहिकमामुष्मिकं च सर्वं सफलयिष्यन्ति । इति

॥ शुभम् ॥

# विद्यागुरवः

[ ले० पण्डितपुरुषोत्तमशर्मा चतुर्वेदः साहित्याचार्यः शुद्धाद्वैतालङ्कारश्च ]

## उपक्रमः ।

आयुर्वेदमार्त्तण्डश्रीलक्ष्मीरामस्वामिनः सर्वजनजेगीयमानयशोविसराश्चत्वारो विद्यागुरव आसन्-कविभिषक्श्रेष्ठः श्रीश्रीकृष्णरामभट्टः, महामहोपाध्यायशिचकित्साचातुरीचणः श्रीद्वारकानाथसेनः, पण्डितप्रवरः श्रीजीवनाथगुरुः, आत्मविद्याविशारदः सरलसुन्दरोपदेशप्रदानपाटवप्रख्यातः श्रीनारायणमुनिश्चेति। येभ्यः स एष महाभागः क्रमशः सरहस्यसाहित्यायुर्वेदच्छन्दःशास्त्राणि, चिकित्सापद्धतौ प्रयोगप्रावीण्यम्, धर्मशास्त्रम्, वेदान्तविद्यां चाध्यगीष्ट । तदेतदुपश्लोकितं मयोपवनप्रशस्तौ—

"भट्टश्रीकृष्णरामादधिगतसरहस्याङ्गवैद्यागमाब्धि-
च्छन्दः-साहित्यविद्यं व्यधित विधिविदं द्वारकानाथसेनः।
प्राज्ञः श्रीजीवनाथो व्यतनुत निपुणं धर्मशास्त्रेषु, मर्म
ब्रह्मज्ञानागमानां समवगमितवान् मौनिनारायणोयम्।।"

तेषामेतेषां महाभागानां यथोपलब्धानि जीवनचरितानि यथासंभवसत्युक्तिशून्यया सरलया च सुरगिराऽधस्तादुपन्यस्यन्ते—

### १—श्रीश्रीकृष्णरामभट्टः ।

आसीन्मेदपाटीयभट्टा-(भट्टमेवाड़ा)-द्विजातीयो महीसुरप्रवरः पण्डितप्रकाण्ड आयुर्वेदागमप्रवीणः 'कुन्दनजी'त्युपनामकः श्रीजीवरामभट्टः। यः खलु जयपुरराजकीय—संस्कृतपाठशालायाः प्रारम्भे जयपुरन्दरेण श्रीरामसिंहमहाभागेन सादरं समर्पितमायुर्वेदविद्यायाः प्रथमाध्यापकपदमतितरामलञ्चकार। तस्य तनयद्वये ज्येष्ठः सर्वविधगुणगणैर्जयपुरजनतायाः परमप्रेष्ठश्च पण्डितश्रेष्ठः श्रीश्रीकृष्णरामशर्मा भिषग्रत्नमभूत्। जीवनरामशर्मणः क्रमशः परिणीते पत्नीद्वये प्रथमायामेव कुशाग्रधिषणः पञ्चोत्तरैकोनविंशतिशततमे विक्रमवत्सरे कृष्णजन्माष्टम्यां जन्म लेभे। अस्यैव च वैमात्रेयः कविमल्लश्रीहरिवल्लभशर्माऽऽसीत्, येन 'जयपुरपञ्चरङ्ग'-प्रभृतयोऽनेके काव्यप्रबन्धा निरमीयन्त ।

बाल्य एवासौ मेधावी स्वपितुरेव समधिगतव्याकरणायुर्वेदाद्यागमः सुप्रसिद्धगुरूपनम्रः श्रीजीवनाथशास्त्रिणः साहित्यशास्त्रम्, यदभिनन्दनार्थमयमङ्कः प्रकाश्यते तदीयदीक्षागुरुश्रीचन्दनदाससाधुतश्च च्छन्दःशास्त्रमधिगतवान्। तदेतत् तेन स्वयमेव प्रत्यपाद्यत सर्वेष्वपि स्वप्रणीतप्रबन्धेषु । तथा हि—

"येनाऽशिक्षि स जीवनाथगुरुतः काव्यप्रकाशाशय-
श्छन्दश्चन्दनदासतः सगणितं, वैद्यागमस्तावतः ।
सूते गन्धकजारणावधि कृता येन क्रिया नैकशः
सोऽहं नूतनकाव्यपञ्चककृतिः श्रीकृष्णरामः कविः ।।"

ततश्च लब्धसर्वविधविद्यो द्वात्रिंशदुत्तरैकोनविंशतिशततमे विक्रमवर्षे स्वपितृपरम्परया प्राप्तं संस्कृतपाठशालायामध्यापकपदमुररीकृतवान्, अध्यापितवांश्च चिकित्सकचूडामणिश्रीश्यामलालजीवैद्यराजमहोदयम् ,

इमं (श्रीलक्ष्मीराम) स्वामिमहाभागम्, तथाविधानपरांश्च महायशसः स्वशिष्यान्। काव्यायुर्वेदोभयाध्यापनविषये तस्यातीव प्रावीण्यमासीदित्यद्यापि संगिरन्त एव तदीया अन्तेवासिनः। तारस्वरसंपन्न एष महात्मा यदाऽध्यापयति स्म, तदा सर्वाऽपि पाठशाला तदीयेन स्वनेन परिपूर्यते स्मेत्यपि श्रूयते।

सोऽयं भिषग्वरः श्रीजयपुरमहीपतेर्लब्धग्रामस्य स्वपितुर्धनसम्पदमुपभुञ्जानः सर्वविधसौख्यसम्पन्नः, अत एवादीनस्वभावः सुतरां विलासी चासीत्। तदेवंविधगुणगणरमणीयायामत एवात्युर्वरायामस्य नैसर्गिकप्रतिभापृथिव्यां सहृदयहृदयाह्लादिनी कवितालता तथा कुसुमिता बभूव, यथा सर्वोऽपि भारतभूमिभागः सुधीजनसुरभिणा सौरभेण संप्रत्यपि सुतरामामोदमानमानसो भवति।

एवंविधस्य कवेर्हृदयं कवितायां प्रतिबिम्बितं भवतीति तत्प्रणीतकाव्येभ्यः कानिचिद् रुचिररुचिराणि पद्यानीहोद्धरामः, येन विद्वांसः स्वयमेव तत्स्वभावादि परीक्षेरन् कविताऽमृतं चाऽऽस्वादयेयुः। तथा हि—

'कच्छवंश' महाकाव्ये स कविः समिच्चमत्कृतिमोजोभिव्यञ्जिकया कीदृश्या रचनया वर्णयति स्मेति निरीक्ष्यताम्—

ज्वलं ज्वलत्खड्गघटाझलत्कृतिः
क्षतस्रवच्छोणितसिक्तपद्धतिः।
समुच्छलत्कच्छविमुक्तहुङ्कृतिः
प्रचण्डतां प्राप समिच्चमत्कृतिः।

सप्तमसर्गः १२९

एवमेव मानसिंहमहीपतेर्युद्धोपक्रमे प्रतिनृपतिं प्रति वागारम्भवर्णनमप्यमुं गुणं कीदृगभिव्यञ्जयतीत्यपि परीक्ष्यताम्—

रोषपोषवशाद् बद्धभ्रुकुटिर्माधवाग्रजः।
खड्गमुष्टौ दधन्मुष्टिं स्पष्टमित्थमुवाच तम्॥

सप्तमसर्गः ११३

तस्मिन्नेव काव्ये जयपुरवर्णनेऽनुप्रासोत्प्रेक्षोदारास्वभावोक्तीनां प्रसादगुणस्य च चमत्कारोऽपि विलोक्यताम्—

प्रांशुप्राकारधवलं केतुचीनांशुकाञ्चलैः।
कुर्वाणमिव मेघेषु बलाकावलिवल्गनम्॥
सदोपकण्ठवलितवनमालामनोरमम्।
गोविन्दमन्दिरोद्द्योतं विडम्बयदिव स्फुरत्॥

दशमसर्गः ८१४-३५

मरन्दलुब्धमधुपश्यामीकृततरूत्तराः।
दधत् प्राकारमभितः पुष्पवाटीपरम्पराः॥

दशमसर्गः ८३७

'मुक्तकमुक्तावल्यां' कविनाऽनेन प्रावृषो रजकीरूपणं कीदृग् व्यधीयतेत्यपि श्रूयताम्—

चञ्चलविद्युद्वलया विरचितघनकृत्तिपात्रजलसेका।
प्रावृड्रजकी परितः प्रक्षालनमम्बरस्य विदधाति॥

(तत्रैव) प्रावृष्यप्यवग्रहमवलोक्य कविना कीदृक् तन्निदानमन्विष्टमित्यप्यवलोक्यताम्—

पापं केऽऽपि जगुः, निदानमनलं प्राहुः परे मारुतं
नक्षत्रं कतिचिज्जजल्पुरितरे दुर्दैवमूचुर्नृणाम्।
यत्तु प्रावृषि वैपरीत्यमधुना लोके समुज्जृम्भते
तत्सुप्ते जगदीश्वरे जलमुचामन्याय उन्नीयते॥

अस्य कवेः सर्वाण्यपि फलान्यतिशय्य रसालफले भूयानासीदनुरागः, तत्तत्पक्षपातमालम्ब्य कथमभिभावितानीतराणि फलानीत्यप्यवेक्ष्यताम्—

श्रुत्वा चूत, तव श्रियं भुवि धृतो जम्ब्वा रुषा कालिमा
कालिङ्गं त्रपयेव लीनमवनौ दीर्णं शुचा दाडिमम्।

मृद्वीका मृदुतां दधार, पनसं रोमाञ्चितं भीतितः,
संतापादिव नारिकेलजठरे जातं जलानां भरैः ॥

व्रजभाषायां 'कवित्त' इति प्रसिद्धेन च्छन्दसा संस्कृतभाषायां वर्णनमनेनैव कविनोपक्रान्तम्। कीदृग्विधैश्च प्रसादपूर्णैः पदैर्जयनगरनरेन्द्रः श्रीरामसिंहोऽत्र वर्णित इत्यप्यवलोक्यताम्—

सूत, रथमेहि देहि बाणगणमाशु मे हि
मित्र धृतिमत्र धेहि संगरमहामहे
वर्म कुत्र, चर्म कुत्र, भयं वृथा मास्म वृथाः,
छिन्धि भिन्धि धाव धाव सद्दे नास्य नाम हे।
इति स्फुटं भवद्द्विषां शैलगुहास्वापजुषां,
विलापयुग् वचो वयं समुपलभामहे
वैरिकुलवृन्दकाल, चन्द्रसितकीर्त्तिजाल,
कण्ठलोलरत्नमाल, महीपाल, राम हे ॥

एवमेव 'दोहा' च्छन्दसाऽपि मधुरविशदैः पदैः श्रीगङ्गाजलवर्णनमाकर्ण्यताम्—

शिवशेखरशशिचन्द्रिकासंचयचारुमहांसि।
ददतु मुदं मन्दाकिनीतरलतरङ्गपयांसि ॥

अनेनैव च्छंदसा हरेर्हृदयस्थल-वीक्षितयोर्वर्णनमप्यवेक्ष्यताम्

कमलामलमनुरागि बहु करुणारसपरिणामि।
हृदयस्थलमिव वीक्षितं हरेरहं प्रणमामि ॥

यश्चास्य यमकादिष्वप्यधिकार आसीत्, स हि 'जयपुर-विलासा' दिषु स्थाने-स्थाने, विशेषतस्तु 'जयपुरविलास' स्य प्रथमोल्लासे, स्पष्टमेवावलोक्यते, विस्तरभिया तु तदुदाहरणानीह नोद्ध्रियन्ते। तद्दर्शनाभिलाषुकैस्त एव ग्रन्था द्रष्टव्याः।

सेयं दिगुपदर्शिता। अतः परमनेन कविना यानि काव्यानि निरमीयन्त, तेषु कतिचन चमत्कृतिचारुण्यवरादिक्रमेण सविषयवर्णनमधस्तादुपन्यस्यन्ते। तथा हि—

१—आर्यालङ्कारशतकम्—अत्र भगवत्याः स्तुतिः प्रतिश्लोकमेकैकेनालङ्कारेण वर्णिताऽस्ति। अप्रकाशितम्।

२—कच्छवंशमहाकाव्यम्—अस्मिन्नासन्नविंशैः सर्गैः सुरुचिरैरनुष्टुप्प्रधानैर्वृत्तैर्जयनगरनरेन्द्रवंशावलीवर्णनमस्ति। परमेतदिदानीं यावन्न केनापि प्राकाश्यत। अत्र चानेन कविना भूयः परिश्रम्य कुतश्चिल्लब्धानि न केवलं जयपुरनरेशानामेव, किन्तु यवनसम्राजामपि जन्मपत्राणि वर्णितानि सन्ति। तदिदं प्रकाशितं सत्र केवलं साहित्यविदाम्, अपि त्वैतिहासिकानामपि केषुचन विषयेषूपकारि स्यादित्यस्ति नो विश्वासः।

३—काव्यमालाप्रशस्तिः—इदमल्पीयः काव्यं 'काव्यमाला' नाम्न्याः पुस्तकमालायाः प्रशंसायामलिख्यत। मुद्रितं चैतत् 'काव्यमालायां' 'मुक्तकमुक्तावल्यां' च।

४—काशीनाथस्तवः—अत्र भगवतः शिवस्य, काशीनाथनाम्नः कस्यचन द्रविडपण्डितस्य च श्लेषेण वर्णनमस्ति। अप्रकाशितम्।

५—गप्पसमाधानम्—अत्र काश्चन प्रहेलिकास्तथोपन्यस्ताः सन्ति, याः प्रेक्ष्य मतिर्दोलायेत, परं समाधानमतीव सरलं स्यात्। अप्रकाशितम्।

६—गोपालगीतम्—गोपालस्तुतिरत्र वर्णिता। अप्रकाशितम्।

७—गोविन्दभट्टभङ्गम्—इदमल्पीयः काव्यं दायभागादौ विगृह्णतः स्वपितृव्यस्य निन्दायां विलिख्य कविनैव प्रकाशितमासीत्। एतेनास्य प्रतिवादिभयङ्करत्वमुच्छृङ्खलत्वं च प्रतीयते, परं नात्युपयोगि।

८—छन्दोगणितम्—अत्र प्रस्तारादिष्टक्रिया-

सहितानां सर्वविधवृत्तानां विशिष्टं वर्णनमस्ति । अप्रकाशितम् ।

९—जयपुरमेलककुतुकम्—अत्र काव्ये जयपुरे विजयदशम्यादिषु यानि मेलकानि ( मेला ) भवन्ति, तेषां सामयिकं वर्णनमस्ति । अस्य कोऽप्यंशः सिद्धभेषजमणिमालायाममुद्र्यत ।

१०—जयपुरविलासम्—तदेतत् सुप्रसिद्धं तेनैव कविना प्रकाशितं च काव्यं न परिचयमपेक्षते, परमिदानीं वीतपुस्तकतया पुनर्मुद्रणमपेक्षते ।

११—पलाण्डुराजशतकम्—इह पलाण्डोर्दिग्विजयस्य तथा वर्णनमस्ति यथा तत् साहित्यविदां सुखदं भिषजां चोपयुक्तं स्यात् ।

१२—माधवपाणिग्रहोत्सवः—इह तदानीन्तनस्य जयनगरनरेन्द्रस्य श्रीमाधवसिंहस्य जयपुर एवाऽऽनीतया सूर्यया साकं विवाहोत्सवस्य वर्णनमस्ति ।

१३—मुक्तकमुक्तावली—अत्र कविना स्वीयानि सुन्दरसुन्दराणि मुक्तकपद्यानि संगृहीतानि सन्ति । सैषा जयपुरविलासेन सह संमुद्रिताऽस्ति ।

१४-सम्राट्सुताभिनन्दनम्—अत्र 'प्रिन्स आफ वेल्स' संज्ञया भारते समायातस्य सम्राड्जार्जमहोदयस्य वर्णनमस्ति ।

१५—सारशतकम्—इह 'रघुवंश'दीनां पञ्चमहाकाव्यानां शार्दूलविक्रीडितच्छन्दसा प्रतिश्लोकमेकैकसर्गकथावर्णनमस्ति । एतदपि जयपुरविलासेन सह मुद्रितम् ।

१६—सिद्धभेषजमणिमाला—अत्र वैद्यवरेणानेन स्वानुभूतानि प्राक्तनग्रन्थेष्वनुपलभ्यमानानि भूयांसयौषधानि संगृहीतानि सन्ति, यानि भिषजामतीवोपयोगीनि । विप्रकीर्णोऽयं संग्रहस्तन्निधनानन्तरं तत्प्रियशिष्येण श्रीलक्ष्मीरामस्वामिना संपाद्य टिप्पण्या च संयोज्य प्रकाशितस्तज्जिज्ञासूनामुपकरोतीति न तिरोहितम् । सैषा द्वितीयावृत्तौ मुद्रिता जयपुरराजकीयाचार्यपरीक्षायां पाठ्यत्वेन नियताऽस्ति ।

१७—होलोत्सवः—अत्र होलासमयसमुचितानि कानिचिदश्लीलवर्णनपराणि पद्यानि सन्ति ।

अयं महाभागो भङ्गाभक्तो विचारशीलः परमरसिकश्चासीत् । निधनात् किञ्चित् पूर्वमेवैतेन महाभागेन संस्कृतचिकित्सालयः समुदघाट्यत, नानाविधैरमोघैरौषधैरचिकित्स्यन्त जनाः । आयुर्वेदप्रसिद्धायां रसप्रक्रियायामस्य महाकवेर्महन्नैपुण्यमासीत् । सर्वेऽपि च रसा अनेन निजहस्तेन निरमीयन्तेत्यपि तदन्तेवासिवृन्दमुखाच्छ्रूयते । प्राचीनपुस्तकसंग्रहेऽप्यासीदस्य महाननुरागः। अत एव यान्यायुर्वेदादिपुस्तकान्यन्यत्र नोपलभ्यन्ते, तान्यप्यस्य गृहे साधुसंगृहीतानि विहितानुक्रमणानि चासन् । संप्रति तु तेषां का दशेति कः कथयतु ।

इदानीमस्य वंशे तत्तुल्यगुणगणस्य दैवादकालमृत्युं प्राप्तवतस्तत्तनस्य पण्डितप्रकाण्डश्रीगङ्गाधरभट्टस्य सूनुः श्रीनरहरिशर्मा सुतादिसौख्यमनुभवन्नस्ति । अनेनैव महात्मना आयुर्वेदाचार्यश्रीनन्दकिशोरशर्मसु विश्वस्य 'कच्छवंश' महाकाव्यमस्मभ्यमदर्श्यत ।

हा हन्त स एष कविकुञ्जरत्नमायुर्वेदागमपारावारीणश्चतुःपञ्चाशदुत्तरैकोनविंशतिशततमे विक्रमवत्सरे वैशाखकृष्णप्रतिपदि ऊनपञ्चाशवर्ष एव करालेन कालेन कीर्तिशेषतां नीत इति भूयस्यो विचारपरम्परास्तेनैव सह्यालीयन्तेति खिद्यमानमानसा वयं विरमामो विस्तरात् ।

## २—श्रीद्वारकानाथसेनः

श्रीलक्ष्मीरामस्वामिनो द्वितीयो विद्यागुरुः सुर-



आयुर्वेदमहाध्यापक–काव्यकलापारंगत–
कच्छवंशाद्यनेकमहाग्रन्थकारराजवैद्य-
स्वर्गीयभट्टश्रीकृष्णराममहोदयाः
जयपुरम्



महामहोपाध्याय चिकित्साचक्रवर्तिस्वर्गीयकविराजश्रीद्वारकानाथ
सेनकविरत्नमहाभागाः, कलिकाता

( रसायनशालायाम् )



१-वैद्यश्रीरामप्रतापशर्मा
२-आयुर्वेदमार्तण्डश्रीलक्ष्मीरामस्वामी
३-स्वर्गीयराजवैद्यश्रीश्यामलालशर्मा
४-स्वामिनां दीक्षागुरवः तीर्थ्यः स्वर्गीयवैद्यश्रीमनमोहनस्वामी

सरस्वतीनटनरङ्गायमानायां वङ्गावनिविभूषणः श्रीद्वा-
रकानाथसेन आसीत् । स एष महाभागो निखिलजन-
नन्दनीयेन निजजन्मना पूर्ववङ्गान्तर्वर्ति 'संधारपाड़ा'
भिधग्रामवास्तव्यं स्तव्यसद्गुणगणं चिकित्साचातुरी-
चणं किमपि वैद्यकुलं विक्रमीयैकोनविंशशताब्द्या
विरामे विभूषयाम्बभूव ।

प्रथमे वयस्येवायमधिगतविविधदर्शनरहस्यः प्रति-
भाप्रभाववशीकृतसुरसरस्वतीकः स्वाभिजनसमीपवर्त्तिनि
कस्मिंश्चिद् ग्रामे न्यायशास्त्राध्यापको बभूव । अथ
प्रौढे वयस्यपरवङ्गान्तर्गत 'मुर्शिदाबाद' नगराभिजनात्
कलिकातानगरनिवासिनो 'जल्पकल्पतरु' नामकचरक-
व्याख्यादिविविधनिबन्धनिर्मातुः कविराजश्रीगङ्गाधरम-
हाभागान्निखिलमपि वैद्यागममवागमत्, अध्यगमच्च तत्र
तादृशीं योग्यतां यया न केवलं समग्रवङ्ग एव किन्तु
निखिलेऽपि भारतवर्षे विश्रुततमतामयासीत् । परम्परा-
प्राप्तवैद्यकविद्योऽयं चिकित्साकर्मणि तथा कुशलोऽभूद्
यथा प्रारम्भे रूपकद्वयमात्रोपायनोऽपि पर्यन्ते चतुः-
षष्टिरूपकोपायनतामयासीत् । अनेन महाभागेन कलि-
कातानगरे एव चिकित्सा प्रारभ्यत, आसीच्च तत्रैव
सर्वश्रेष्ठश्चिकित्सकः प्रायोगिकपद्धतौ तथाविधश्च पटु-
र्यथा वैज्ञानिकम्मन्या आङ्गलभिषजोऽप्यस्य पुरस्तान्न
प्राभवन् प्रतिष्ठातुम् ।

न केवलमयं चिकित्सक एव, किन्तु सर्वतन्त्रस्व-
तन्त्रः पण्डितप्रवरोऽप्यासीत् । अनेन विद्वज्जनमनः-
प्रसादनी काचन सुश्रुतव्याख्या प्रारभ्यत, परमस्माक-
मभाग्येन नाऽपायित पूरयितुं प्रकाशयितुं च । एतदीय-
वैदुष्यसंतुष्टचेतसा आङ्गलेन भारतसम्राजाऽप्ययं समाद्रियत
'महामहोपाध्याय' पदवीप्रदानेन ।

चिकित्सापद्धतावयं शुद्ध आयुर्वेदीयः प्राचीनरी-
पाटीपक्षपाती चासीत् । आधुनिकजगत्यत्यावश्य-
कत्वेन परिगण्यमानानां विज्ञापनीयकाष्ठपट्टानां (साइ-
नबोर्ड)-मयमतीव विरोधी बभूव । श्रूयते चैतत्—
यद् देशान्तरं गतवत्यस्मिन् कश्चिदस्य सदनद्वारि तादृक्
काष्ठपट्टमेकमयोजयत् । तदेतदसहमानोऽयं तद्भङ्गान-
न्तरमेव गृहमविशत् । राजपूतानाप्रदेशेऽपि वर्त्तमान-
मुदयपुरनरनाथं महाराणाश्रीभूपालसिंहमहोदयं चिकि-
त्सितुमयमाकार्यत, सममान्यत च धर्मधुरन्धर-
वीरप्रवरभूतपूर्वमहाराणाश्रीफतहसिंहमहाभागेन ।

शिष्येष्वस्य सुमहद् वात्सल्यमासीत् । कलिका-
तानगरीयदातव्यौषधालये (आम हॉस्पिटल) सर्वप्र-
धानश्चिकित्सकश्रेष्ठः कविराजश्रीज्योतिर्मयसेनमहोदयः,
सुश्रुतस्याङ्गलभाषानुवादकः कविराजश्रीकुञ्जलालमहो-
दयः, स्वस्य पुत्रत्रये ज्येष्ठः सर्वश्रेष्ठश्च चरकोपस्कार-
प्रणेता वैद्यरत्नः श्रीयोगीन्द्रनाथसेन एम्० ए० महा-
भागः, यदभिनन्दनार्थमयमङ्कः प्रकाश्यते स स्वामि-
महाभागश्चेत्यादयः प्रसृमरविमलयशसो महामहिम-
शालिनोऽस्य परश्शताः शिष्या आसन् । तदेवमनेन न
केवलं स्वसमय स्वात्मनैव, किन्तु निजशिष्यप्रशिष्य-
समुदाये ज्ञानात्मना प्रविश्य सम्प्रत्यपि समुपक्रियते
लोकः ।

स एष महाभागः स्ववयसः सप्ततितमवत्सरस्य
समीपे न केवलं स्वबन्धुवर्गमेव किन्तु सकलसुधीसमु-
दायमपि शोकसागरे निमज्ज्य नासत्ययोश्चिकित्साचु-
ञ्चुतामसहमान इव त्रिदिवनिवासाय प्रास्थितेति सखे-
दमावेदयन्तो विरमामो विस्तरात् ।

## ३—श्रीजीवनाथगुरुः ।

अस्य तृतीयो विद्यागुरुर्मिथिलाजनपदाभिजनो
मैथिलमहीसुरमुकुटमणिः श्रीजीवनाथझामहाभाग

आसीत्। अस्यापि जन्म विक्रमीयैकोनविंशशताब्द्याश्चरमभागे बभूव। स एष महाभागो न केवलं श्रीलक्ष्मीरामस्वामिन एव किन्तु तस्य दीक्षागुरोः श्रीचन्दनदासस्वामिनः, प्रधानविद्यागुरोः श्रीश्रीकृष्णरामभट्टमहाभागस्य चाप्यासीद् विद्यागुरुः। सर्वतन्त्रस्वतन्त्रः स एष जयपुरराजकीयसंस्कृतविद्यालये यावद्विषयाध्यापक आसीत्। अस्य सविधे न केवलं पाठशालीयाश्छात्रा एव पेठुः, किन्तु जयपुरीया जयपुरबहिर्वर्त्तिनश्चास्याध्यापनयशः श्रुतवन्तो भूयांसः परिव्राजका ब्राह्मणाश्च समाजग्मुरधिजगिरे च विविधशास्त्राणि ससंतोषम्।

अस्य पाठनशैली छात्रजनसंतोषसमुत्पादिनी विलक्षणैवासीदितरसंस्कृताध्यापकापेक्षया। एष हि तथा सारल्येन बोधयति स्म कमपि कठिनतममप्यर्थं यथाऽस्याबुधोऽप्यन्तेवासिजनः सौकर्येण प्रभवति स्मात्मसात्कर्त्तुमेतमर्थम्। तेनैतेन गुणेनैष जयपुरजनतायां 'गुरूजी' तिनाम्नैव ख्यातिमलभत। न केवलं साधारणा जना एव किन्तु जयपुरीया राजगुरवोऽप्येनं सप्रश्रयं साभिमानं च स्वगुरुत्वेनाऽगणयन्, अपूजयंश्च गुरुपूर्णिमायामवितमां श्रद्धया भक्त्या च। अस्य गुणगौरवाकृष्टमानसाः पाठशालीया इतरविषयाध्यापका अप्यस्य सकाशादधीयते स्म। आसीच्चायं मौजमन्दिरस्थाया जयपुरराजकीयधर्मसभायाः संमाननीयः सदस्योऽपि।

शास्त्रार्थेऽस्य प्रौढिरपूर्वैवासीत्। मिथिलाजनपदे शास्त्रार्थेषु परमप्रसिद्धं विश्वनाथं महाभागमेष निरुत्तरयामासेत्यस्ति ख्यातिः। तस्य समये जयपुरे ये केचन समायाताः शास्त्रज्ञाः सुधियः, तैः सहास्यावश्यमेव शास्त्रार्थोऽभूत्। केनापि कारणेन कदाचित्कुपितं स्वदेशं प्रस्थितमेनं महाराजश्रीरामसिंहः पुनराकारयत्करोच्चास्य वेतनवृद्धिमित्यपि श्रूयते।

तमेतं महामहिमशालिनं महाभागं कवि-पण्डित-भिषग्वरः श्रीकृष्णरामभट्टः स्वनिर्मिते 'जयपुरविलास' नाम्नि संदर्भे इत्थमुपश्लोकयति स्म—

> वादिप्रौढतमिस्रखण्डनविधौ मार्त्तण्डबिम्बोदयः
> काणादादिसमस्तशास्त्रविपिनप्रोद्दामकण्ठीरवः।
> संसारव्यवहाररत्नजलधिर्वाक्सारिकापञ्जरः
> क्षीराम्भोनिधिफेनपाण्डुरयशाः श्रीजीवनाथो गुरुः॥

अध्यापनसमये शास्त्रार्थसमये चैव तथा गम्भीरं तारस्वरमुपयुङ्क्ते स्म यथा समीपवर्त्ती जनः स्मरति स्म कुण्ठेतरकण्ठं कण्ठीरवम्। येषां सन्निधे समुपस्थानमपि लोको दुर्धर्षमिव मन्यते स्म, तैः राजकार्यकर्मचारिभिः सहाप्ययं निर्भयं निःसंकोचं च संलपति स्म, समाद्रियन्ते स्म च तेऽप्येतं महता प्रश्रयेण। एतदुदाहरणरूपं घटनाद्वयमिहोद्ध्रियते—

१—पूर्वस्मिन् समयेऽत्रत्यः पण्डितवर्गो महाराजैः समये-समये पारितोषिकप्रदानादिभिः सत्क्रियते स्म। तत्रास्मै महाभागायापि कदाचिदासीद् द्विशतीप्रदानं प्रतिज्ञातम्। किन्तु निधानभवन-( खजाना ) कर्मचारिणामुपेक्षया वाऽऽलस्येन वा विलम्बोऽजायत। अथ धर्मसभाधिवेशनात् परावर्त्तमानेनानेन सह समगच्छत हर्म्यभाग एव तदानीन्तनो जयपुरराजकीयप्रधानामात्यः सामन्तैरपि दुर्धर्षप्रभावः श्रीकान्तिचन्द्रबाबूमहाभागः। तेन सप्रश्रयप्रणतिपुरस्सरं 'कथमद्य यावत् स्वदेशं न गतो भवान्?' इत्यनुयुक्तश्चायं निर्भयमुदवदत् यद् 'धन्योऽस्ति भवान्', भवतो निदेशा न पाल्यन्ते राजकर्मचारिभिर्यथावसरम्। तदेतत् स्वदेशप्रयाणविलम्बे बीजम्।' स चास्य तेन प्रतिवचनेन

## श्रीस्वामिनां गुरवः



समस्तशास्त्रपारीण-जयपुरराजसभापण्डित-गुरुवर
स्वर्गीय श्रीश्री जीवनाथमैथिल-महाभागाः, जयपुरम्



न्यायवेदान्तादिपारंगतब्रह्मनिष्ठस्वर्गीयस्वामि
श्रीनारायणमुनिचरणाः

संस्कृतरत्नाकरसमितिः, जयपुरम्




वामतः—पं० सूर्यनारायणशास्त्री व्याकरणाचार्यः राजगुरुश्रीचन्द्रदत्तमैथिलः व्या० आ० श्री ल० स्वामिनः स्वर्गीय सुन्दररायमिश्रः विद्यावाचस्पति पं० मधुसूदनमैथिलाः वैदिकविज्ञाननिधयः व्याकरणाचार्य पं० मदनशर्माणः म० म० पं० गिरिधरशर्मा व्या० आ० भट्टश्रीमथुरानाथशर्मा साहित्याचार्यः पं० केदारनाथशर्मा राजज्यौतिषी

प्रबुद्धः पार्श्ववर्त्तिनमनुचरमादिशदविलम्बं निधानभवनात् पारितोषिकोयवप्रदानाय । ततश्च सायं समये पिनद्धमपि निधानभवनमुद्घाट्य प्रादीयतास्मै तत् पारितोषिकद्रव्यम् ।

२—कदाचिदयं निजसहकारिणां विदुषां केनचिद् व्यवहारेणासन्तुष्टो 'मौजमन्दिर'स्थां राजकीयधर्मसभां परिजिहासुरजिज्ञपत् पूर्वोक्तममात्यमहाभागम् । तदेतदुपश्रुत्य सोऽवादीत् "यदि भवान् धर्मसभायां न यायात्, धर्मसभा न स्यात् किमपि वस्तु । अहं तु भवत्येव विश्वस्य निर्वहामि तत्रत्यं सर्वं कार्यभारम् ।"

स एष न केवलमध्यापक एवासीत्, किन्तु दुरूहसंदर्भव्याख्याताऽप्यासीत् । सन्त्येतास्तन्निर्मिता व्याख्याः—

व्युत्पत्तिवादटीका ( संस्कृतभाषायाम् )
सांख्यतत्त्वकौमुदीटीका ( ,, )
काव्यप्रकाशटीका—प्रदीपसारसंग्रहणरूपा ( हिन्दीभाषायाम् )
रसतरङ्गिणीटीका—'नौका' ख्या सारसंग्रहणरूपा इयं मुद्रितापि ( हिन्दीभाषायाम् )
मिताक्षराटीका— ( ,, )

स एष महाभागः सप्ततिवर्षाधिकवया विक्रमीयसप्तपञ्चाशदुत्तरैकोनविंशतिशततमे वर्षे शोचन्तं स्वजनवर्गमपहाय स्वर्गमार्गपथिकतामयासीत् । श्रूयते चैतत् तच्छवानुयायिमुखाद् यद् श्मशानेऽस्य शवे लोकोत्तरा दीप्तिरिवादृश्यत, तेन तत्प्रभाववशीकृतचेतसः सर्वेऽपि तच्छवं प्राणंसुरिति । अस्यैककस्तनयः श्रीहेमन्तबाबू जयपुर एव निवसति ।

४—श्रीनारायणमुनिः ।

अस्य तुरीयो विद्यागुरुरध्यात्मविद्याविशारदः प्रतिभाप्रभाववशीकृतशारदः श्रीहरिध्यानपरायणः श्रीनारायणमुनिरासीत् । स एष महात्मा पूर्वं पारस्यभाषापण्डित आसीत् । अथ युवावस्थायामभ्यगीष्ट सुरसरस्वतीम्, अलब्ध च तत्र निखिलबुधजनमनःप्रसादनं नितरां नैपुण्यम् । प्रथमतोऽयं पण्डितप्रकाण्डात् श्रीदादूसंप्रदायानुयायिनः श्रीरामशरणमहाभागादधीतवान् व्याकरणं न्यायशास्त्रं च, अधिगतवांश्च निखिलतन्त्रप्रवेशिनीं व्युत्पत्तिम् ।

ततश्चोदासीनसंप्रदायानुयायिनः श्रीकेशवानन्दस्वामिनः सकाशात् समधिगतवान् वेदान्तविद्याम्, अभूच्च तस्यामस्यातीव विशिष्याधिकारः । एवंविधविदुषोऽप्यस्य व्याख्यानानि सरलानि, सुबोधानि, रमणीयानि, रुचिराणि च भवन्ति स्म, यानि निशम्य न केवलं व्युत्पन्ना विद्वांस एव समतुष्यन्, किन्तु कथामात्ररसिकः साधारणजनसमूहोऽपि गहन-गहनाध्यात्मविषयानात्मसात् कर्तुमपारयत् । अनेन भगवत्पादश्रीमदाद्यशङ्कराचार्यविरचितस्य विवेकचूडामणेर्भाषाभावार्थं 'दीपिका'ख्या व्याख्याऽपि व्यधीयत ।

आचरणानि चास्य तथा निर्मलान्यासन् यथा सर्वोऽपि परिचितो जनस्तस्य सेवां सद्भावभरितेन मनसा श्रद्धया भक्त्या च विधातुमभ्यलष्यत्, व्यदधाच्च यथाशक्ति । भ्रमणशीलोऽप्ययं श्रीलक्ष्मीरामस्वामिनोऽध्यापनार्थमेव कञ्चित् समयमवात्सीज्जयपुरे ।

दादूविद्यालयस्य स्थापनावसरेऽस्य प्रभावशालि सकलजनमनोहरं च भाषणमभूत् । महात्मनोऽस्य सर्वसाधारणसाधुजनोपकारिण्यामस्यां संस्थायामतीव प्रेमासीत् । तेनात्रत्यच्छात्रसंघं वेदान्तशास्त्रं शिक्षयितुमामन्त्रितोऽयमस्य विद्यालयस्य दशमे वार्षिकोत्सवे समायातोऽपि च्छात्रसंघस्य सद्भाग्यशून्यतया स्वात्मन-

स्तमभिलाषमपारयन्नेव निजपरिचितजनतामपारे शोक-पारावारे निमज्जयन्नारुरोह निर्वाणपदम् ।

उपसंहारः ।

यद्यप्यस्य चत्वार एते प्रधानगुरव आसन् । तथापि प्रारम्भेऽयं व्यासोपनामकश्रीगङ्गावख्शमहाशया-दपि किञ्चिद्वैद्यागमाध्ययनमुपक्रान्तवानित्ययमपि महानुभावः श्रीस्वामिमहाभागस्य गुरुजनगणनावसरे न विस्मरणीय एव । इत्थमेष सर्वोऽपि विद्यागुरुसमुदायोऽस्मिन्नभिनन्दनावसरे सादरेण चेतसाऽनुचिन्त्यते, अभिनन्द्यते च तादृशभाग्यशालिशिष्यलाभोचितशुभावहविधिवत्त्वेनेत्यलमतिप्रपञ्चितेन ।



# श्रीस्वामिनां चिकित्सावैभवम्

( लेखकः—राजवैद्यपं० श्रीनन्दकिशोरशर्मा भिषगाचार्यः, आयुर्वेदप्रधानाध्यापकः, राजकीयसंस्कृतपाठशाला, जयपुरम् । )



संस्कृतरत्नाकरस्य प्रस्तुतायुर्वेदविषयकविशेषाङ्कार्थ-मायुर्वेदोद्धारकाणां धन्वन्तरिकल्पानां स्वनामधन्यानां श्रीलक्ष्मीरामस्वामिमहाभागसदृशानां महापुरुषाणां जीवनचरित्रसम्बन्धिनं चिकित्सानुभवं लिखितुमभिलषामि । परन्तु मादृशः स्वल्पज्ञो जनोऽस्मिन्कर्मणि कथङ्कारं सफलतामाप्तुं शक्नोतीति विचार्यमाणे हृदयं वेपत इव—तथापि यत्किञ्चन लिखितेनापि मम वैद्यबन्धूनां किमपि सम्बोधनं तु भविष्यत्येवेति विचार्य दीर्घकालं तच्चरणसरोरुहच्छायामाश्रयता वात्सल्यपूर्ण-दृष्टिनिरीक्षितेन मया यदस्मिन् विषये ज्ञातं तन्निवेद-यितुं साहसं विधीयत इति विज्ञाय विज्ञाः सन्तः प्रसीदन्तोऽत्र दृष्टिं निपातयेयुः ।

मान्याः ! चरकसुश्रुताद्यायुर्वेदीयग्रन्थालोचनेन प्रतीयते यदायुर्वेदस्य वैदिककालेऽभूदाविष्कारः । तस्मा-दतिप्राचीनसमयादारभ्यायुर्वेदः समुन्नतिशील आसीत् । अस्य प्राचीनत्वे वैज्ञानिकत्वे सर्वश्रेष्ठत्वे नाल्पीयानपि सन्देहः । अथर्ववेदस्य मन्त्रास्तेषां प्रक्रिया च यादृशः परमोन्नतचिकित्साविज्ञानस्य साक्ष्यं ददति तादृशं ज्ञानं जगतः कस्या अपि जातेः प्राचीनग्रन्थेषु दृष्टिगोचरं न भवति । अतः स्पष्टं यत् प्रागायुर्वेदस्य सूर्योदयो भारत एव समजनि । भारतीयानां वनस्पतिज्ञानं शारीरज्ञानं जीवाणुशल्यादिविज्ञानमपि सुशृङ्खलितं चागाधमासीत् । प्रायः सार्द्धद्विसहस्रवर्षपूर्वमपि भारतीयचिकित्साशास्त्रं गुरुस्थाननिविष्टमेवासीत् । किञ्च भारतीयायुर्वेदविज्ञानस्य लोकातिगं माहात्म्यमाकर्ण्यान्यदेशीया अपि बहवो विद्वांसोऽत्र समागत्य चिकित्साशास्त्रस्य गूढतत्वान्यधीत्य च स्वप्रदेशे तत्प्रचारमकुर्वन् ।

विदेशीयानामसकृदाक्रमणादहिंसाधर्मस्यातिरेकात्, पारस्परिककलहात्, धर्मराज्ययोः समुद्भूतनिरन्तर-क्रान्तिजनिताशान्तेः, किञ्चान्यहेतुभ्योऽपि भारते

वैद्यकशास्त्रस्य प्रगतिः क्रमशो ह्रासमवाप। केवलं पुस्तकपृष्ठेष्वेव ज्ञानं समाप्तम्। प्रयोगप्रधानस्याप्यायुर्वेदस्य शिक्षणव्यवस्था न समीचीनाऽभवत्। गतवति प्रभूततरे काले कालस्य परिवर्तनशीलत्वाद्भारतीयायुर्वेदमार्तण्डः क्रमेण तत्तद्देशाकाशप्रदेशान् प्रकाश्य पश्चिमां गतः।

अथ भारते ग्रन्थमात्रावशिष्टमप्यायुर्विज्ञानमचिराद्देशे शान्तिवातप्रधानतया विदेशीयचिकित्सकानां प्रचाराधिक्यानुकरणशीलत्वाद् विदुषां भिषजामाश्रयवशाद्वास्थिकङ्कालावमेषमपि पुनरुज्जीवनमवाप। प्रचारसमयेऽपि विविधैर्हेतुभिरायुर्वेदसम्बन्धे लोकेष्विदानीं बह्व आक्षेपाः प्रचलिताः सन्ति। तेष्वेकेन हेतुनाऽमुनाऽपि भवितव्यम्। यो हि नाम न किमपि कार्यं कर्तुमर्हति यस्य च कठिनविषयेषु प्रायशो मनो न प्रवर्तते स हि योगानां शतमुत न्यूनं वा संगृह्य चिकित्साक्षेत्रे समवतीर्णो भवति। मानवसमाजस्य जीवनसम्बन्धिनं प्रश्नं सारल्येनैव हस्ते कृत्वा सैषा प्रवृत्तिर्न केवलं साधारणी किन्त्वहराधजातीयैव नूनमिति मे विचारः। बहुभिः स्वार्थपरायणैरीदृश्यः शिक्षणसंस्थाः स्थापिता यासु निवेद्य द्रव्यराशिं भिषग्रत्नायुर्वेदाचार्याद्या मनोहारिण्य उपाधयो ध्रियन्ते लोकवञ्चनातत्परैः कैश्चन वैद्यविद्यामार्गप्रवृत्तैर्धनामधारिभिः।

महाभागाः! देशस्याधःपतनाय किंनु खल्वस्मादन्यद्भयङ्करमिति विचारयन्तु। मन्मते तु द्रव्यापहरणादिनिमित्तं विहिता अपराधाः परं क्षन्तव्या भवेयुः, किन्तु जीवनयात्रावसानकारिणोऽभियोगा नित्यं क्षमानर्हाः। इमे पदवीधारिणो वैद्या आरोग्यशास्त्रमनभ्यस्यैव चिकित्साव्यवसायमारभन्त इति महद्दौर्भाग्यम्। भगवतात्रेयेणापि चरके प्राणभिसर-रोगाभिसरभेदेन भिषग्द्वैविध्यं वर्णितम्। तद्यथा—"य इमे कुलीनाः, पर्यवदातश्रुताः, परिदृष्टकर्माणो दक्षः शुचयो जितहस्ता जितात्मानः..............प्राणानामभिसरा हन्तारो रोगाणाम्........। अतो विपरीता रोगाणामभिसरा हन्तारः प्राणानाम्..........भिषक्छद्मप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपकास्त्यक्तधर्मा राज्ञां प्रमादाच्चरन्ति राष्ट्राणि.....इत्यादि।" किञ्च ये शास्त्रविदः शुचयो रोगिनैरोग्यैकव्रतपरायणा भिषजस्त एव महर्षिभिरभिमताः।

चरके बहुषु स्थलेष्वीदृग्विधा उपदेशाः प्रायः सन्ति यानाश्रित्य चिकित्साकर्माणि प्रविष्टैः सर्वैरपि निःसंशयं ज्ञायते यत् लोकानुग्रहप्रवृत्तैस्तैरायुर्वेदाविष्कारः केवलं कल्याणकामनयैव विहितः।

यथा—"नात्मार्थं नापि कामार्थमायुर्वेदो महर्षिभिः।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम्॥१॥
परो भूतदयाधर्म इति मत्वा चिकित्सया।
वर्तते यः स सिद्धार्थः स सर्वमतिवर्तते॥२॥

भारतीयचिकित्साशास्त्रस्येदमेव वैशिष्ट्यं यदाधुनिकयुग इव केवलं व्यापारिकदृष्ट्या राजनैतिकदृष्ट्या स्वधर्मप्रसारणधिया वान्यैः स्वार्थगर्भैर्हेतुभिश्चिकित्साकर्म न चक्रुः प्राञ्चो मुनयः,—किन्तु निखिलभूमण्डलवर्तिमानवजातेः सुखकामनयैव प्रवृत्तोऽयं पुण्यप्रवाहः। हन्त! नाममात्रावशिष्टमेतद्वैशिष्ट्यमिति दृष्ट्वा कस्योदारहृदयस्य न दूयते हृदयम्।

प्रकृतिः सदा संसारस्य कल्याणमभिवाञ्छन्त्येव तिष्ठति,-रचयति च तदर्थमुपयोगसाधनानि। पश्यति चेन् कदाचन क्वचित् त्रुटिं तदा तां पूरयत्यपि। अत एव जगति रोगग्रस्ताञ्जनान् दृष्ट्वा—उदितदययाऽनया कल्याणकामनयैव महाप्रभावा दिवोदासभारद्वाजा-

त्रेयादयो महर्षयः प्रकटिताः। तैश्च प्रवाहितश्चिरायायुर्विज्ञानपुण्यप्रवाहः। परन्तु कालवशात् सोऽपि शुष्कप्रायः, पुनरेनं सञ्चालयितुं प्रकृतेः प्रेरणा जाता। अतः प्रकटिताः खलु भारते कतिपय आयुर्वेदप्राणा महापुरुषाः। ये कुर्वन्ति समवहितचेतसा चिररोगिणश्चिकित्साशास्त्रस्यास्य चिकित्साम्। तेषामन्यतमे गुणेषु प्रथमे महात्मश्रीलक्ष्मीरामस्वामिमहाभागाः सर्वेषामेव वैद्यानामादरणीयानुकरणीयचिकित्साचरित्राः। एते हि– अद्भुतशक्तिसम्पन्ना अभूतपूर्वा इव प्रभूतप्रतिभाः शास्त्रानुशीलनैकतानमनसो, जयपुरराजकीयसंस्कृतविद्यालयतो लब्धसर्वप्रथमभिषगाचार्यपदवीका अनुमानत एकोनविंशतिशतषट्पञ्चाशदब्दे (१९५६)—आयुर्वेदीयचिकित्सापद्धतेरभ्यासार्थं कलिकातां गतवन्तः। तत्र तत्कालीनानाम्भारतप्रसिद्धानाम्महामहोपाध्यायकविराजश्रीद्वारिकानाथसेनमहोदयानां सविधे चिकित्साशास्त्रमभ्यस्यन्त आसन्। षष्ठवैद्यसम्मेलनस्य सभापतिपदे निर्वाचितैः श्रीस्वामिमहाभागैर्व्याख्यानावसरे अमुमेवाशयमुद्दिश्यैकं पद्यमप्युक्तम्—

तद्यथा—"सद्वैद्यागमनित्यखेलनकलारङ्गानुपागामिमान्—
वङ्गान् भेषजसम्प्रयोगपटुताकामः कदाचित्पुरा।
एतेष्वेव च सत्क्रिये यदधुना मन्दोऽप्यहं द्वारका—
नाथस्याखिलवैद्यभूषणमणेः सोऽयं प्रसादोदयः॥"

अथ कियता कालेन जयपुरं प्रत्यागत्य राजकीयसंस्कृतविद्यालये वैद्यकप्रधानाध्यापकपदप्रतिष्ठिता नानादेशागतांश्छात्रानध्यापयन्तोऽपि चिकित्सापथे प्रवृत्ता एवासन्। इमे हि न केवलं जयपत्तन एव किन्तु भारतप्रसिद्धयशसश्चिकित्सकवर्याः सन्ति। एतेषां चिकित्साप्रणाली च विशुद्धायुर्वेदीयपद्धतेरेवानुगामिनी। स्वामिमहाभागानां चिकित्साक्रमं दृष्ट्वा भारतीयचिकित्साप्रणाल्या उत्तमं वैभवमुच्चादर्शश्च मनसि जागर्ति।

स्वामिनोऽतीव मननशीला मितभाषिणश्च सन्ति। यदा कमपि रोगिणं पश्यन्ति तदा मननं कुर्वन्त एव तूष्णीं तिष्ठन्ति। नाधिकं सर्वसाधारणवैद्या इव वाक्प्रागल्भ्यं प्रदर्शयन्ति। न च प्रतिजानते यदयमेतावता कालेन स्वस्थो भविष्यतीति। बहुधा रोगिभिः कृतप्रश्ना अपि गाम्भीर्येण चराचरगुरुर्भगवानेवारोग्यप्रद इति सप्रेमोत्तरं ददति। आयुर्वेदस्य प्राणभूतसिद्धान्तस्त्रिदोषविज्ञानन्त्वेतेषां चिकित्साप्रणाल्यां पदे पदे दृष्टिगोचरं भवति। चिकित्साकार्यकर्तॄणां देशकालप्रकृतिसम्बन्धिज्ञानमत्यावश्यकमस्ति। विनैतज्ज्ञानं चिकित्सका उपार्जितवैदुष्या अपि सिद्धहस्ता न भवितुं शक्नुवन्ति। यतो यावद्भेषजं देशकालप्रकृतीनामनुकूलं न भविष्यति तावद्रोगिणः कदापि लाभं कर्तुं न पारयति। प्राचीनमहर्षीणामिदं ज्ञानमवितथमासीत्, अत एव तेषां प्रयोगा न कदापि निष्फला अभूवन्। अपितु रामबाणा इव स्वलक्ष्यं विध्यन्ति स्म। सम्प्रति क्रमशो ह्रासं जगाम तल्लक्ष्यवेधकं ज्ञानम्। शतश औषधेषु संगृहीतेष्वपि रोगिणो वास्तविकं स्वास्थ्यं न लभन्ते। दूषयन्ति च चिकित्सकान्—यदेतावन्ति दिनान्यमुकवैद्यस्य चिकित्सा कारिता किन्तु स्वास्थ्यं न संवृत्तम्।

अत्र विचार्यमाणे वैद्यैर्नाम प्राचीना शास्त्रीया चिकित्साप्रणाली परित्यक्ता—इत्येव हेतुरुपलभ्यते। नानानुभूतयोगा एव सर्वस्वभूता निधय इव स्मर्यन्ते चोपयुज्यन्ते भिषग्भिः। यद्यनुभूता योगा अपि शास्त्रीयसिद्धान्तानुसारं द्रव्यगुणपर्यालोचनया सुसंस्कृताः

स्युस्तदाधिकं कार्यकराः सञ्जायेरन्निति मे विश्वासः। सिद्धाः परीक्षिता गुणकारका योगा रोगिणां प्रकृतेर्देशकालयोश्चानुसारं प्रयुज्यमानाः सफलीभवन्ति। अन्यथामृततुल्या अपि ते विषवद्धिगादजनकाः सम्भवन्ति। अमुनोद्देशेनैव शास्त्रे सहस्रशो योगाः प्रदर्शिताः। श्रीस्वामिपादास्तु त्रिदोषमूलिकां रोगिप्रकृतिं देशकालौ च सम्यग्विभाव्य विशुद्धैरायुर्वेदीययोगैश्चिकित्सां कुर्वन्ति। अनेकवारं साधारणयोगैरपि चमत्कारो दरीदृश्यते। तेषां चिकित्साप्रणाल्यान्तु मूलतश्चरकसिद्धान्ता एव निविष्टाः सन्ति। ते शास्त्रप्रयोगानपि चरकसिद्धान्तानुसारमेव विविधानुपानैर्व्यवहरन्ति। एतेषां समुदारहृदयेऽन्यचिकित्साप्रणालीनामपि कृते समादरपूर्णं स्थानं विद्यते।

यूनानीचिकित्सापद्धतिस्तु—आयुर्वेदीयसिद्धान्तमेवावलम्बिता। यतो हि पूर्वं भारतादेव ग्रीसदेशे चिकित्सानुभवो गतः। तदीयः शोणितचतुर्थः त्रिदोषसिद्धान्तो धन्वन्तरिमतानुसार एवेति को नाम विद्वान विवदेत्। तत्रत्यानां नगरदेवतानां नामानि प्राचीनयन्त्रशास्त्राणामाकृतयश्च भारतीयसादृश्यमावहन्ति। श्रूयते हि ग्रीससम्राजा–अलेक्जैण्डरसिकन्दरेण भारतमागत्यावलोक्य चात्रत्यां चिकित्सां विस्मितेन सता स्वसहचरौ चिकित्सकधूर्वहौ भारतीयायुर्वेदीयचिकित्साभ्युपगमार्थं भारत एव कञ्चित्कालं स्थातुमाज्ञातौ। क्रमेण च ग्रीसतो युरूपं गतो ज्ञानराशिरिति तदीययात्राग्रन्थेभ्यः प्रतीयते। यूनानदेशेषु सुश्रुतचरकयोरनुवादेऽपि परम्परया संजात इत्यपि कैश्चिदभिमन्यते। भारते हि यूनानीया चिकित्साप्रणाली तद्देशाक्रमणकारिभिः सहैवागता। अत एवास्यां भारतीयायुर्वेदसम्बन्धिनामनेकेषां भेषजानां वाजीकरणादियोगानाञ्चोल्लेखः समुपलभ्यते। पाश्चात्यचिकित्सासम्बन्धे तु तदीयशारीरक्रियाशास्त्रे, शल्यतन्त्रे जीवाणुविज्ञाने च बहुशिक्षितव्यमिति ज्ञानं सर्वत्रोपादेयमिति स्वामिनामादेशः।

प्रायश एतादृशाः सहानुभूतिपूर्णा विचाराः स्वामिमहाभागेषु तेषामौदार्यमेव प्रकटीकुर्वन्ति। एतेषामसाधारणप्रतिभासम्पन्नचिकित्साया अयं बहुलश्चमत्कारो यत् जयपुराद्बहिश्चिकित्सां कर्तुं गतैः श्रीमद्भिः प्रारम्भे दशमुद्रा एव पुरस्कारत्वेन स्वीकृता आसन्। सोऽयं पुरस्कारोऽपि क्रमशः समुन्नतिं भजमानः प्रत्यहं पञ्चशतमुद्रारूपेण परिणतः। एतादृशे वैभवे भूयसि चिकित्साप्रसारे च स्वभावे महत्सारल्यं, विनयो दया चानुभूयते। तत्सत्यं महात्मनाञ्चरित्रस्यैव ख्यापकम्।

चिकित्सावशात् श्रीस्वामिनो भारतीयेष्वनेकेषु प्रसिद्धस्थानेषु समये समये यात्रामकुर्वन्। सर्वेषां नामानि विहाय केषांचिन्मुख्यानां नगराणां यात्रासूची निम्नलिखितास्ति—मथुरा, इन्दौर, पानीपत, खुर्जा, बरेली, जबलपुर, इलाहाबाद, देहली, बम्बई, आबू, उदयपुर, मद्रास, अमृतसर, कोटा, बीकानेर, बूंदी, शेखावाटी, अजमेर, जोधपुर, किशनगढ़, ग्वालियर इत्यादिषु महानगरेषु प्रतिष्ठितगृहाणां मध्ये धनिकैः श्रेष्ठिभिरन्यैः श्रीमद्भिश्च समये समये चिकित्सार्थं समाहूता गतवन्तः। सर्वत्र देशे चिकित्सायशसः प्रसाराधिक्याद्राजस्थानेष्वनेकसामन्तमुकुटमणीनां भूपतीनामपि सविधे चिकित्सामुद्दिश्यासकृद्गतागतं जातमेतेषाम्।

बीकानेरमहाराजाधिराजाः श्रीगङ्गासिंहवर्माणस्तु अनुमानतः †दशवर्षेभ्यो भवतामेव चिकित्सायां सन्ति।

---

†महाराजेन स्वेच्छया प्रदत्तं संतोषपत्रं परस्ताद्विलोक्येत। महामहापुरुषाणामपि चिकित्सालाभसूचकान्यभिनन्दनपत्राणि सन्त्यनेकशः। परंतु असिच्छया विस्तारभिया च—अत्यामहवशात्कतिचिदेव पत्राणि लेखेनानेन सह मुद्राप्यन्ते।

इति प्रदर्शनात् पूर्वं यत्र सम्प्रदाये ते गृहीतदीक्षास्तस्य परिचयप्रदानमपि नानुचितं भवेत् ।

स्वामिनां दीक्षासम्प्रदायो 'दादूपन्थी' इति नाम्ना ख्यातः । अस्य प्रवर्तका आचार्या महात्मानः 'श्रीदादूदयालु'महाभागा आसन् । तदाख्ययैव चायं सम्प्रदायो 'दादूपन्थी'ति नाम्ना रूढिमापन्नः । ते चैकाधिके षोडशशततमे वत्सरे भुव्यवतेरुः । ते हि तदानीन्तनाः सिद्धा आसन् । भगवदाराधनमेव च मुख्यं लक्ष्यमङ्गीकृत्य निरन्तरमीश्वरोपासनया समत्वं प्राप्य परोपकरणैकतत्पराः सन्तस्स्वीयं जीवनं सफलमकार्षुः । पक्षपातशून्यं तेषां शान्तिदमुपदेशमाकर्ण्य शतशः सहस्रशश्च लोका अनायासेन दुस्तरम्भवसागरान्तमुत्तीर्णाः । विहरणभूमिश्चैतेषां प्रायो जयपुरराज्यमेवासीत् । विशेषतया च 'साम्भर' 'आमेर' 'भैराणा' 'नराणा' एतदादि नगरेषु निवसन्ति स्म । षष्ट्यधिके षोडशशततमे वैक्रमे हायने च नराणानगर एव स्वीयं पाञ्चभौतिकं कलेवरमपहाय ते परं पावनं वैकुण्ठं धामायुः । अद्यापि च तेषामुपदेशगर्भिताया वाचः पद्यमयः संग्रहो लोके ख्यातिमापन्नो 'दादूजी की वाणी' इत्याख्ययाऽऽख्यातः ख्यापयति तन्महत्त्वम् । तत्स्वाध्यायेन तन्माहात्म्यं कथं व्यक्तीभवतीति तु तज्ज्ञानां नाविदितम् । तेषाञ्जीवनकाल एव शरणमापन्नेष्वसंख्यातेषु जनेषु प्रमुखाः शिष्या द्वापञ्चाशदेवासन् । तावत्य एव तेषां शाखाश्चैतर्ह्यपि समाजे प्रचालितास्सन्ति । आस्वन्यतमायाः शाखाया मुख्याः श्रीवड़सीरामस्वामिनस्तेषां परम्पराप्राप्ताः शिष्याः 'कालाडेहरा' नाम्नि ग्रामे न्यवसन्। एतच्छाखाप्रभवा एव जयपुरवास्तव्याः पूज्यपादा अधिगततत्त्वविशेषविदश्छन्दःशास्त्रतत्त्वविशारदा वैद्यवरेण्याः श्रीचन्दनदासस्वामिनस्तत्रभवतां गुरुपादानां दीक्षागुरव आसन् । पञ्चत्रिंशदधिकैकोनविंशतिशततमेऽब्दे पञ्चवर्षवयस्का गुरवः स्वर्गीयाणां तेषां शिष्यत्वमुररीकृत्य दीक्षामापुः । तदाप्रभृत्यद्य यावत् अतीतं षट्पञ्चाशद्वर्षात्मकं कालं सम्प्रदायेन सह श्रीमतां सम्बन्धः स एवास्ति। एते दीक्षाग्रहणसमकालमेव विद्याध्ययने नियोजितास्सन्तः सामान्यशिक्षया सहैव यथासम्प्रदायं धार्मिकग्रन्थानप्यधिजगिरे । साम्प्रतमपि तत्रभवन्तो गुरवः श्रीदादूदयालुवाणीमतीव श्रद्दधाना नित्यं पठन्ति । तदानीन्तनसंस्कारा एवात्र कारणम् ।

पञ्चमवर्षादाद्वाविंशतितमवर्षमध्ययनकालो भवताम् । एतावन्तं कालं साम्प्रदायिककार्येषु साधारण एव सम्बन्धोऽभूत् । अध्ययनसमाप्तिसमकालमेवाध्यापने चिकित्साकर्मणि च प्रवृत्ताः । अयमेव च भवतां प्रवचनकालो व्यवहारकालश्च । पञ्चचत्वारिंशद्वर्षाणि यावत् पूर्वोदाहृतकार्यद्वयपरिपूरण एव निरता आसन् । साम्प्रदायिकानि कार्याणि च भवद्भूतिमपेक्षमाणानि सम्यक् साधितानि भवद्भिः। पूर्वोक्तकार्यद्वयप्रवृत्तिसमय एव समाजसम्बन्धिसामान्यपरिस्थितिः श्रीमतां मन आचकर्ष । यथाकालं साधूनां सामाजिकेषु कार्येषु घटिताभिर्विशिष्टाभिर्घटनाभिरपि तच्चेतः प्रभावितमासीत् । शिक्षितानां प्रतिष्ठितानाञ्चैतत्समुदायं प्रति परिवर्तमाना भावना अपि न तेषां दृक्पथाद्दूरं गताः । सम्प्रदायस्यास्य प्राथमिकोद्देश्यस्याचिरम्भाविनी न्यूनतापि श्रीमतां नाविदितासीत् । साधवः सचेष्टाः सन्तः कथं स्वीयमुद्देश्यं पूरयितुं सन्नद्धा भवेयुरिति सर्वदा चिन्तयन्ति स्म । येषां कार्याणां पूर्तेर्भारोऽस्मिन् समुदायेऽस्ति साधवस्तान् पूरयन्त्वन्यथा संज्ञामात्रेण किमा-

त्मकं स्वस्य लोकस्य वा हितसाधनं स्यादिति च साधुषु वर्धमानामविद्यामादकद्रव्यव्यसनं वृथाहंकारं च पश्यन्तो भृशं खिन्ना बभूवुः। साधुजीवनयापनाय किं किमावश्यकम् ? साधुतासंरक्षणं वस्तुतः कियत् क्लिष्टमिति याथार्थ्येन विदन्ति स्वयमनुभूतत्वात्। आदित एव साधुसमुदायाहितैकमनसश्चासन्। परन्तादृश्यो भावना अनुकूलावसरं विना कार्यतया न परिणताः, सामान्यतश्चिकित्सासमकालमेव प्रवृत्ताः। रोगग्रस्तत्वाद् व्यावहारिकपरिस्थितिवशतो वा ये साधवो भवदन्तिकमागतास्तान् नूनं प्रभावयितुं यतन्ते स्म।

श्रीमतामादर्शचरित्रं शुद्धाश्च विचाराः प्रतिजनं नूनं न्यूनमधिकं वा प्रभावयन्तिस्म। एवं शनैश्शनैः स्वकार्यक्षेत्रे साधूनामुन्नतेः सुधारस्य च को मुख्य उपाय इति विचारयद्भिरन्ते इदमेव निश्चितं यत् सर्वोऽपि लोकः समुन्नत्यै प्रथमं शिक्षामपेक्षते। शिक्षैव मनुष्यं कर्तव्यं बोधयति। कर्तव्यपरायणतैव वस्तुतो मनुष्यत्वम्। व्यक्तिसमष्टिरेव समुदायः, व्यक्तियोग्यत्वे सति समुदाययोग्यत्वम्, तदयोग्यत्वे सति तस्याप्ययोग्यत्वं स्वभावसिद्धम्। अतः सर्वतः प्रथमं समाजस्योदयाय शिक्षाप्रचार आवश्यकः। वर्तमानः कालः शिक्षायुगोऽस्ति। सर्वत्रैव शिक्षायाः प्राधान्यमतः साधुष्वपि शिक्षैवावश्यकी। ईश्वरानुग्रहाच्च श्रीमतामियं भावनाप्यचिरेणैव कार्ये परिणता। षट्सप्तत्यधिकैकोनविंशतिशततमे विक्रमीये वत्सरे दादूसम्प्रदायाचार्यैः श्रीस्वामिभिः श्री १०८ दयाराममहाभागैः साधूनां बृहत्सम्मेलनमायोजितम्। ईदृशे शुभेऽवसरे प्रायशो बहवः साधवो नराणानगरे सङ्घीभवन्ति। भवत्सन्निधावपि पत्रं प्राप्तम्। शैशवानन्तरमद्यावधि भवद्भिर्नेदृशोऽवसरः प्राप्तः। एतस्मिन्नेवावसरे किंचित्कर्तव्यमिति चिरमनोरथैः प्रेरिता अभूवन्भवन्तः। तदवधि श्रीमतां व्यक्तित्वं प्रभावश्चेत्युभे अपि अलमुन्नते आस्ताम्। श्रीमतां सरलं स्वभावं निरहङ्कारव्यवहारं सदाचारं च सर्वोऽपि साधुवर्गोऽतिशयेनाद्रियते स्म।

सम्मेलने सङ्गमनेन श्रीमताञ्चिकित्साकर्मणि प्रत्यहमवलोकनमपेक्षमाणानां बहूनां रोगिणामनवलोकनरूपः, तत्र सप्ताहपरिमितसमयव्ययरूपश्च परमोऽन्तरायो यद्यपि समुपस्थितस्तथापि तत्र गमनमेवोचितमिति निर्धार्य तद्बृहत्सम्मेलनमलमकुर्वन्। तत्र चोत्सवावलोकनमात्रमेवोद्देश्यं नासीच्छ्रीमतामपि तु स्वीयभावानां कार्ये परिणतिरेव। तत्र गत्वैव मुख्यैः सम्प्रदायमहानुभावैस्सह स्वीयभावान् तेषां पुरः प्रकाशितवन्तस्ते चोररीकृताः सर्वैस्सहर्षम्। को नाम भवद्भिर्न प्रभावितो भवेत्। अथैवमनुमोदितांस्तान् प्रस्तावान् पुनरेकां महतीं समितिं विरचय्य मध्येसभं श्रावितवन्तो भवन्तस्तत्र च न कोऽपि श्रीमतां प्रत्यवातिष्ठत। एवं सति तस्मिन्नेवाहनि शिक्षासंस्थामेकां स्थापयितुं धनसंग्रहोऽप्यारब्धः। शिक्षासंस्थायाः प्रतिष्ठायै लक्षपरिमितस्य धनराशेरावश्यकत्वं श्रीमद्भिः प्रतिपादितम्। तत्रैव चैकत्रिंशत्सहस्रपरिमितस्य धनराशेः प्रदेयत्वेन लेखबन्धोऽभूत्। आरम्भ एवैवंविधस्सहयोगो निश्चयेनोत्साहवर्धक आसीत्। 'नराणा'ग्रामात् परावर्तनानन्तरमेव संस्थास्थापनकार्यं झटिति यथा स्यादित्येव तैः प्रयतितम्। भवत्कृतस्य साम्प्रदायिकहितस्यैत एवारम्भोऽभूत्।

निरन्तरं श्रमेण सप्तसप्तत्यधिकैकोनविंशतिशततमे वैक्रमे वत्सरे शुक्ले ज्येष्ठे दशम्यान्तिथौ चिरन्तनः स्वाभिलाषो 'दादूमहाविद्यालय'रूपेण पूरितः।

अस्य स्थापनसमये चतुर्दशसहस्रं मुद्राः, अध्येतारश्छात्राश्चैकादश आसन्। ततः शनैश्शनैर्भवतां श्रमेण प्रेरणया वोत्तरोत्तरं विद्यालयोऽयं वृद्धिमेवाभजत्। सम्प्रति विद्यालयेऽध्येतारः पञ्चाशत्संख्याका विद्यामधीयते। सप्ततिसहस्रमुद्रापरिमितश्चास्य धनराशिः। त्रयोदशवर्षाण्यजस्रं साहाय्यं ददत एवासते विद्यालयायास्मै। यद्येवमेवोच्येत यच्छ्रीमतां साहाय्येन सहयोगेन वा कार्यमिदं निर्वहति तदा न काप्यत्युक्तिः स्यात्। मध्ये च बहुवारमेतत्सम्बन्धिषु कर्मसु विपुलः श्रमो भवद्भिर्व्यधायि। सामान्यतया समुदायो नाद्रियते विद्यां साधूनाम। आचिरादागन्तेषां विद्योपेक्षणमद्यापि तदवस्थमेव। यत्र समाजे समुदायस्याधिकांशः शिक्षां नापेक्षते तत्र विद्याप्रचारो नास्ति सुकरं कर्म। परं श्रीमद्भिस्तु प्रतिपक्षीभूताः समेऽप्यन्तराया निरस्ता एव। यथाशक्ति तदभ्युदयायैव च श्रमोऽकारि।

सम्प्रदायस्य हितेषु सर्वेष्वपि कर्मस्वेतदेव मुख्यं कर्म श्रीमताम्। श्रीमद्भिः स्थापितं कार्यमेतद्भविष्यति सन्ततमुन्नतिमेष्यति चेत्तर्हि कियाँल्लाभः सम्प्रदायस्य भविष्यतीति नाविदितं शिक्षाप्रणयिनां सज्जनानाम्।

अतीतेऽस्मिन् समये विद्यालयीयकार्यतोऽतिरिक्तानीतराण्यपि सम्प्रदायहितानि कार्याणि साहाय्यदानेन भवद्भिस्समनुष्ठितानि। तत्र च घटनाद्वयं विशेषतः परिगणनीयमस्ति। तद्यथा—

सप्तसप्तत्यधिकैकोनविंशतिशततमेऽब्दे सम्प्रदायाचार्याः श्रीमन्तो दयारामस्वामिमहाभागास्स्वीयस्थानोत्तराधिकारं स्वशिष्यनाम्ना राज्यशासनेन (राजिष्ट्रीद्वारा) प्रमाणीकर्तुमभिलषन्ति स्म। अनुचितञ्चैतदासीत् सम्प्रदायपद्धत्या। तदानीं सम्प्रदायाचार्ययोः परस्परं प्रबलो विरोधः समजनि यत् साधुसमुदायः किलैकमतिराचार्याणां विपक्षे तदात्वेऽभूत्। श्रीमन्त एव शमयामासुस्तम्। नोचेच्छ्रीमद्भिस्तदोद्योगोऽकरिष्यत न जाने स पारस्परिको विरोधः केन रूपेण परिणतोऽभविष्यत्। एवमेव पुनरेकदा अष्टाशीत्युत्तरैकोनविंशतिशततमेऽब्दे तत्रत्यानामाचार्याणां देहावसाने नूत्नाचार्यनिर्णयकाले सम्प्रदाये समुपस्थितमतभेदं भवन्त एव महीयसा निजोद्योगेन शमयामासुः। एवं समये समये समुपस्थितानि बहूनि सम्प्रदायसम्बन्धीनि कार्याणि यथाशक्ति स्वसहयोगेन पूरितानि।

हरिद्वारे दादूपथानुयायिनां साधूनां मन्दिरमेकमस्ति। बहूनि वर्षाणि श्रीमन्तस्तस्य संरक्षकपदमलंकुर्वन्ति। तदाप्रभृत्येव तस्यावलोकने साहाय्ये चाधिकं सहयोगं श्रीमन्तोऽदुः। साहाय्यप्रदानातिरिक्तं सत्यावश्यके कार्ये तन्निष्पत्तये तत्र गतवन्तोऽपि बहुवारम्।

प्रागुदर्शितानि श्रीमतां सर्वजनीनानि कर्माणि, परं व्यक्तिगतानि सुकृतानि तु गणयितुमशक्यान्येव। भवत्साधनीये कर्मणि साहाय्यार्थमागतो न कोऽपि साधुर्विफलमनोरथो निवृत्तः।

साधुसमुदायोऽधुनापि चिरविस्मृतां स्वीयामभ्युदयदशां तथैव प्राप्नुयादित्यादिका भावनाः श्रीमतां हृदयं वासयन्त्येव। स्वीयबाल्ये यादृशी साधूनामवस्था भवद्भिराकर्णिता चक्षुर्विषयीकृता वा सा न कथमपि विस्मरणीयास्ति। यं सम्प्रदायं सुन्दरदासरज्जबप्रभृतयः कविवराः समलञ्चक्रुः, यं च विद्यावारिधिः स्वामी निश्चलदासो वृत्तिप्रभाकरविचारसागरादिग्रन्थान् विरच्य गौरवान्वितं विहितवान्, यस्य च महात्मानो योगिराजसिद्धपुरुषादिपदवीर्दधानाः भक्तरामरामरूपहरजीरामसदृशा अङ्गभूत

आसन्, यच्च रसपुञ्जलालसदृशाः कवय आत्मारामसदृशा वैद्याश्च जन्मनालञ्चक्रुर्यापि यन्निर्मितेनात्मप्रकाशाभिधेन ग्रन्थेन सहस्रं मानवाः वैद्यव्यवसायं कुर्वाणा द्रव्यं यशश्चार्जयन्ति, यश्च सम्प्रदायः महात्मनो धनीरामशेषरामतुह्रीरामसदृशान् परमेश्वरभक्तान् संसृतिपथं प्रापयामास, नन्दराममण्डलीश्वरकेवलरामगोपालदासतुल्याश्च त्यागिनो नरा दीक्षां प्राप्य यस्मिन् समाजे श्रीदादोर्वाण्या महत्त्वं स्थापितवन्तः, ईदृशस्य सम्प्रदायस्य गौरवमभ्युदञ्च श्रीमद्भ्यः कथं न रोचेत ?

यस्मिन् सम्प्रदाये शतशः परिगणनीया महात्मानो जन्म लेभिरे, साम्प्रतमपि स तामेवावस्थां स्वीयाङ्कच्छेदित्येवोत्कटोऽभिलाषः श्रीमताम् । अनुरूपश्चायं सततं पञ्चदशवर्षेभ्य एनं समाजमभ्युद्गमयितुं प्रयतमानानाम् । उपरिनिर्दिष्टामाकाङ्क्षामीहमानास्सहयोगं वा ददतो विभिन्नानि साम्प्रदायिककार्याण्येव न पूरयामासुरपितु तत्र धनसाहाय्यमपि प्रचुरं ददुः' ।

श्रीमन्तस्स्वोपार्जितस्य धनस्य यत् 'ट्रस्टपत्रम्' अकुर्वंस्तत्र विंशतिसहस्रं रूप्यकाणि सम्प्रदायहितानां कार्याणां कृते रक्षितानि । उपयोगश्च तेषामित्थं भविष्यति—दशसहस्रं 'दादूमहाविद्यालय' कृते, पञ्चसहस्रं साम्प्रदायिकानां पुस्तकानां प्रकाशनाय संरक्षणाय च । अवशिष्टं छात्रवृत्तिरूपेणोपयोगं प्राप्स्यति । एतद्धनराशिसाहाय्यादतिरिक्तं प्रागपि भवन्तः पञ्चसहस्ररूप्यकेभ्योऽन्यूनं साहाय्यं विद्यालयाय ददति स्म । हरिद्वारस्थमन्दिरेऽपि द्विसहस्रं रूप्यकाणां साहाय्यरूपेण भवद्भिर्दत्तम् । स्वर्गतैः श्रीठण्ढरिममहात्मभिः साम्भरामेरस्थमंदिराणां जीर्णोद्धाराय यदा प्रयतितन्तदापि श्रीमन्तस्सहर्षमुचितं साहाय्यमकुर्वन् । अन्यदपि, प्रयागहरिद्वारादिकुम्भेषु साधुसमुदायसेवाकृते पर्याप्तधनराशिर्व्ययीकृतस्तत्र तत्रगतैः श्रीमद्भिः । वैयक्तिकानान्तु साहाय्यानां गणनैव का ?

इत्थं च मनोवाक्कायकर्मभिर्या महती सेवा सम्प्रदायस्य श्रीगुरुचरणैर्विधिवत्कृता सा नितरां स्तुत्यैव । ये महानुभावाश्चिकित्साकर्मण्येवोत्कृष्टान् मन्यन्ते ते पश्यन्तु, न केवलमेते प्राप्तयशस्काश्चिकित्साकर्मणि निपुणाः प्रत्युत साधुसमाजस्याधारस्तम्भा अपीति ।

साधुसमाजस्य श्रीमद्भिर्यथा हितं समनुष्ठितन्नहि तथेतरेण तत् सम्भाव्यते ।

एतर्ह्यपि श्रीमन्तो गुरुपादाः साधुसमुदायस्य गौरवभूतास्सन्ति । प्रार्थयेऽहं भूयोभूयः परमपितरं जगदीश्वरं यत्स मान्यान् गुरुपादांश्चिरं जीवयेत्, येन भविष्यत्यपि साधुसमुदायस्यान्यदधिकं शुभम्भूयात् ।

---

स्वामिमहाभागस्य

# स्वभावपरिचयः

[ १ ]

'वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ।।'

व्यतीता सा पूर्वसंकथा संप्रति विस्मृतिगर्भे विलीना । पञ्चविंशतिवर्षाणां सुदीर्घेऽस्मिन्नन्तरे समय-शिल्पिना हृदयपटले नानाचित्राण्यङ्कितानि, हन्त हन्त प्रमृष्टानि च । परं हृदयान्तस्तले गभीरतरमुत्कीर्णाः काश्चिद्रङ्गरेखा नाद्यापि हन्त हृदयपटलमुज्झन्ति ।

आसीत्सा सुप्रसन्ना शरद्रजनी । निखिलं दिङ्मण्डलमुद्भासयता शारदशशाङ्केन शान्त-शीतलीकृतं जगत् काञ्चिदनिर्वचनीयां निर्वृतिमनुभवति स्म । नीरवनिस्तब्धे तस्मिन्नर्द्धरात्रे सर्वोपि लोकः शान्तिमये निद्रादेव्याः क्रोडे विश्राम्यन्नासीत् । परं मद्गृहे स समयः सर्वेषामेव गृहजनानां कृते अशान्तिमय एवासीत् । प्रसवपीडामनुभवन्त्या मत्पत्न्याः कष्टेन सर्वोपि गृहजनः खेदमन्वभवत् । हन्त हन्त प्रथमप्रसवनिमित्तो हर्षः प्रत्येकक्षणे क्षीयमाण एवासीत् । कष्टमये व्यातियत्येव कियतिचन समये स्त्रीषु कोलाहलः प्रासरत्—'मृतो बालक उत्पन्नः । त्वरिततरं प्रसूतायाः समुचित उपचारः क्रियताम्' ।

गुरुजनेषु वर्तमानेषु एवंविधकार्याणां मम चिन्तैव काऽऽसीत् ? परम् आन्तरिकः स्नेहबन्धो मामप्यलक्षितं जागरयति स्म । शयनीयोपरि शयानो निद्राभिनयं कुर्वन्नपि हृदये अभूतपूर्वं क्लेशमन्वभवम् । एतावत्येव सरभसमागत्य पितामहैः प्रोक्तम्—'मथुरा ! वध्वा मूर्च्छा संजाता । शरीरेपि शीतलताऽनुभूयते । सर्वेपि जनाः संप्रति कार्यव्यस्ताः । त्वमेव शीघ्रतरं गच्छ । स्वामिनां सकाशात् कस्तूरिकाम् अन्यद्वा उष्णतौषधमानय ।'

रात्रेर्द्विवादनसमयो भवेत् । शान्तिमयेस्मिन्समये दीनातिदीनोपि प्रसह्य जागरणक्लेशं न सहेत । ये पुनः समस्तं दिनं मस्तिष्कसंबन्धिकार्याणि कृत्वा, जीवनमरणसमस्यायामान्दोलितान् कठिनरोगिणश्चिकित्सित्वा, संप्रति विश्रामं कुर्वन्ति, तेषामनवसरे जागरणं किं साधारणी कथा ? ततोपि न मे गाढः परिचयः । ते आयुर्वेदस्य प्रधानाध्यापकाः, नगरे प्राप्तसंमाना धनिनश्चिकित्सकाः । ततोपि परम्परागताया गृहारामादिप्रभूतसम्पत्तेः स्वामिनः स्वामिनः । अहं तु पाठशालायाः साहित्याचार्यश्रेण्यामधीयान एको विद्यार्थिमात्रः । विद्यासु कृतश्रमो व्युत्पन्नश्चाहमित्यवश्यं मदुपरि तेषां पक्षपातः । गृहं

बहुधा यातायातेन कश्चिदनुग्रहः, स्नेहबन्धो वा, अनुरोधो वा तेषां मयि कोऽप्यवश्यमस्ति, परमस्मिन्ननवसरे जागरणसाहसी कोऽहम्? अहं सर्वतोऽप्यसमञ्जसमपश्यम्। किन्तु गृहगतमत्याहितकाण्डं स्मृत्वा गृहे स्थातुं नाहं कथमपि प्राभवम्। शून्यरथ्याः समुल्लङ्घ्य त्वरिततरैः पदैः स्वामिनां भवनसीमानमवाप्नवम्।

गृहद्वारं दृढदत्तार्गलमासीत्। द्वारेऽवस्थितोऽहमेकं दीर्घनिश्वासमवमुच्य क्षणं गगनतलमपश्यम्। न मे वाक् किञ्चिदपि वक्तुं प्राभवत्। अहं द्वारकपाटकटकमाहत्य कर्णकटुशब्दसृष्टिमकरवम्। किन्तु न किञ्चित्फलमभूत्। अव्यक्तनादो निरर्थक इति दार्शनिकानामुक्तिर्मत्पक्षे सत्यैव प्रमाणिताऽभूत्। किमिदानीं करोमि? निस्तब्धनिद्राविघातपातकी अहं कैर्वा शब्दैरभिनन्दनीयः स्याम्? भयसंकोचाभ्यामहं यद्यपि पश्चात्पदोऽभवम्, परं हृदये प्रज्वलन् विषादवह्निर्मां पुनर्द्वारे निगडितमकरोत्। अस्मिन् वारे अहं द्वारकपाटावान्दोल्य घोरं नादमुदभावयम्। एतस्मिन् वारे अभ्यन्तरतोऽप्यसूयाऽऽक्रोशसूचकः शब्दः प्रासरत्—'अरे कोऽस्ति?'।

विस्खलता कण्ठरवेणाहमवदम्—'अहं मथुरानाथः'। 'अये किमेतत्' इति ब्रुवन् स्वामिनां गुरुभ्राता वृद्धो मनोमोहनस्वामी द्वारमुद्घाट्य मत्संमुखस्थोऽभवत्। मया संक्षेपेण सर्वं वृत्तमुक्तम्। आरम्भत एव मदुपरि कृपालुः स स्वामी प्रावोचत्—'औषधानि सर्वाण्येव मत्सविधे। शक्नोमि चौषधव्यवस्थां कर्तुम्। परं मूर्च्छा संजाता! विचारसापेक्षोयं समयः। अतएव स्वामिन एव जागर्यन्ताम्। त एव समयोचितां व्यवस्थां कुर्युः। प्राणसंकटापन्नस्य अन्यस्याप्यातुरस्य न ते उपेक्षां कुर्वन्ति, किं पुनस्तव कृते।'

मम हृदये अभूतपूर्वा काचित् श्रद्धा उदभवत्। यावदहमुपरि गन्तुं सोपानाभिमुखो भवामि तावदेव असंभावितकटुध्वनिभिर्भग्ननिद्राः स्वामिनो मत्कण्ठरवं परिचीय प्रावोचन्—'अये अस्मिन्समये कथमायातः?'। अहं विषादेपि कंचित् हर्षमन्वभवम्। त्वरिततरमुपर्यगच्छम्। शोकशीर्णाक्षरैर्वाक्यैः सर्वं वृत्तमुदीर्य समयोचितामौषधव्यवस्थामयाचम्।

तत्कालमेव ते शयनीयमुत्सृज्य मध्यमखण्डे आगच्छन्। कंचिद्भृत्यमनपेक्ष्य स्वयमेव ते बहुमूल्यान्यौषधानि प्रदाय सर्वं तदुपचारं माममबोधयन्। अहमतित्वरितमेव गृहं प्रति परावर्तमानोऽभवम्। मार्गमुल्लङ्घयतो मे हृदि अदृष्टपूर्वा काचिदेका श्रद्धाऽऽविरभूत्—'अहो यः समर्थोपि महापुरुषः अनवसरे जागरित्वा दीनान् चिकित्सते, प्राणसंकटापन्नं दीनमातुरं नोपेक्षते, कियदस्य दयास्निग्धमन्तःकरणम्? प्राप्तप्रतिष्ठेषु धनिकवैद्येषु कियन्तो वा एवंविधाः स्युः?।'

[ २ ]

स्वामिनां सदने रोगिणां रुग्णोपचारकाणां वा कृते भूयसी स्वतन्त्रता विलोकिता। ये द्रव्यं प्रदाय चिकित्सां कारयन्ति तेषां धनिकानामेव कथा न, ते तु प्रायो नियतसमय एवोपतिष्ठन्ते। किन्तु ये भाग्यवन्तो हरिद्रादिविनियोगं विनैव चैले चमत्कृतरङ्गं वाञ्छन्ति, तरपण्यं विनैव रोगनदीमुत्तितीर्षन्ति तेषामपि महाशयानामद्भुता 'प्रगति'र्विलोकिता। न केवलं रोगिदर्शननिष्क्रयादेव (फीस) विमुक्तिः, प्रत्युत ये महोदया औषधान्यपि निर्मूल्यं लभन्ते,

अन्यत्किम्, समये मधु-शार्करादिकस्य भेषजानुपानस्यापि कृते गृहात् ताम्रखण्डं न व्ययीकृत्य तदपि स्वामिनामेव सदनाल्लभन्ते तेपि सर्वसमये अवारितप्रवेशा इव दृष्टाः। ये शिक्षाविभागे कार्यं कुर्वन्ति ते मनसि मन्यन्ते यत्स्वामिमहोदयाः कालेजस्य महाध्यापकाः, अतएव एकविभागसंबन्धात्संबन्धिन एव वयम्। येऽस्मादृशा नाममात्रेणापि पण्डितास्तेपि शिक्षया सह बादरायणसंबन्धं स्थापयन्तः स्वामिनां संबन्धिष्वात्मनोऽन्तर्भावं दर्शयन्ति। ये सनातनधर्मानुगामिनो भक्तास्ते स्वामिनां सनातनधर्मश्रद्धामवष्टम्भयष्टिं विधाय तेषां निकटसंबन्धिश्रेणिमारोढुमुद्ग्रीवा विलोक्यन्ते। ये राजकर्मचारिणस्ते जयपुरधरामण्डलस्य दशस्वपि दिक्षु निजशासनदण्डस्याप्रतिहतां गतिं मन्यमानाः स्वामिनामनुरोधं प्रतीक्षन्ते। ये साधवः (कामं ते कस्यापि संप्रदायस्यान्तर्भुक्ताः स्युः) ते तु स्वामिनां परिवारजना इव सदने साधिकारं प्रचरन्ति। ये सभासु संस्थासु वा बादरायणमपि संबन्धं वहन्ति त 'लोकसेवकाः' इत्यात्मनि बहुमानं धारयन्तः स्वामिनां भवनादभिनन्दनं प्रतीक्षन्ते। ये पण्डिताः पण्डिताभासा वा, श्रेष्ठिनः प्रतिवेशिनो वा, स्वामिनामवकाशसमये समीपावस्थिताः सन्तश्चाटुपरिसरचुम्बिनीभिर्नानाविधवार्ताभिरात्मनस्तेषां च समयस्य सदुपयोगं कुर्वन्ति ते त्वात्मानं स्वामिमहोदयस्यान्तरङ्गकोटौ भावयन्तो निःशङ्कमेव सर्वत्राक्रमणं कुर्वन्ति। एवं किल सर्वं नगरमेव शनैः शनैः स्वामिमहोदयेन सह निकटसंबन्धमनुबध्नाति, को वा केन कथं वा निरुध्यताम्?

अतएव कश्चिद्रोगी नीचैरङ्गणे आस्थानतूलिकायां[1] निषण्णः 'स्वामिमहोदयाः किं कुर्वन्ति, कदा नीचैरागमिष्यन्ति' इति लोकान् मध्ये मध्ये जिज्ञासमानः स्वामिनां दर्शनं प्रतीक्षते। यो ह्यात्मानं किञ्चिन्निकटचारिणं विचारयति स हि भवनस्य मध्यमतलमारूढः उदग्रीविकया उपरिखण्डस्य वृत्तान्तं ज्ञातुकामः, स्वामिनां सत्वरदर्शनोत्कण्ठावशात् उपरितलजायमानेषु शब्देषु दत्तोत्सुककर्णः प्रतीक्षापरो दृश्यते। ये महाशया आत्मानमितोऽप्यधिकं व्यवहारिणं भावयन्ति ते उपरितलमेवारुह्य किञ्चिदुच्चस्वरेण मिथः संलापमारभन्ते येन स्वामिमहाभागा एतेषामागमनं जानीयुः। ये च गुणलवलेशवशात् अंशतोपि स्वामिनामनुग्रहं लब्धवन्तस्ते तु भवनमौलिमारूढाः भृत्यानीतं बृहद्दर्शनमध्यासीनाः स्वामिनां त्वरितसमागमायोत्कण्ठन्ते। ये महोदयास्तु स्वामिनां परिवारभुक्तमेवात्मानमभिजानन्ति ते तु प्रतीक्षामपि कर्तुमशक्नुवन्तः सर्वस्मिन्नपि समये सर्वेषु च स्थानेष्वाविशन्ति। शौचालयान्निःसृत्य मृत्तिकया करौ मार्जयन्तमपि स्वामिमहाभागमेतेऽनुबध्नन्ति, निजरोगगाथां चारभन्ते।

स्वामिमहाभागा अपि स्नानारम्भात्पूर्वं हस्तपादं प्रक्षाल्यैव यावद्बहिरागच्छन्ति तावदन्तरङ्गमानिनो जनाः प्रथममुपतिष्ठन्ते। 'दर्शनार्थमेवागतोऽस्मी'त्युक्त्वा कश्चित् स्वस्य गृहजनानां वा रोगकथामतिसाधारणवार्तामिव आनुषङ्गिकतया उपक्रमते। केचिच्चतुराः 'या कथा श्रीमद्भिः पूर्वं जिज्ञासिता सा एवमिव' इत्यादिवार्तोपन्यासेन चिकित्सायाः प्रत्युपकारे स्वपरिश्रमं प्रत्युपकारं वा संसूचयन्तो गमनसमये 'एषु दिनेषु भोजने अरुचिः, शरीरे नैर्बल्यम्, मस्तके

---

१ गद्दा। २ जाजम।

भ्रमिः' इत्यादिरोगमालाम् अतिधीरभावेनोपक्षिपन्ति। सर्वेषामेषां हृदयरहस्यवेदिनः परमनिपुणाः स्वामिमहाभागास्तु सर्वेषामेव मनस्तोषं संपाद्य नीचैरागच्छन्ति। 'अहं दीनोऽसमर्थश्च, भवन्नाम श्रुत्वा दूरदेशात्समागतोस्मि' इति भूमिकया सर्वतः प्रथमं निजचिकित्सामेव कामयमानः कश्चित् त्वरितमुपसर्पति।

विना मूल्यमेव निजचिकित्सामौषधं च लभमाना अपि दीनजनाः स्वामिमहोदयस्य दयालुतया निर्विशङ्कचित्ताः सन्तो धनिकजनचिकित्साव्यग्रमपि स्वामिमहोदयमात्मनोऽभिमुखीकुर्वन्ति निजौषधिव्यवस्थां च कारयन्ति। तेष्वपि अद्भुताद्भुता मूर्तयः समागच्छन्ति। नाडीपरीक्षां कुर्वन् स्वामिमहोदयः पृच्छति—'कथय, का ते शरीरस्थितिः ?' एते कथयन्ति—'भवान् वैद्यः, नाडीं परीक्ष्य भवानेव मां बोधयतु को मे रोगः, का च शरीरव्यवस्था ? यदि नाड्यां नायं परिचयस्तर्हि चिकित्सैव का ?' जङ्गमानिव वैद्यपरीक्षकविश्वविद्यालयानिमान् स्वामिमहोदयः शान्तमुद्रयैव चिकित्सते, उत्तरयति च—'नाहं तादृशः प्रबलवैद्यः'। कथयत, किमु अन्येषामपि चिकित्सकानां सदने सेयं सर्वजनानुकम्पा, सौम्यतासामग्री च समवलोक्येत ?

कदापि क्रोधो भवत्येव नेति नाहं वच्मि। क्रोधो भवति, प्रबलतमश्च भवति। परं तस्य पात्रं चिकित्स्यः सामान्यो वा जनो भवेदिति न कदाचिद् दृष्टम्। यैः साकं स्नेहसंबन्धस्ते यदि इच्छाविरुद्धमाचरन्ति तर्हि स कश्चित्क्रोधस्याविर्भावो भवति यः साधारणजनानामनुपलक्षितो भवेत्। तथा हि—स जनः सर्वेषु कार्येषु संगृह्यते। सामान्यजनानामभिमुखं तेन सह संलप्यतेऽपि। परम्, अदृष्टपूर्व-गभीरतोदयात् स एव मनुष्यो निजहृदये वेत्ति यदेषु दिनेषु मदुपरि क्रोधावेश इति। एवं-घटना पुनर्न भवेदिति सर्वथा दृढीकरणमेवैतस्याभिप्रायः। प्राकाम्यं हि नाम नाभिमर्षयति स्वल्पमपीच्छाविरोधम्। कामं कियानपि व्ययो भवेत्, परम् उत्तमं मनोनीतं च कार्यं स्यादिति श्रीमतां हृदयेच्छा। ततश्च ये परिचारका आवश्यककार्येषु त्रुटिमनुतिष्ठन्ति इच्छाप्रतिकूलं वा चरन्ति तेषु कोपः प्रभवति, साटोपश्चापि। परं दुग्धोत्फाण इव बहिः प्रकटितपूर्णवेगोपि स कोपो विनयावलम्बनशीतालिम्ना शीघ्रशमनीयो भवति।

[ ३ ]

स्वामिमहोदयेन स्वस्य स्वाध्यायकाले स समयो दृष्टोऽस्ति यो हि तस्मिन् समयेऽधीयानेष्वपि जनेषु विरलैरेवानुभूतः स्यात्। आयुर्वेदसंहितागुरवो भट्टश्रीकृष्णरामशर्माणो यथा वैद्यविद्यानिष्णाता आसंस्तथा स्वसमयस्य प्रख्याताः सफलाश्च कवयोप्यभूवन्। तेषां काव्यकलामार्मिकत्वस्य परिचयः पाठकमहोदयैः प्राप्त एव प्रबन्धान्तरेषु। ते यथा कवय आसंस्तथैव वैद्यत्वेन वा सहृदयत्वेन वा राजकीयपुरुषत्वेन वा प्रायः सर्वेणैव नगरलोकेन सह घनिष्ठपरिचयं वहन्तोऽभूवन्। श्रूयते—यत्तेषां सविधे विदुषाम्, अन्येषां च नागरिकलोकानाम्, भङ्गारससेवकानां तरङ्गिणां चापि मण्डली प्रायः सर्वदैव संनिहिताऽभूत्। तेपि शुद्धचित्ततया सहृदयतया च तैः साकं सुस्पष्टमन्तरङ्गवार्तास्वपि संलग्ना अभवन्। अत एव ते लोकचरित्रस्य सुबहुमार्मिका अभूवन्, यद्धि कवयितुः पक्षे अत्यन्तमावश्यकम्। ते हि कृपाभाजनेभ्यो निजविद्यार्थिभ्यो यथा नानविधशास्त्रतत्त्वमुपा-

दिशस्तथा अवकाशावसरे प्रासङ्गिकवार्ताभिर्दाक्षिण्यं च लोकचरित्रं च नीतिरहस्यं च हृदयतत्त्वं चापि अलक्षितरूपेणाऽबोधयन् । यद्यपि स्वामिमहोदय आरम्भत एव स्वामी ( लोकलीलाभ्यो विविक्तः ) संयततमचरित्रो विविक्तसेविप्रायश्चाभवत्, परम् अध्ययनकक्षायां गुरुणा सानुग्रहमुपदिष्टा जीवनोपकारिण्यो लोकवार्ता न तस्याऽविदिता अभवन् । एतदतिरिक्तं राजकीयपाठशालायां तस्मिन्समये गुरुवर-श्राजीवनाथमैथिलमहाभागसदृशाः परमानुभविनः सकलशास्त्रतत्त्वज्ञा महापुरुषा अपि अध्यापयन् । तद्विधानां साहचर्यमुपदेशं चापि स्वामिमहाभागः सम्यगग्रहीत् । इतः परं कालिकात्तामहानगरे गत्वा द्वारकानाथसेनकविराजमहोदयस्य सकाशात्प्रायोगिकमौषधविज्ञानमध्यगमत् । तस्मिन् काले कियद्भिर्वङ्गीयैर्विद्वद्भिरन्यैश्च लोकैः सह समागमो भवेत् इति स्वयमनुमातव्यं स्यात् ।

तस्मिन्नेव काले गुर्जरदेशवासिभिः रणछोड़प्रभृतिभिर्वैद्यसज्जनैः साकमपि गाढपरिचयः समभवत् । एवं च स्वाध्यायकाल एव स्वामिमहोदयेन तादृशं शास्त्रतत्त्वम्, तादृग् नीतिरहस्यम्, तावांश्च लोकपरिचयः प्राप्तो यो हि न सर्वेषां भाग्ये संघटते । तदनन्तरं चिकित्साप्रसङ्गेन नानालोकान् परिचिन्वानस्य, देशविदेशेषु प्रत्येकसमये विविधप्रकारैर्जनैः सह समागमं कुर्वतः, देशस्य नेतृजनैरन्यैश्च महापुरुषैः सह परिचयं प्रणयं च दधतः, आरम्भत एव राजपुरुषेषु चिकित्सापाटवं दर्शयतः, बाल्यादेव च चतुरचतुरैः पण्डितैः सह सौहार्दं वहतः स्वामिमहोदयस्य कियान्वा अनुभवः कियद्वा पाटवं भवेदिति स्थूलमतिभिरपि स्फुटमनुमातव्यं स्यात् । एतस्यैवानुभवस्य नीतिवेदित्वस्य चेदं फलं यदद्य अखिलभारतवर्षीयवैद्यसंमेलनसदृशीषु व्यापकसंस्थासु श्रीमतः स्वामिमहाभागस्य पूर्णः प्रभावोऽस्ति । नामाङ्किता नेतारो वैद्यकविराजाश्चैतस्याऽभिमतं प्रायो नातिक्रमितुं शक्नुवन्ति । शनैः शनैः स्वामिमहाभागस्यानुभवस्तथा दृढीभूतोस्ति यथैष सहसा दृष्ट्वैव लोकान् परिचिनोति । तेषां हृदयदशामभिजानाति । तत्स्वभावं च बहुधा वेत्ति । तटस्थतया सर्वमभिजानन्तो मार्मिका अपि पश्यन्ति यत्स्वामिमहाभागः प्रारम्भत एव चतुरपरीक्षकः । राजकीयसंस्कृतकालेजे विदेशेषु वा ये ये किल स्वस्वविषयस्य तत्त्ववेदितारो निपुणाः प्रख्याताश्च भवन्ति तान् सर्वानेव सौहार्देन वा चिकित्सोपकारेण वा स्निग्धव्यवहारेण वा निजाभिमुखीकृत्य स्वीयकोटावानयति । अथवा-गुणवशीकृतास्ते स्वयमेव स्वामिमहाभागमनुबध्नन्ति । अत एव केचित्तत्त्वज्ञाः समालोचयन्ति यत्स्वामिमहाशयस्यान्तरङ्गमण्डली विचितानां ( चुने हुए ) जनानां मण्डली । ये ये निजनिजोपात्तविषयेषु सर्वोत्कृष्टाः परिणमन्ते तान् सर्वान् स्वामिमहोदयः स्वसंपर्के दृढी करोति । सत्यमपीदम्-जयपुरराज्यस्य को वा ईदृशः प्रसिद्धः अप्रसिद्धो वा राजकर्मचारी श्रेष्ठी नागरिको वा भवेत् यः स्वामिमहोदयस्य गुणगौरवेण, चिकित्सोपकारेण, माहात्म्यातिशयेन वा एतस्याज्ञावाही न भवेत् ।

"वयं निःशुल्कं स्वामिमहोदयस्य चिकित्सामौषधं च संकटसमयेषु लभामहे । अत एव स्वामिमहोदयः स्वसंबन्धि यदि किञ्चिदपि कार्यमाज्ञापयेत्तर्हि अंशांशतोपि स उपकारभारः किञ्चिल्लघूकृतः स्यात्" इत्यभिसन्धिना सर्वेपि तस्याज्ञां प्रतीक्षन्ते । किन्तु संयतचरित्रस्य निःसङ्गस्यास्य महोदयस्य स्वसंबन्धि किञ्चित्कार्यमेव न भवति यदर्थमयमाज्ञा-



जयपुराधिविष्ठनिखिलभारतीयषोडशवैद्यसम्मेलनस्य सामूहिकचित्रम् (ग्रूप)

पयेत्, भवति चेन्नायं कश्चिद्व्यक्ति [ यत्परिचयः अग्रे दास्यते ] । सार्वजनिकसेवासंबन्धि कार्यं कदाचिद्-वश्यं भवति—यथा जयपुरे जायमानं निखिलभारत-वर्षीयस्य वैद्यसंमेलनस्य षोडशमाधिवेशनम् ।

सर्वैरपि दृष्टं यात् यदस्मिन्नधिवेशने स्वामि-महोदयेन निजविचारचातुर्यम्, प्रबन्धपाटवम्, सौष्ठवसंनिवेशश्च तथा कृतोभूत् यथा 'एवंविध-मधिवेशनमद्यावधि एकत्रनगर एव कदाचिज्जातं स्यात्' इति तदधिकारिणोपि निर्मायहृदयेनाकथयन् । एतस्य कारणमिदमेव यत्स्वामिमहाभागस्य गुणगण-प्रवणीकृतं सर्वं जयपुरराज्यमेव तस्मिन् समये बद्धा-ञ्जलि समुपस्थितमासीत् । यतः पश्यामस्तत एव जयपुरराज्यस्य सर्वापि राजविभूतिः समन्तात्खेलन्ती आसीत् । मम मत्यनुसारं तु तस्मिन्नेव काले श्रीमतः स्वामिमहाभागस्य नीतिपाटवं मनुष्यपरिचयचातुर्यं च किञ्चित्परिज्ञातव्यमभूत् । सर्वेषु राजकर्मचारि-पूपस्थितेष्वपि स्वस्वोचितकार्येषु त एव राज-कर्मचारिणो नियुक्ता अभूवन् ये स्वस्वविषयेषु सर्वथा परिनिष्ठिता आसन् । प्रत्येकं कार्यं कर्तुं प्रायः सर्वेपि संनद्धा अभूवन् परं स्वामिमहाभागेन तत्तत्कार्यकर-णार्थं त एव पुरुषा निचिताः ये तत्कार्यसंपादनार्थं सर्वेभ्योऽन्येभ्यो विशिष्टा आसन् । एतदुपर्यपि चा-तुर्यमिदमासीत् यत् स्वामिमहोदयः स्वयं सर्वकार्ये-भ्यस्तटस्थ इवासीत् । भिन्नभिन्नकार्यार्थं भिन्नभिन्न-पुरुषाणामेका समितिः कल्पिताभूत् यस्याः प्रमुखः स्वसहायकैः सह सर्वं कार्यं समपादयत् । परं ततोपि स्वामिमहोदयस्तद्द्वारैव सर्वं निजमनीषानुकूलमका-रयत् ।

वैद्यक एव किं स्वामिमहाभागः प्रायः सर्वेष्वेव शास्त्रेषु मार्मिकः, सुतरां च मार्मिकः । परं तेषु तेषु विषयेषु यदा यदा किञ्चिज्जिज्ञास्यते तदा शान्तभावेन नीतिचातुर्येण वा इदमेवोच्यते यत् 'वयं तु वैद्याः, वयं किं जानीमः' । परं तस्मिन्विषये यदा किल तैर्निज-संमतिः प्रकाश्यते तदा प्रच्छकस्यापि हृदयं विस्मितं सुप्रसन्नं च भवति, सत्यमेव यदि स प्रश्नकर्ता वास्तव एव मार्मिकः स्यात् । अत एव यदा किल लेखादिरूपं किञ्चित्कार्यमुपस्थितं भवति तदा स्वामि-महाभागस्तत्समर्थोपि स्वयं तदसंपाद्य अन्यविद्वद्द्वारैव तत्कारयति । तत्र च तत्संपादनसमर्थं नैकतमं विद्वांसं नियोजयति किन्तु सर्वानेव विचक्षणानेकत्र संयो-जयति तद्द्वारा च तत्कार्यं संपादयति । यो हि विषयः परस्परविवादद्वारा तत्त्वतो निर्धारणीयो भवेत्तत्र युक्त्या, तेषु पण्डितेष्वेव परस्परवैमत्यं संघटय्य, स्वयं च कदाचित्तटस्थः कदाचिच्च कस्मिन्नपि पक्षेऽन्तर्भवन् कौतुकविधया तं विवादमग्रसरीकरोति । अन्ते च विवादद्वारा सिद्धेन निष्कर्षेण निजलेखकार्य-मन्यद्वा किञ्चित्प्रयोजनं सर्वतोपि समुचितं निर्दुष्टं च यथा स्यादेवंप्रकारेण सुभगतया संपादयति ।

एवमेव निजान्तेवासिनामपि मध्ये तत्तत्कार्येषु त एवान्तेवासिनो नियोज्यन्ते ये यस्य कार्यस्य सुतरां योग्याः । नियोगकृपामप्राप्नुवतां तेषामन्त-स्तले कदाचिद्विसंवादोऽभ्युदयेत्परं तेन ( विसंवादेन ) साध्यमानस्य कार्यस्य निरपाया सिद्धिरेव भवति, परस्परस्पर्द्धया च तेषु छात्रेष्वपि उन्नतिप्रवणतैव संपद्यते । अतस्तद् वैमत्यमपि लाभदायकमेव ।

एवमेव निजद्वारा परिचाल्यमानासु संस्थास्वपि परस्परविसंवादिनां तत्तत्कर्मचारिणां मध्यात् विवाद-निष्कर्षतो निर्धारितं सुयोग्यतममेकतममधिकारिणमेव तत्तत्कार्येष्वधिष्ठापयति, तमेव च परिपुष्णाति । तस्मिन्नपि कार्ये च स्वेच्छया सर्वं साधयन्नपि

काञ्चित्सामितिमेव प्रकटं प्रधानीकरोति, स्वयं च मूकः सँस्तटस्थीभवति । भवभूतेर्मालतीमाधवस्थमिदं पद्यं स्मृतिपथमारोहति—

**'बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्**
**पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।**
**जनं विद्वानेकः सकलमभिसंधाय शनकै-**
**स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते॥'**

पद्यगता नीतिः कामं राजनीतेः कूटतां स्पृशेत् किन्तु समन्तादुदारचरितस्य स्वामिमहाभागस्य नीतिचर्या सुस्पष्टमुदारा । सा हि नीतिर्मार्मिकतया च अपरिलक्षितचातुर्यं च प्रयुज्यत इत्येवात्र साम्यदर्शनस्य प्रयोजनम् । सत्यं त्वेतत्—यस्यां हि नीत्यां प्रयोक्तुः काचिल्लिप्साऽन्तर्हिता भवति सैव नीतिरवरमार्गमनुगच्छति । लिप्सायास्तु का कथा, यो हि महोदयो निजभुजबलोपार्जितं प्रभूतमपि द्रव्यं स्वकार्येऽनुपयुज्य लोकहितकार्येभ्यो निःस्पृहतया प्रददाति (प्रबन्धान्तरेषु दृश्यमिदम्) स हि कुतो वा संकीर्णां नीतिं व्यवहरेन्नाम ?

[ ४ ]

स्वामिमहाभागस्य प्रथमशिष्यः श्रीदुर्गाप्रसादभिषगाचार्यो दुरपनेयेन व्रणव्याधिना चरणे नितान्तं पीडितोऽभवत् । मधुमेहस्य सहयोगं प्राप्य स हि व्याधिरुत्तरोत्तरं दुर्दमतामधारयत् । दुर्बलराज्ये कूटनीतिमान् शासक इव स हि व्रणो निजसीमानं प्रतिक्षणमवर्द्धयत् । नगरे नामाङ्कितस्य डाक्तरमहोदयस्यैकस्य चिकित्सा चलति स्म । एष हि महाभागो मांसस्य गलनविकृतिनिवारणाय जलसेकमकारयत् । उपरिलम्बमानात्पात्रादहर्निशं जलबिन्दवः पादोपरि न्यपतन् येन व्रणवृद्धिर्न भवेत् । परं न किञ्चित्फलमदृश्यत । डाक्टरमहोदयेन गभीरमुद्रया प्रोक्तम्—'पादच्छेदं विहाय नान्य उपायः । यदि श्व एव पदच्छेदो न क्रियेत तर्हि व्रणो जङ्घातोऽप्युपरि प्रसरेत्' । गृहात् शोकपूर्णः करुणध्वनिरुदगच्छत् ।

प्रातरेव रुग्णो राजकीये आतुरचिकित्सालये ( हॉस्पिटल ) अनीयत । डाक्तरमहोदयो व्रणच्छेदगृहस्य ( ऑपरेशनरूम ) मञ्चिकायामातुरमशाययत् । उपचारकाः ( कम्पाउण्डर ) पादच्छेदस्य सर्वां सामग्रीमसज्जयन् । मूर्च्छौषधिप्रयोक्ता स्वस्य यन्त्रं सज्जीचकार । प्रधानडाक्तरमहाभागो दलजङ्गसिंहमहोदयोऽङ्गच्छेदशस्त्रं मञ्जूषातो बहिर्निरसारयत् । दृश्यमिदं दृष्ट्वा दुर्बलानां हृदयान्यकम्पन्त । डाक्टरमहोदयः शस्त्रं गृहीत्वा सज्ज एवासीत् । एतस्मिन्नेव समये उपचारकेणैकेन संवादो दत्तो यत् बहिर्लक्ष्मीरामस्वामिमहाभागा अवातिष्ठन्ते, ते च श्रीमन्तं दिदृक्षन्त इति ।

डाक्टरमहोदयो भवनस्य द्वार एवावस्थितं स्वामिमहाभागमद्राक्षीत् । आसीत्स्वामिमहाभागस्य हृदयमतिविषण्णम् । नेत्रयोः सूक्ष्माऽश्रुरेखाऽप्यलक्ष्यत । उक्तं स्वामिमहोदयेन—'अहं वाञ्छामि यत् अद्य शस्त्रक्रिया न क्रियेत । यद्यस्मिन् दिनेऽपि पूयवृद्धिर्न निरुध्येत तर्हि अस्तु तथा श्वः ।' डाक्टरमहोदयोऽपि किञ्चिद्विचार्य तत्स्वीचक्रे । रुग्णं मञ्चिकातोऽवातार्यत ।

संयोगस्य वार्तास्ति—तस्यां रात्रौ प्रतिक्षणं जायमाना व्रणवृद्धिरनवरतं जलसेकेन किञ्चिद्रुद्धाऽभूत् । प्रातरेव डाक्टरमहोदयस्तद् दृष्ट्वा द्वितीयदिनेऽपि शस्त्रक्रियां न्यवारयत् । शनैः शनैरौषधोपचारैः व्रणविरोपणमभूत् । शस्त्रचिकित्साया आवश्यकतैव नाभवत् ।

स्वामिनां शिष्यवात्सल्यस्य सोयमंशतः परिचयः प्राप्यत तद्दिने मार्मिकैः । हन्त यद्यातुरस्वास्थ्य-निरीक्षणाय स्वामिमहाभागस्योपस्थितौ क्षणस्यापि विलम्बोऽभविष्यत्तर्हि वैद्यवरः श्रीदुर्गाप्रसादमहोदयः पङ्गुतामधारयिष्यत् । परं स्वामिनामनुग्रहेण पद-च्छेदं विनैव सोयमर्थः संलग्नोऽभवत् ।

[ ५ ]

प्राकृतिकदृश्यदर्शनाभिरुचिः श्रीमतामारम्भा-देवास्ति । अत एव दर्शनीयस्थानावलोकनार्थं सुहृत्समुदायसमवेतस्य स्वामिमहाभागस्य प्रमोदयात्राः समये समये समभवन् ।

व्यतीताः किल विंशतितोऽप्यधिकाः संवत्सराः । सवाईमाधवपुरं प्रति प्रस्थानमकल्प्यत । सेयं विचक्षणमण्डली बाष्पयानद्वारा तन्नगरं प्रति प्रस्थिताऽभवत् । निवासप्रबन्धो राजकीयशिक्षाविभागद्वारा पूर्वमेव निर्धारितोऽभवत् । अत एव राजकीयस्कूल-भूत एकस्मिन् राजमन्दिरे तस्यां निशि न्यवसन् सर्वेपि। प्रातरेव रणस्तम्भवरदुर्गदर्शनार्थं पर्वतमारोढुं प्रबन्धसंभारः समभवत् । राजकीयराजस्वविभागात् ( निज़ामत तहसील ) कतिपये तुरङ्गाः प्रैष्यन्त, तानारुह्य सर्वेपि पर्वतारोहणकुतुकिनः समभवन् ।

तस्मिन्वर्षे जयपुरप्रान्ते प्रकामं वर्षा समभवत् । अत एव सोय प्रदेशः काञ्चिदद्भुतामेव शोभामधारयत् । सर्वोपि पर्वतोद्देशो हरितहरितः समभवत् । स्थानस्थानतः प्रक्षरतां निर्झराणां श्रवणमनोहराः शब्दाः, वृक्षगुल्मेषु तेषां जलवेणिका च काचिद्-पूर्वैवासीत् । अस्मिन्पर्वते कदम्बानां बकुलानां च शतशो वृक्षाः सन्ति येऽस्मिन् काले सर्वेपि पुष्प-समृद्ध्या सुतरां समृद्धास्तं प्रदेशमभूतपूर्वया शोभया मण्डयन्ति स्म । श्रेणीबद्धानाममीषां पुष्पपादपा-नामधस्तात् यदा वयमगच्छाम तदा प्रावृषेण्य-वायुनाऽऽन्दोलितमस्तकास्ते इमे वृक्षा निजशाखा-बाहुभ्यः पुष्पाणि प्रकिरन्तोऽस्माकं स्वागतमिवा-कुर्वन् । सर्वोपि सोयं पर्वतपरिसरः सुगन्धिपुष्पा-णामामोदेन परितो महमहायते स्म ।

नानाविध-फलपुष्पमहीरुहैर्लतागुल्मैश्च सोयं पर्वतमार्गः पूर्वमेवातितमां निबिडोभवत् । एतदुपरि प्रबलवेगतः प्रवर्तमानेन जलप्रवाहेण तु सोयं मार्गः स्थाने स्थाने विशीर्णपाषाणैरतितमां दुर्गमोऽक्रियत । अत एव अश्वानां पर्वतारोहपरिचिततया अतिकठिन-तया अश्वानां पर्वतारोहपरिचिततया कथंचित्पन्थान-मुदलंघयाम । स्थाने स्थाने च सिंहानां भीतिस्ता-मिमां वसुन्धरां पुनस्तमां दुर्गमां चक्रे । पक्षिविशे-षस्य शब्दं श्रुत्वैव अनुभवशीलाः पुरुषाः प्रावदन्—'समीप एव कुत्रचित्सिंहोवतिष्ठते' । स्थानस्थाने च कर्णावुत्तरङ्गयन्तः, सूत्कारविशेषमवमुच्य प्रस्खल-द्गतिमवलम्बमानास्तुरङ्गमा गन्धविशेषपरिचयात्सिंह-सद्भावं सूचयन्ति स्म । परं "समवायो निरपायः ( 'जमात करामात' )" इति संघबलेनात्मानमुपोद्-बलयन्तः परिहासकौतुकमवलम्बमानाः सर्वेपि दुर्ग-मिदमपश्याम । अस्मिन्दुर्गे सर्वातिशायी सोयं विशे-षोस्ति यत् पर्वतमालाभिस्तदिदं दुर्गं तथा गूहित-मस्ति यथा दुर्गसमीपे प्राप्यापि नेदं कस्यचिद् दृष्टि-गोचरं भवति । दुर्गस्थितो मनुष्यस्तु दूरादेवागच्छन्तं जनं लक्षयतीति । अस्तु-माधवपुरस्य रणस्तम्भवर-दुर्गस्य च किञ्चित्परिचयार्थं 'जयपुरवैभवा'दुद्धृतं पद्यद्वयमधस्तादुल्लिखाभि—

१ अन्यत्र तु—पदच्छेदं विना श्लोकादेरर्थपरि-ज्ञानं न भवति ।

घनाक्षरी ( कवित्त )

"गोपुरसमीपे तुङ्गमन्दिरमुपेत्य ततो
भैरवादिदर्शनतो भरितो भवेः सुखे ।
जयनगरानुकारिणीषु राजरथ्यास्वहो
चिनुहि चतुष्पटीक्रमं च बत संमुखे ।
नानाफलपुष्पशाखिशालिन्यामुपत्यकायां
सावधानमेयाँ न चेदेया मृगराण्मुखे ।
धावद्धूमघोरैणीप्रधानास्थितिधामघरे
माधवपुरेऽस्मिन्नचिरेण विचरेः सखे ॥

षट्पदी ( छप्पय )

माधवपुरपश्चिममहिभृति मानसमुपढौकय
रणस्तम्भवर-दुर्गसर्गमद्भुतमवलोकय ।
यत्र तडागद्वितयतटे पशुपतिरधिराजति
तत्सविधे हम्मीरवीरमस्तकमुद्भ्राजति ।
अतिनिबिडशैलमालावृते गणपतिमानम दिनमुखे
हम्मीरशौर्यलीलासखे दुर्गेऽस्मिन् विहरेः सखे ॥"

पर्वतादवरुह्य यदा सायं निवासस्थानं पुनः परावृत्ताः स्मस्तात्कालिकोऽवसादः क्षुधाजागर्तिश्च सत्यमभूतपूर्वैवासीत् । भोजनप्रबन्धे योऽभूत्काल-विलम्बः स हि सर्वेषामेव तदानीमसह्यतमः समभवत् । येषां पुनर्महाभागानां दुग्धपूरिकानिर्माण-व्यतिकरविलम्बः सहनीयोऽभवत्ते तु निजभागधेयं भूरि भूरि प्रशंसन्ति स्म । तस्यां यात्रायां राजकीयसंस्कृतकालेजस्यायुर्वेदद्वितीयाध्यापकाः स्वर्गता भट्टगङ्गाधरशास्त्रिणः ( सिद्धभेषजमणिमालाकर्तृ-कविवरभट्टश्रीकृष्णरामतनयाः ) अप्यभवन् । सुगृहीतनामधेयैस्तैरसायिकभावेन सा किल प्रमोद-गोष्ठी तथाऽनुगृहीता यथा तेषामुदारभावः सांप्रत-मप्यन्तःकरणपटले समुत्कीर्णोऽस्ति ।

तस्यां यात्रायां बहुतरः प्रबन्धो लोकानां निजनिजाधीन एवासीत् । परं ततोपि स्वामिमहोदयस्य सर्वाङ्गीणस्तथाभिलाषः समभवत् यत् न कस्यापि काचिदसुविधा भवेत् । पाकादेः स्वदृष्ट्या समवेक्षणम्, स्थानादेः स्वतत्त्वावधानेन निर्धारणं च तथा क्रियत येन कस्यापि विदुषो मनःप्रतिकूलता न भवेदिति । यासु च पुनः सुहृद्गोष्ठीषु श्रीमतः स्वामिमहोदयस्यैव सर्वसंभारः, तासां तु कथैव का ? नानाविधभोज्य-व्यञ्जनानामद्भुता घटा संघटते । फलानामपूर्वा गोष्ठी संनिविशते । पुष्पमाल्यानामेकतमा प्रदर्शिनीव संजायते । प्रसाधनसज्जाभिः स्थानानामनुपमा सुषमा संपद्यते ।

ये किल महाभागाः पदार्थसामग्र्याः सूचीं पूर्वतो निर्दिशन्ति तेऽपि तद्दिने कर्णस्येव औदार्यम्, कुबेरस्येव धनसमृद्धिम्, व्यञ्जनाविष्कारे बृहस्पतेरिव बुद्धि-वैभवम्, भीमस्येव भोजनकर्मीणतामवलम्बन्ते । प्रातःकालत आरभ्य सायमवधि नानाविधप्रमोद-परम्पराणां सृष्टिराविष्क्रियते, यासां हि मध्ये मध्ये फलभोजनम्, संतानिकाकुब्जका ('मलाई के कुब्जे') स्वादनम्, ताम्बूलाभ्यवहारश्चेत्यादयो भोजनप्रकारा एव प्रधानं स्थानमाक्रामन्ति । स्वामिमहाभागा अपि तद्दिने सर्वं मण्डलसात्कुर्वन्ति । तत्प्रबन्धे स्वल्पाया-

---

१ गोपुरस्य प्रवेशे एव प्रथमप्रथमं हस्तियुग-भूषितद्वारं भैरवमन्दिरं प्राप्यते । २ माधवपुरे जयपुरवत् राजमार्गाणां चतुष्पटीनां च ( चौपड़ ) क्रमः । 'चिनुहि' पश्येत्यर्थः । ३ उपत्यकायां पर्वत-समीपभूमौ सावधानम् आ-इयाः आगच्छेः । न चेत् मृगराजः सिंहस्य मुखे एयाः प्रविशेः । ४ धूमशकट्याः प्रधानं यत्स्थितिधाम ( जंक्शन ) तद्धारके ।

मपि त्रुटौ शिष्यान् तर्जयन्ति, भृत्यांश्च भूयस्तरां भर्त्सयन्ति ।

भोजनसमये स्वयं स्वामिमहाभागाः केषांचिद्द्वो-ज्यव्यञ्जनानामेकं ग्रासम्, केषांचित् कणम्, केषांचिच्च नाममात्रं गृह्णन्ति । यस्य हि महोदयस्य केवलं भोजनमेव किम्, सर्वं कार्यजातमेव जन्मत आरभ्याद्यावधि संयतचर्ययैव सर्वथा संपन्नं स किल महाभागः कथं वा नियमाद्भ्रश्येत ? किन्तु अन्येषां प्राघुणिकानां भोजने न काचिन्न्यूनता स्यात्, प्रत्युत द्वितीयदिवसे परिपाकौषधार्थं निजोपसर्पणस्यापि कदाचिदवसरः स्यात् ततोपि परिवेषकान् भूयो भूयः प्रेरयन्ति । 'यो भोक्तुं जानाति स एव भोजयितुमपि जानातीति' लौकिकः प्रवादः । परं स्वामिमहोदयस्तदेतस्यापवादरूप इव ।

उपर्युट्टङ्कितस्य विस्तरस्य एष एव सारो यत् स्वामिमहाभागस्यातिथेयता उच्चकोटेरस्ति । वहिर्देशस्था वैद्यप्राघुणिका अन्ये वा प्रतिष्ठितसज्जना यदा यदा नगरेऽत्रागच्छन्ति तदा तदा स्वामिनां सदने ससंभारं तेषामातिथ्यं तथा भवति यथा तेषामपि हृदये स्वामिमहोदयस्यौदार्यं प्रभावो वा सुतरामङ्कितो भवति ।

[ ६ ]

मितभाषणं गाम्भीर्यस्य द्योतकमिति शिष्टगोष्ठ्यां शृणुमः । 'सत्याय मितभाषिणाम्' विशिष्टपुरुषाणां महाकविकथानकेषु गुणकीर्तनं केवलमस्माकमेव समाजे न प्रचलितम्, अपि तु यवनकवयोपि गभीराशयान् पुरुषान् 'कमसखुन' ( स्वल्पभाषिणः ) इति कृत्वा प्रशंसन्तः श्रूयन्ते । ये तु केचिन्महाशयाः—सभासमितीनां का कथा, अन्तरङ्ग-



सुहृद्गोष्ठ्यामपि गर्वोच्छूनमिव मुखं कृत्वा फुल्लस्तब्धया ग्रीवया कृत्रिमगाम्भीर्यस्य नाटकं कुर्वन्तो दृश्यन्ते, तदेतत्तु जन्तुस्वभावस्यान्यादृशं विलसितं नाम । इदं हि कृत्रिममिति कृत्वा गाम्भीर्याडम्बरे दम्भे वा परिणतं भवति । किन्तु—अस्ति हि साप्यन्यादृशी गोष्ठी यत्र हि वाग्मिनः प्रशस्यन्ते—

'अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं
वर्तन्तेपि च तत्र तत्र रसिका गोष्ठीगरिष्ठा जनाः ।
एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो
वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥'

परं साधुमहात्मनां पक्षे स्वल्पभाषणमेव शोभाधायकं दृष्टम् । नानाविधतापैस्तापिताः संसारिणो दुःखविमोक्षकाम्यया दीर्घदीर्घेण विस्तरेण निजकष्टसंकथाः साधूनां संमुखे कीर्तयन्ति, ते तु सर्वमिदं मौनेनाकर्णयन्तः सन्तः पर्यन्ते कतिचिद्भिरेवाक्षरैस्तद्दुःखशमनोपायमुपदिशन्ति । स्वामिमहाभागस्य चिकित्सासदनेपि सेयमेव सरणिर्विलोकिता । नाडीं दर्शयित्वैव रोगी कार्येष्वनुत्साहम्, भोजने अरुचिम्, उदरे विकृतिम्, मस्तके भ्रमिम्, चलने अशक्तिम्, इत्यादिपरस्परसंबद्धां विकारपरम्परां विस्तरेण कीर्तयति । स्वामिमहाभागस्तु एकद्वाभ्यामेव शब्दाभ्यां तदुत्तरं दत्त्वा, निभृतचित्ततया औषधव्यवस्थापत्रं लिखित्वा तस्मै समर्पयति । अथ गच्छत्सु कतिपयदिवसेषु यथैव तस्य स्वास्थ्यक्रमः प्रचलति तथैव पथ्यसेवनयन्त्रणया क्लिष्टो रोगी 'कदापर्यन्तं रोगविमुक्तः स्याम् ? भोजने किं किं गृह्णीयाम् ? अभिलषितभोज्यसेवनं कियत्कालात्प्रारभ्येत ?' इत्यादि नानाप्रश्नानुपस्थापयति । किन्तु तदुत्तरं स हि प्रमिततमैरेवाक्षरैर्लभते ।

'किं शाकेषु आलुकं गृह्णीयाम्? फलेषु किं सेव्य-(सेब) फलं भुञ्जीय? भोजने किं मरिचोपयोगं कुर्याम्?' इत्यादि प्रत्येकवस्तुनो नाम निर्दिश्य यदा स स्वयमेव भोज्यव्यवस्थां कारयति, अवश्यं तस्मिन्समये रोगिणो मनसि क्रोधस्याविर्भावः सुसंभवः। यतो हि यस्य वस्तुनो विषये स न प्रक्ष्यति, प्रश्नं वा विस्मरिष्यति, अवश्यं तस्माद्वस्तुनः स वञ्चितो भवेत्। अतएव भोजनव्यवस्थासमये मितभाषिता चिकित्सकस्य गुणोपि दोष इव हृदयं क्लिश्नाति। किन्तु रोगयन्त्रणया परतन्त्रीकृतः स वराकः सर्वमिदं मुद्रितमुखः सहते। विशेषतश्च—यदा तस्य स्वास्थ्यक्रमः प्रारभ्यते तदा विश्वस्तः सन् सर्वमिदं मद्भाभायैवेति परिणामं भावयन् दरिद्रमनोरथ इव हृदयाभ्यन्तर एव निरस्तो भवति।

एके चैवंविधा अपि वैद्याः सन्ति ये रोगिणमागतमेव मधुरवार्ताभिरुपच्छन्दयन्ति। भोजनव्यवस्थामेव किम्, सर्वां दिनचर्यामेव तस्मै रोगिणे उपदिशन्ति। रोगिणा स्वास्थ्यप्रश्ने उपस्थापिते हितमधुरसान्त्वनैस्तस्य चेतसः शान्तिं जनयन्ति। रसौषधप्रदानात्पूर्वं वार्तारसेनैव रोगिणोऽर्द्धरोगहरणस्य यत्नं कुर्वन्ति। किन्तु द्वयोरनयोः स्वभावयोस्तारतम्यं फले दृष्टिगोचरं भवति। एकत्र—वार्ताद्वारा कृतेऽप्युपसान्त्वने न्यूनस्य स्वास्थ्यफलस्योदयेन शनैः शनैरुचिरुदेति। अपरत्र तु—'सुविस्तृतानां प्रश्नानां मौनमेवोत्तरं ददौ' इति प्रकारस्वीकारेपि प्रतिदिनलाभदर्शनात्, अविचलतूष्णींभावेपि प्रत्यक्षं स्वास्थ्यफलविलोकनात् क्रमशः श्रद्धाया उदय एव तावद्भवति, न क्षयः।

राजा वा राजपुत्रो वा, श्रेष्ठी वा राजकर्मचारी वा, यः कश्चिदागच्छति तेन सह चिकित्साविषयं प्रासाङ्गिकविषयं वा विरहय्य न काचिदन्याविषयिणी वार्तापि प्रस्तूयते। परकीयप्रसङ्गस्य का कथा, आत्मविषयिण्यपि वार्ता अत्यावश्यकत्वं विना न परिचाल्यते। अन्यत्किम्, तेन सह निजसमीपे स्थितस्य कस्यचित् शिष्टस्य परिचयोपि न कार्यते, यो हि साम्प्रतिकसभ्यताक्रमे शिष्टपुरुषस्यात्यावश्यकं कर्तव्यम्। किन्तु प्रमितभाषिता प्रसङ्गान्तरस्य प्रसङ्गमेव नोपस्थापयितुं वाञ्छति, दूरे तावत्स्वार्थगन्धः। यस्यां हि वार्तायां स्वार्थयाचनाप्रसङ्गो भवेत्सा कथा तु सामान्यशिष्टस्यापि मुखात्कष्टत एव निष्क्रामति विशिष्टपुरुषाणां तु तत्र का कथा? दृश्यते हि चतुरचर्यायाम्—

'न कदाचिद्बहिर्यान्ति मानिनां प्रार्थनागिरः।
यदि निर्यातुमिच्छन्ति तदा प्राणपुरस्सराः॥'

किन्तु एवंविधा अप्युदात्तपुरुषाः सन्ति येषां मुखात्परस्वार्थसिद्धेरपि संकथा द्वितीयपुरुषस्याग्रे न बहिर्भवति। सत्यं त्वेतदस्ति — यत्प्रार्थनागन्ध एव तेषां नासिकाया असह्यो भवति, स हि स्वार्थसंबन्धी भवतु परार्थसम्बन्धी वा। परोपकारस्य कृतेपि प्रार्थना तावत् प्रार्थनैव। अत एव येषां महाशयानामप्रार्थनमेव स्वाभावः संजातस्तेषां कर्णयोः सविधे परोपकारस्य धर्मत्वघोषणमपि मुखशोषणायैव। सत्यमस्ति—

'तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौन्नत्यम्।
तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम॥'

येषामर्थिनां स्वार्थसिद्धिर्न जाता ते तप्ततैलवृन्ताका इव मनस्येव 'भुनभुनायमानाः' ईदृशीं निःसङ्गतां कामं क्रोशन्तु नाम, परम् इतः कः शृणोति? प्रवातेपि निष्कम्पा महागिरयः। येषां सविधे वाहनस्य प्रबन्धो नास्ति ते वाहनारूढान् मूढानित्युक्त्वा, तान् काकान् आत्मानं च राजहंसं साधयित्वा, निजहृदयदाहमंशतः शीतलीकुर्वन्ति। उक्तं हि यथा—

'गजरथतुरगैः प्रयान्ति मूढा
धनरहिता विबुधाः प्रयान्ति पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः
किमु तुलनामुपयाति राजहंसैः ॥'

एतत् तुरगाद्यारोहणं निजभाग्यभवैर्विभवैर्वा भवेत् अन्यविधैर्वा परं ये जना गजरथतुरगैः संचरन्ति तेषां सर्वेषामेव मूढत्वव्याप्तिः कवेः परश्रीकात्मतामेव किं लोकेभ्यो न सूचयेत् ? मयापि स्वार्थभङ्गविलक्षीकृतेन 'सेयं नीतिः दुर्नीतिरिति' निन्दां कृत्वा निजहृदयव्रणानि शीतलीकृतानि । उक्तं हि साहित्यवैभवस्य नीतिवीथ्याम्—

कवित्त—

मान्यजनमध्ये येषां निर्भरः प्रभावो भाति
श्रेष्ठिजना येषां चरणेषु शिरः संवहन्ति
शासनाधिकारिणोपि येषां कथनानुचराः
स्वयमपि धनिकवरा निःस्पृहाः परानवन्ति ।
तेपि परकार्ये वाणीमात्रमपि नो दिशन्ति
मनसि स्वनीतिमिमां मत्वा किन्तु संतुष्यन्ति
मन्येहं नवीनरीतिभरिते नवीनयुगे
भीतिमिमामद्य नीतिनाम्ना बुधाः संलपन्ति ।।'

[ ७ ]

'उपार्जनाऽसमर्थो हि त्यागी सर्वोपि मादृशः ।
अर्जयित्वा तु यो दत्ते निःसङ्गः स सुदुर्लभः ॥'

गुणगणशाली उपार्जनसमर्थोपि यो महात्मा त्यागभावनया धनसंग्रहाद्विमुखो भवति तस्यापेक्षया स महात्मा धन्यतमः संमन्यते यो हि निजगुणैः प्रभूतं धनमुपार्ज्य तद्धनं निःसङ्गतया परहितकार्येषु स्वहस्तेन विनियुञ्जीत । स्वामिमहाभागेन हि अस्मादृशोध्वकर्मण्येषु पश्यत्स्वेव प्रभूततमा धनसंपत्तिर्निजगुणवैभवादुपार्जिता । यस्मात्कालादारभ्य स्वामिमहोदयस्य चिकित्सापाटवं लोकेषु पूर्णतया प्रख्यातमभूत्, गुणगणवशीकृतं धनं स्वयं समाकृष्टमिव समागमत्, पदयोः काञ्चनमलोठत्, तद्दिनादेव स्वामिमहोदयस्य धनार्जनोपरि केषांचन महाशयानां सावधाना दृष्टिर्विशेषतोऽपतत् । कर्णाकर्णिकया बहवो लोकाः समालपन्—'स्वामिमहाभागः साधुः सन्नपि एतावतो धनराशेः किं करिष्यति ?' किन्त्वद्य तेषां सर्वेषामेव चक्षुषी उन्मीलिते स्तः ।

स्वामिमहाभागेन हि—स्वीयायाः स्थिरसंपत्तेरतिरिक्तानि एकलक्षरूप्यकाणि लोकोपकारककार्याणां कृते विनियुक्तानि सन्ति, येषां विनियोगाय रक्षणावेक्षणाय च एका आप्तसमितिः ( ट्रस्ट ) नियमितास्ति, यत्संबन्धि वृत्तं प्रबन्धान्तरेषु पाठकानामवगतं भवेत् । किन्तु एषा प्रकटतमा साम्प्रतिकी च वार्तास्ति । परम्, गूढ-स्थिर-निश्चयस्य स्वामिमहोदयस्य बहवः प्रारम्भास्तु फलानुमेया एव भवन्ति । साधारणमिदमेकं निदर्शनं दीयते—

सबलसुस्थशरीरेण शक्तिशालिनापि स्वामिमहाभागेन यदा हि कालेजाध्यापनकार्यतो विश्रमो गृहीतस्तदा बहूनामेव हृदि विस्मयोऽभवत्—'अध्यापनसोत्साहः परोपकारी शिष्यवत्सलोपि स्वामिमहोदयः कथमस्मिन्नेव वयसि अध्यापनकार्याद्विरामं वाञ्छति?' अधिकं किम्, बहवो महाशयास्तु राजकीयप्रबन्धादसंतोषस्य कथमपि कारणीचक्रुः । किन्तु स्निग्धसुहृत्समुदयेन पृष्टे सति स्वामिमहोदयः स्पष्टं समलपत्—'लोकानां तदिदमनुमानं केवलमनुमानमेव । बहवो जनास्तर्कयन्ति—यदयं विचारो मम सांप्रतमेव जात इति। किन्तु बहूनि वर्षाणि व्यतीतानि, मया पूर्वमेव तदिदं स्थिरीकृतमासीत्' इति वदन्नेव च स स्वीयात् निभृतपत्रसमूहात् समाकृष्य पुरातनं पीतवर्णमेकं पत्रं

सर्वान् दर्शयामास, यस्मिन् हि बहुतरवर्षेभ्यः पूर्वमेव बहुतरा वार्ताः भविष्यत्कालार्थं स्थिरीकृता आसन्। तासु इयमप्येकासीत् यत् समुचिते वयस्येव कालेजाध्यापनकार्यतो विरामो ग्राह्य इति। पूर्वतः स्थिरीकृतस्य निभृतनिश्चयस्यानुसारं निजजीवनचर्यापरिचालनपाटवमिदं प्रत्यक्षीकृत्य सर्वेपि चकिता अभूवन्।

अस्तु। आरम्भतएव स्वामिमहोदयस्य चित्तं लोकोपकारककार्याणां कृते उदारमासीत्। स्थानीयाभ्यो बहुभ्य एव संस्थाभ्यः स्वामिमहाभागेन समये समये समुचितं साहाय्यं दत्तमस्ति। साधारण-साधारणसंस्थानामपि भाग्ये एकद्वमुद्रामासिकं तु सामान्यं साहाय्यमस्ति। साधवः, शिक्षिताः, पण्डिताः, दीनाश्च विनामूल्यमौषधदानं प्राप्नुवन्ति—एतत्त्वस्त्येव। परमेतदतिरिक्तं यः कश्चन दीनः साधुर्धार्मिको वा स्वामिनां समक्षे याचकोऽभवत्सोपि यथाशक्तिदानेन सत्कृत एव, न विमुखीकृतः। द्रव्यसंकटवेलायां बहवो ब्राह्मणाः पण्डिताश्च ऋणं प्राप्य संकटविमुक्ता भवन्ति। तेषु केचित्स्वल्पवृद्ध्या (व्याज), केचिच्च अर्द्धवृद्ध्या ऋणं लभन्ते। केचिदस्मादृशाः शिष्टाभासास्तु—ऋणद्रव्यस्य 'व्याज' प्रदानसमये नानाविधव्याजान् कुर्युरिति तु साधारणी कथा, किन्तु यद्यवसरो लभ्येत तर्हि मूलस्यापि एवमेव (प्रतिप्रदानं विना) उन्मूलनाय यथाशक्ति प्रयासान्न विरमन्ति।

बहुवारान् ऋणं गृहीत्वा तस्य प्रतिसमर्पणवेलायां विस्मरणगुणवशात् अप्रामाणिकीभूत एको महाशयः अनुनयविनयौ कृत्वा स्वामिनो दयालुतया पुनरपि ऋणं प्राप्तवान्। परं निजदेशं प्रस्थितस्य तस्य व्यतीतानि विंशतितोऽप्यधिकानि वर्षाणि, किन्तु न कदापि स महाभागः स्ववृत्तान्तमपि प्रेषितवान्, धनप्रेषणस्य कथा तु दूरे। तत्सुहृत्संबन्धिभिः स्नेहेन परिहासकौतुकेन वा तस्मै कतिधा लिखितमपि यत् त्वं धनं न दास्यसीति बहोः कालात्पूर्वमेव प्रत्यक्षं निश्चितमस्माभिः। परं त्वं जीवसि न वेति सूचनस्य चिह्नभूतं वर्णमालायाः प्रथमाक्षरं ककारमेव लिखित्वा प्रेषय येन वयं त्वज्जीवनसूचनया तु प्रसन्ना भवामः, परं नास्याप्युत्तरं केनचित्कदाप्यवाप्तम्। अस्तु, एवं सत्यपि अवसरेषु समुचितमर्थसाहाय्यं प्रददत्सोयं स्तूयते नाम—

कुण्डलिया

'अव्याजं[1] बुधसमुदये समयमवेक्ष्य ददाति।
आर्थिकसाहाय्यं सदा सोयं स्वामी भाति॥
सोयं स्वामी भाति संदधत्सर्वान्सुधियः
औषधजातममूल्यमेष दीनेषु दिशति यः।
विद्यालयमुपरोप्य चोन्नयन् स्वामिसमाजम्॥
लक्ष्मीरामस्वामिवरः श्लाघ्योऽस्त्यव्याजम्॥

संपूर्णनिबन्धवर्णितस्य स्वभावपरिचयस्य परिचायकं तु निम्नोद्धृतं पद्यमस्ति—

घनाक्षरी (कवित्त)

आयुर्वेदसंहितासु मार्मिकः प्रमितवचा
धार्मिकः समस्तसाधुलोकैरपि शस्यते
भारते चिकित्साकर्मचतुराणामन्यतम—
श्छन्दोविचिकित्सा[2] विदामनुना निरस्यते।
मञ्जुनाथ शिष्यगुणघोषितविपुलयशा
धीर-शान्त-सत्यब्रह्मचारी वरिवस्यते
नामी वैद्यपण्डितेषु चामीकरतुल्यतनुः
स्वामी स हि लक्ष्मीरामपण्डितः प्रशस्यते॥'

भट्टश्रीमथुरानाथ शास्त्री (सा० आ०)

---

१ निष्कपटम्, वृद्धिं विना च। २ विदां पण्डितानां छन्दोविचिकित्सा छन्दोविषयकः संदेहः। छन्दःपाण्डित्यं हि स्वामिमहोदयस्य वंशपारम्परिको गुणः।

# शिष्यपरिचयः ।

( लेखकौ—वैद्यश्रीजयरामदासस्वामी, आयुर्वेदाचार्यः, संस्कृतकालेजस्यायुर्वेदाध्यापकः;
आयुर्वेदाचार्यः, आयुर्वेदालङ्कारः यशोराजशर्मा च, जयपुरम् । )

**तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।**
**यत्प्रसादात् प्रलीयन्ते मोहान्धतमसच्छटाः ।**

पाठकमहाभागाः !

अनेन लेखेन भवन्तः पूज्यपादानां श्रीस्वामिनां विद्वत्तायुर्वेदप्रचारकताध्यापनकौशलप्रभृतीन् उत्तमोत्तमगुणान् समवलोकयिष्यन्ति । अत्र चैतेषां सत्स्वपि बहुसंख्याकेषु छात्रेषु केषाञ्चन प्रमुखशिष्याणामेव जीवनमात्रेतिवृत्तं संक्षिप्य दर्शितं भविष्यति यद् ज्ञातं सद् भविष्णूनां वैद्यानां कृते समुन्नतिपथप्रदर्शनायालम्भविष्यति ।

श्रीस्वामिमहाभागैः षट्त्रिंशद्वर्षाणि यावज्जयपुरराजकीयसंस्कृतपाठशालायामध्यापनं कृतम् । तत्काले च प्राय उपाध्यायशास्त्र्याचार्यश्रेणिस्थाः परःशतसंख्याकाश्छात्राः पाठिताः । तेषु यथास्मृतं प्रमुखानां शास्त्र्याचार्याणां नामान्यधस्तात्प्रकाश्यन्ते ।

**तत्रायुर्वेदाचार्याणां नामानि कार्यक्षेत्राणि च ।**

१ श्रीयुतः पं० स्वर्गीयविष्णुदत्तब्रह्मचारी, पूर्ववंगनिवासी ( परिचयोऽग्रे ) ।
२ ,, स्वर्गीयमाधवप्रसादराजवैद्यः, जयपुरम् ( परिचयोऽग्रे ) ।
३ ,, पं० दुर्गाप्रसादशर्मा गौडः, जयपुरम् ( परिचयोऽग्रे ) ।
४ ,, स्वर्गीयकिशोरीवल्लभशर्मा गौडः, विजयगढ़ ( अलीगढ़ ) ।
५ ,, स्वर्गीयपं० नारायणदत्तशर्मा गौडः, खुरजा ( परिचयोऽग्रे ) ।
६ ,, स्वर्गीयजानकीलालत्रिवेदी, सवाई माधौपुर, भूतपूर्वप्रधानाध्यापकः विशुद्धानन्दविद्यालये, कलकत्ता ।
७ श्रीयुतः स्वर्गीय पं० नरोत्तमशर्मा प्रभवरः, जयपुरम् ।
८ ,, पं० आनन्दीलालः गौडः (परिचयोऽग्रे) ।
९ ,, पं० मणिरामशास्त्री, रामगढ़ (जयपुरम्) ( परिचयोऽग्रे ) ।
१० ,, पं० कृष्णगोपालशर्मा, इटावा ( यू.पी. ) ( परिचयोऽग्रे ) ।
११ ,, स्वामी दयानिधिः, हृषीकेशः (परिचयोऽग्रे) ।
१२ ,, स्वर्गीय पं० मुरलीधरभारद्वाजः, भरतपुरम् ।
१३ ,, स्वर्गीय पं० श्यामलाल गौडः, भिवानी ( परिचयोऽग्रे ) ।

१४ श्रीयुतः कृष्णदत्तशर्मा शुक्लः, अनूपशहर, भूतपूर्वचिकित्सकः मोहता-औषधालये, बीकानेर।

१५ ,, पं० नन्दकिशोरशर्मा खांडलः, जयपुरम् (परिचयोऽग्रे)।

१६ ,, पं० गणेशदत्तशास्त्री आयुर्वेदाचार्यः, लक्ष्मीमोदतरङ्गिणीप्रभृतिपुस्तकानां निर्माता, स्वतन्त्रचिकित्सकः, मेरठ (यू.पी.)।

१७ ,, पं० शंकरदेवशर्मा गौडः, खुरजा; आयुर्वेदाध्यापकः, बनवारीलाल-आयुर्वेद-विद्यालये, देहली।

१८ ,, पं० शिवदत्तशर्मा गौडः, जयपुरम्, भूतपूर्वप्रधानचिकित्सकः सेवासमिति-औषधालये, हापुड़।

१९ ,, नारायणप्रसादशर्मा, जयपुरम्, स्वतन्त्रचिकित्सकः कलकत्ता।

२० ,, पं० जसराजशर्मा दाधीचः, कोसाना (जोधपुर), निखिलभारतवर्षीयषोडशवैद्यसंमेलनावसरे निबन्धसौष्ठवेन प्राप्तरजतपदकः, भूतपूर्वः प्रधानप्रबन्धकः श्रीधन्वन्तरि-औषधालये तथा राजपूताना-आयुर्वेदीय यूनानी-तिब्बीकालेजे आयुर्वेदाध्यापकः, सांप्रतम् प्रधानचिकित्सकः श्रीशिवनारायणदिगम्बरजैन कं० आ० दातव्य-औषधालये, फतहपुर (जयपुर)।

२१ ,, पं० नित्यानन्दशर्मा नैपालदेशीयः प्रधानचिकित्सकः, काठमण्डू।

२२ ,, राजारामशर्मा साहित्यशास्त्री, आयुर्वेदाध्यापकः मोहताविद्यालये, बीकानेर।

२३ ,, जयरामदासस्वामी, दादूपथपरिव्राजकः, पूज्यपादानां श्रीस्वामिमहाभागानां पट्टशिष्यः, द्वितीयाध्यापकः संस्कृतकॉलेजे, स्वतन्त्रचिकित्सकः श्रीस्वामिलक्ष्मीरामजीचिकित्सालये, जयपुरम्।

२४ श्रीयुतः रामदासस्वामी उदासीनः, साहित्यशास्त्री, पंडितभूषणः, स्वतन्त्रचिकित्सकः श्रीचन्द्र-औषधालये, मुलतान।

२५ ,, पं० बुद्धिसागरशर्मा, स्वतन्त्र चिकित्सकः, हाथरस।

२६ ,, पं० उपेन्द्रनाथशर्मा कान्यकुब्जः, आयुर्वेदाध्यापकः, हमीरपुर।

२७ ,, अविनाशचन्द्रवर्मा, कानपुर।

२८ ,, पं० कन्हैयालालशर्मा, चन्दवाजी (जयपुरम्)।

२९ ,, गणेशलालशास्त्री, भूतपूर्वचिकित्सकः महावीर-जैन-औषधालये, साम्प्रतं स्वतन्त्रचिकित्सकः, जयपुरम्।

३० ,, पं० चिरञ्जीलालशास्त्री पाराशरः, श्रीलक्ष्मीरामचिकित्सालये भूतपूर्वभेषजनिर्माणशालावैद्यः, जयपुरम्। सांप्रतं स्वतन्त्रचिकित्सकः, कलकत्ता।

३१ ,, पं० हरप्रसादशास्त्री गौडः, राजवैद्यपुत्रः, खंडेला (जयपुरम्)।

३२ ,, मोतीरामस्वामी व्याकरणशास्त्री, साहित्यशास्त्री, जयपुरम्।

३३ ,, पं० कल्याणप्रसादशर्मा पुरोहितः, जयपुरम्।

३४ ,, पं० निरञ्जनलालशर्मा गौडः, खेतड़ी (जयपुरम्)।

३५ ,, रामदत्तशास्त्री गौडः।



जोधपुरराज्याभिजन–
वैद्ययशोराजशर्मा आयुर्वेदाचार्यः



नि० भा० वैद्यसम्मेलनस्य जयपुरीयाधिवेशने समागतानां कतिपयशिष्याणां मध्यगः श्रीस० स्वामी

वै० यं० अजमेर

## आयुर्वेदशास्त्रिणां नामानि कार्यक्षेत्राणि च ।

१ श्रीयुतः पं० गंगासहायशास्त्री ( परिचयोऽग्रे )।
२ ,, पं० भैरवदत्तशास्त्री खांडलः, जयपुरम् ।
३ ,, ठाकुरदत्तवर्मा शास्त्री, मुलतान ( परिचयोऽग्रे )।
४ ,, पं० तुलसीरामशास्त्री गौडः, खुरजा ( परिचयोऽग्रे )।
५ ,, स्वर्गीय पं० प्रभुलाल शास्त्री पुरोहितः, जयपुरम् ।
६ ,, पं० अग्निदत्तशास्त्री, स्वतन्त्रचिकित्सकः, हरदोई ।
७ ,, पं० भवानीदत्तशास्त्री, सवाईमाधवपुरम, प्रधानचिकित्सकः आयुर्वेदिक-औषधालये, अकोला ( सी० पी० )।
८ ,, पं० विशुद्धानन्दशास्त्री स्थानीयराजवैद्यः, स्वतन्त्रचिकित्सकः, बूंदी ।
९ ,, पं० पुरुषोत्तमशास्त्री, प्रश्नवरः, भूतपूर्वचिकित्सकः राजकीय-औषधालये, भरतपुर; सांप्रतं चिकित्सकः जैनदिगम्बर-औषधालये, जयपुरम् ।
१० ,, पं० मनमोहनशास्त्री, स्वतन्त्रचिकित्सकः लक्ष्मीनिवास-औषधालये, आगरा।
११ ,, स्वर्गीय पं० लक्ष्मीनारायणशास्त्री मिश्रः।
१२ ,, पं० श्रीनारायणशास्त्री, चोमू (जयपुरम्) ( परिचयोऽग्रे )।
१३ ,, पं० मेघराजशास्त्री, प्रधानचिकित्सकः, काठमण्डू ( नैपाल )।
१४ ,, पं० भवनाथशास्त्री, नैपालदेशीयः ।
१५ ,, पं० हरिवल्लभशास्त्री दाधीचः, तीतरिया ( जयपुर ) भूतपूर्वायुर्वेदाध्यापकः, जैन-पाठशाला, जयपुरम् ।
१६ श्रीयुतः स्वर्गीयपं० रूपनारायणशास्त्री गौडः, जयपुरम् ।
१७ ,, पं० माधवलालशास्त्री, जयपुरम्, गृहवैद्यः, फतेहपुर ।
१८ ,, बदरीनारायणशास्त्री खांडलः, ढांणी, (जयपुरम्) चिकित्सकः धर्मार्थ-औषधालये, बिसाऊ ( शेखावाटी )।
१९ ,, पं० चन्द्रशेखरशास्त्री गौडः, चोमू ( जयपुरम् )।
२० ,, पं० सीतारामशास्त्री दाधीचः, उदयपुरम् ( शेखावाटी )।
२१ ,, लक्ष्मीनारायणशास्त्री गौडः।
२२ ,, भूरारामस्वामी शास्त्री ।
२३ ,, स्वर्गीयज्वालादत्तशास्त्री ।
२४ ,, पं० जगन्नाथशास्त्री खांडलः, स्वतंत्रचिकित्सकः, कालवाड़ ( जयपुरम् )
२५ ,, पं० ब्रजमोहनशास्त्री, फर्रुखाबाद ।
२६ ,, पं० प्रेमशङ्करशास्त्री औदीच्यः, बड़ी सादड़ी ( मेवाड़ )
२७ ,, पं० हरिनारायणशास्त्री खांडलः, चोमू ( जयपुर )।
२८ ,, पं० मदनमोहनशास्त्री जयपुरप्रान्तीयश्चिकित्सकः, जीवनकुटीर-औषधालये, वनस्थली ( जयपुर )।
२९ ,, पं० विजयचन्द्रशास्त्री दाधीचः, जयपुरम् ।
३० ,, पं० गोपालदत्तशास्त्री सनाढ्यः, जयपुरम् ।
३१ ,, पं० रामगोपालशास्त्री गौडः, जयपुरम् ।
३२ ,, पं० हरिनारायणशास्त्री गौडः, चोमू ( जयपुर )।
३३ ,, बुद्धिदेववैश्यः शास्त्री, एटा (यू० पी०)

## दत्तशास्त्रिपरीक्षाः शास्त्रिकक्षायामधीयानाः, स्वातन्त्र्येण (Private) कृताध्ययनाश्च ।

१ श्रीयुतः लालदासस्वामी भिषग्रत्नः, सुप्रसिद्धचिकित्सकः, बीकानेर ।

२ ,, चौकसरामस्वामी चिकित्साकलानिधिः, बीकानेर ।

३ ,, स्वर्गीय पं० केशवदासस्वामी, आयुर्वेदविशारदः, सुप्रसिद्धचिकित्सकः 'संजीवन औषधालये, जयपुरम् ।

४ ,, पं० गोपीनाथशर्मा खांडलः, सुप्रसिद्धः स्वतन्त्रचिकित्सकः, जयपुरम् ।

५ ,, पं० नरहरिशर्मा राजवैद्यः, भट्टवंश्यः, आयुर्वेदाध्यापकः संस्कृतकॉलेजे, जयपुरम् ।

६ ,, मुकुन्ददेवचतुर्वेदी भिषग्रत्नः, बुलन्दशहर ।

७ ,, स्वरूपनारायणशर्मा प्रश्नवरः ।

८ ,, मंगलदासस्वामी निरञ्जनसम्प्रदायी, बीकानेर ( परिचयोऽग्रे ) ।

९ ,, पं० कल्याणप्रसादशर्मा सनाढ्यः ।

१० ,, मनसारामस्वामी दादूपथपरिव्राजकः ।

११ ,, दयालुदासस्वामी दादूपथपरिव्राजकः ।

१२ ,, मदनलालशर्मा खांडलः, भूतपूर्वचिकित्सकः महावीर-औषधालये, जयपुरम् ।

एवमनया स्वल्पीस्यापि छात्रसूच्या प्रत्यक्षं समवलोक्यते श्रीमद्भिर्यत् श्रीस्वामिनां द्वारा जातः, आयुर्वेदविषयकः प्रचारो भूयान् अस्ति । नहि कोऽपि देशोऽस्ति यत आगत्य छात्रैः श्रीपूज्यपादानां स्वामिनां सकाशादायुर्वेदागमो नाधीतः स्यात्, अपि तु प्रतिदेशं व्याप्ताः श्रीस्वामिनां शिष्या उत्तमोत्तमामध्यापनस्य, चिकित्सायाः; ग्रन्थनिर्माणस्य चोन्नतिं विहितवन्तो विदधति च ।

अथ तेषां शिष्याणां मध्ये कतीनांचिदध्यापनकौशलं चिकित्साचातुरीं ग्रन्थरचनापटुताञ्चोररीकुर्वाणानां स्वस्वप्रान्ते प्रसिद्धानां वैद्यसमाजे समादृतानां वैद्यभ्रातॄणां संक्षिप्तानि जीवनवृत्तानि यथासम्भवं तेषां शिष्यसंख्या च पाठकानां परिचयार्थं प्रदर्श्यते।

तत्र

## १—स्वर्यातानां स्वनामधन्यानां श्रीमतां विष्णुदत्तब्रह्मचारिणां संक्षिप्तः परिचयः

" एते महानुभावाः पूर्वबङ्गप्रान्ते प्रादुरभूवन्, आसंश्च वैद्यजातीयाः । बाल्यकालादेव च ब्रह्मचारिसम्प्रदाये दीक्षामङ्गीकृत्य यथावस्थं न्यायव्याकरणादिग्रन्थानधीत्य तत्र सुबहु व्युत्पन्ना अभूवन् । ततो भूतदयापरा रोगिजनं त्रातुकामा आयुर्वेदाध्ययने कृतमतयः श्रीमतां कविराज-कविरत्न-महामहोपाध्यायां श्रीद्वारकानाथसेनमहाभागानां सुप्रसिद्धानां चिकित्सकानां सेवायां कलिकातानगरं प्रयाताः । कियदध्ययनानन्तरमेते जयपुरमागताः श्रीगुरुगुरूणां पूज्यपादानां भट्टमहाभागानां श्रीकृष्णरामभिषजामन्तेवासित्वं स्व्यकुर्वन् । परन्तु स्वर्यातेषु भट्टमहाभागेषु तदध्यापनासनमलंकुर्वतां श्रीस्वामिनां सकाशात्पठनमारब्धवन्तः । अनवरतं सपरिश्रममधीयाना आचार्यपरीक्षामुदतरन् ।

अनन्तरं चेतः कलिकातां गतवन्तस्तत्र च प्लेगप्रसरं समवलोकयन्तः पञ्चनदप्रान्तं प्रति प्रयान्तः कलिकाताया नातिदूर एवाकस्माच्छरीरं तत्यजुः । एवं च सुभविष्णूनामेतेषामायुर्वेदसेवाकरणमपि सहैव विलीनमभवत् ।



स्वर्गीय-वैद्यवर्य-भिषक्शिरोमणिः श्रीलालदासस्वामी
( बीकानेर )



वैद्यवर्य-चिकित्साकलानिधिश्चौकसरामस्वामी
( बीकानेर )

## २—स्वर्यातानां श्रीमतां माधवप्रसादाचार्याणां संक्षिप्तं वृत्तम् ।

एते जयपुर एव श्रीमतां राजवैद्यानां गंगावक्सजीव्यासमहानुभावानां गृहे १९३२ वैक्रमाब्दे मार्गशीर्षमासे समजायन्त ।

एते बाल्यकालिकीं शिक्षां व्याकरणादियोग्यतां च सम्पाद्यान्ते स्वपितृभिरायुर्वेदाध्ययने प्रवर्तिता भट्टमहाभागानां श्रीकृष्णरामशर्मणामन्तेवासितामुपेत्य शास्त्रिपरीक्षामुदतरन् । अन्ते च स्वर्यातेषु भट्टमहाभागेषु श्रीस्वामिनां सकाशे पठन्तः १९५५ वैक्रमाब्दे आचार्यपरीक्षामुदतरन् । यद्यपि एते श्रीस्वामिनां शिष्या अभूवन्, तथाऽपि परस्परमभिन्नहृदयं सौहार्दमेवान्वभूवन् । यतो हि श्रीस्वामिन एतेषां पितॄणां सकाशे निदान-वैद्यजीवन—त्रिशती-शार्ङ्गधर-संहिता अधीतवन्तस्तदैव चैतेषां श्रीस्वामिभिः सह मैत्री समजनि । सा च शिष्यत्वसम्बन्धेऽपि अविच्छिद्यमाना एतेषां स्वर्गारोहणवेलां यावत् प्रचालिता सती साम्प्रतमपि श्रीस्वामिनां हृदये जागर्ति । स्नेहस्य परा काष्ठैवासीद् यदेते श्रीस्वामिभिरौषधालयप्रचालने सहचारित्वेन स्वीकृताः । प्रारब्धमपि भेषजनिर्माणादिकार्यं श्रीस्वामिभिः सह, परन्तु कुटिलकालबलादेते महानुभावाः १९५७ वैक्रमाब्दे ज्येष्ठमासे देशव्यापिनि भयंकरविषूचिकाप्रकोपे समाकृष्टा दिविषदत्वमवापुः ।

एते सुकुमाराः सहृदया ग्रामपतयश्चासन् । एतेषां निर्मलचरित्रम्, मनोभिरामा आकृतिः, प्रवृत्तिश्च साम्प्रतमप्याकुलयति द्रष्टॄन् ।

सुतरां खेदास्पदमेतद् यदेते महाभागा अकाल एव परित्यज्य स्वकलेवरं दिवं गताः । एतेषां विरहेणायुर्वेदस्य कियती क्षतिः संजातेति लिखितुं न पार्यते । एते श्रीस्वामिमहाभागानां प्रधानाः शिष्याः परमादरणीयाश्चासन् । किं बहुना, स्वर्गतैरेभिः स्वामिमहाभागानां हृदयेऽतीव क्षोभो व्यधायि ।

## ३—श्रीपं० दुर्गाप्रसादशर्मायुर्वेदाचार्याणां परिचयः ।

एते महानुभावा वर्तमानानां श्रीस्वामिशिष्याणां प्रथमाः सन्ति । एते जयपुरनगरे १९३२ वैक्रमाब्दे आश्विनकृष्णत्रयोदश्यां सुप्रसिद्धानां यशस्विचिकित्सकानां श्रीमतां महादेवशर्मणां गृहमलमकार्षुर्जन्मना । प्रारम्भिकशिक्षां समाप्य जयपुरराजकीयसंस्कृतविद्यालये संस्कृतमधीयानाः १९४९ वैक्रमेऽब्दे प्रवेशिकापरीक्षामुत्तीर्य वंशपारम्परिकवैद्यकव्यवसायं कर्तुमनसो वैद्यकश्रेणौ प्रविश्य श्रीमतां कविवरश्रीकृष्णरामशर्मभट्टमहाभागानामन्तेवासित्वे १९५२ वैक्रमाऽब्दे भिषक्परीक्षामुत्तीर्णवन्तः ।

अनन्तरं स्वर्यातेषु भट्टमहाभागेषु श्रीस्वामिनां सौहार्दमनुभवन्तोऽपि शिष्यत्वमनुभवन्त एषां सविधे आयुर्वेदधर्मशास्त्रसाहित्यशास्त्रप्रभृतीनधीयानाः क्रमशो भिषग्वर-भिषगाचार्य-परीक्षे १९५४-१९५८ वैक्रमाब्दयोरुदतरन् । एषां शास्त्रिपरीक्षायां प्रायोगिकयोग्यता विशिष्टा आसीत् । तत्फलस्वरूपमेभिः स्वर्णपदकं लब्धम् ।

आचार्यप्रमाणपत्रे च परीक्षकसम्मतिरूपमेकं पद्यमपि लब्धम्, तद्यथा—

विप्रो दुर्गाप्रसादाख्यो व्युत्पत्तिं वैद्यकेऽगमत् ।
सुखं हितं चिरं जीव्यात् तथा नॄन् जीवयत्वसौ ॥

परीक्षाप्रणाल्याः प्रारम्भयुगे परीक्षां विनाऽपि व्याकरणादिषु योग्यता सम्यगधिगता एभिरिति महा-महोपाध्यायपं०शिवदत्तशर्मभिः पञ्चनदशास्त्रि-पदवीसमयोग्यताख्यापकं प्रमाणपत्रं दत्तमेभ्यः । आयुर्वेदीयग्रन्थाध्यापन-भेषजनिर्माण-चिकित्सापटुता-प्रदर्शको वैद्यभूषणोपाधिश्च श्रीस्वामिभिर्वितीर्णः । तत्कालीनैः संस्कृतपाठशालाध्यक्षैरपि उत्तमयोग्यता-ख्यापकं प्रमाणपत्रं दत्तमेभ्यः ।

अनन्तरं धामनगांववासिनोर्जयरामदासराम-चन्द्रश्रेष्ठिनोः संस्थापिते हरिद्वारपुर्यामायुर्वेदप्रचा-रकविद्यालये वृत्तिमादाय १९६३ वैक्रमाब्दमारभ्य १९६८ वैक्रमाब्दं यावदध्यापिताश्छात्रा एभिरनेके च चमत्कारिणो रसप्रयोगा अपि तत्र निर्मिताः ।

अनन्तरम् "आयुर्वेद एण्ड यूनानी तिब्बिया कालेज" इत्याख्याविद्यालये इन्द्रप्रस्थे, आयुर्वेदा-ध्यापनकार्यमायुर्वेदविभागीयमन्त्रिपदञ्च १९७० वैक्रमाब्दतः १९७५ वैक्रमाब्दं यावत् स्वीकृतम् । अत्राप्येषां कार्यतोऽधिकारिणश्छात्राः सर्वे भृशं संतुष्टा अभूवन् ।

तत्पश्चात् पित्रोः स्वरारोहणवशादेते जयपुरं पुनरागताः । अत्र च स्वतन्त्रमौषधालयं संस्थाप्य चिकित्सायां प्रवृत्ता अभवन्, तत आरभ्य चेदानीं यावदत्रैव तिष्ठन्ति । अतीतेषु दिवसेषु निखिलभार-तवर्षीयायुर्वेदविद्यापीठसंस्थया एभ्य आयुर्वेदपञ्चा-ननोपाधिर्वितीर्णः । संप्रति स्वकीयो लघुभ्राता पं० लक्ष्मीनारायणशर्मा पुत्रत्वेनैभिः प्रकल्पितस्तस्यो-पर्येव चिकित्सादेः सकलं भारं त्यक्त्वा स्वयं विरक्ता विराजन्ते । असावपि च लब्धाचार्यपदवीकः स्वपि-तृगुणानुकारी सुशीलो भविष्णुरस्ति ।

स्वकीये चिकित्सालयेऽप्येते बहून् छात्रानशिक्ष-यन् शिक्षयन्ति च । छात्रान् प्रति दयालुता एषां सदैवाविकला आस्ते । तेभ्यो विद्यादाने तेषां योग्य-तासंपादने चैभिः कदाप्यालस्यं नावलम्बितम् ।

एतेषां शिक्षाक्रममनुसृत्य तत्तद्विद्यालयस्थाना प्राइवेट्छात्राणां च संभूयाद्यावधि सार्धशतद्वय.दन्यूना संख्या संवृत्ता । आसते च तेषु बहवो योग्यता-सम्पन्ना उत्तमोत्तमकार्यक्षेत्रेषु वर्तमानाः ।

## ४—श्रीमतां पण्डितनारायणदत्तशर्मणामायुर्वेदाचार्याणां परिचयः ।

एते महानुभावाः १९४० विक्रमाब्दे खुरजा-सन्निहिते भटवाराख्ये ग्रामे श्रीमतां पं० मोहनलाल-शर्मणां गृहे जन्मालभन्त । पठने प्रवर्तिताश्च हिन्दी-शिक्षामधिगत्य खुरजानगरे श्रीपं०हजारीलालशर्म-पं०चण्डीप्रसादशुक्लमहोदययोः सकाशे व्या-करणसाहित्यसम्बन्धिनीमुत्तमां व्युत्पत्तिमधिगत्य व्याकरणमध्यमपरीक्षामुदतरन् । व्युत्पत्त्या उदा-हरणमेकं गङ्गाष्टकस्तोत्रं मध्यमपरीक्षाद्वितीयखण्डे एव विरचितवन्तः । तत्रत्योऽयमेकः श्लोकः—

अन्येऽनन्यगतिं प्रयातुमगमन् धन्ये हिमाद्रौ मुदाऽ-
जन्यैकैश्च सपर्यया मधुरिपोर्मुन्येकलभ्या गतिः ।
मन्येऽहन्तु तदाधिवासमिह जन्मन्येव शुभ्रां गतिं
वन्येभद्विषि शम्बरे शुनि तथाऽऽत्मन्येकतां दर्शयन् ॥

अनन्तरमेकदा पठनकाल एव स्वग्रामे रुग्णाः सन्तः प्रार्थितमेकं वैद्यमभिमानिनमनासाद्यान्यस्या-ज्ञानिनो वैद्यस्य चिकित्सया भृशं रुग्णा अभवन् । कृतवन्तश्च संकल्पं खुरजापरिसरे शिक्षितवैद्यवृन्द-प्रतिष्ठापनाय ।



वैद्यक-वेदान्ताद्यनेकग्रन्थकारः स्व० पण्डितनारायणदत्तशर्मा, खुर्जा



वैद्यश्रीतुलसीरामशर्मा, आयुर्वेदशास्त्री, खुर्जा



वैद्यश्रीशङ्करदत्तशर्मा आयुर्वेदाचार्यः, वनवारीलालायुर्वेदविद्यालयाध्यापकः
( देहली )



वैद्यगणेशदत्तशर्मा आयुर्वेदाचार्यः,
मेरठ

नैरोग्यानन्तरञ्चैते स्वमित्रैः श्रीमद्भिः पण्डितैस्तुलसीरामशर्मभिः साकमायुर्वेदाध्ययनमनसः श्रीपूज्यपादानां स्वामिमहाभागानां चरणसेवायामागताः। तत्कालीनाः जयपुरराजकीयसंस्कृतविद्यालयाध्यक्षाः पं० श्रीलक्ष्मीनाथशास्त्रिणो योग्यतामुग्धा एतानुपाध्यायपरीक्षोत्तरणमन्तरैव शास्त्रिकक्षायामध्येतुमाज्ञापितवन्तः। इमे च वर्षानन्तरमेव प्रथमश्रेण्यां साहित्योपाध्यायपरीक्षां द्वितीये च वर्षे प्रथमश्रेण्यां आयुर्वेदशास्त्रिपरीक्षामुदतरन्, वर्षद्वयानन्तरञ्चायुर्वेदाचार्या अभवन्।

एते महानुभावा अध्ययनकाले सुव्युत्पन्नतया स्वसहाध्यायिपाठने शास्त्रीयवादविवादे च लब्धविजया आदरबुद्ध्या समवलोक्यन्ते स्म सर्वैरध्यापकैः।

अनन्तरमध्यापनं वरं मन्यमानाः एन. आर. ई. सी. पाठशालायां गृहीतशुल्काः किञ्चित्कालमध्यापितवन्तः। ततः श्रीसन्तं सूर्यमलश्रेष्ठिनं प्रोत्साह्य खुरजानगरे स्थापितवन्तः श्रीलक्ष्मणदासविद्यालयम्, यत्रानेके छात्राः शिक्षिताः सन्तो भारतप्रसिद्धानां विश्वविद्यालयानां तत्तत्परीक्षामुत्तीर्य अध्यापनचिकित्सादिकार्ये लब्धयशसो नैकेषु प्रान्तेष्वायुर्वेदशास्त्रं जीवयन्ति। एवं संजीवनाख्यमौषधालयमपि स्थापितवन्तो यत्राहर्निशं छात्रैः प्रायोगिकी शिक्षा अधिगम्यते रोगिजनैश्चारोग्यम्।

एतेषां पाठनचातुरी भारतप्रसिद्धेति शिष्यसंख्ययैवानुमीयते। किञ्च शास्त्रीयशुद्धसिद्धभेषजनिर्माणे उत्तमताख्यापकमेकं निखिलभारतवर्षीयवैद्यसम्मेलनत इन्द्रप्रस्थे प्रमाणपत्रं जयपुरे च स्वर्णपदकमेभिः समधिगतम्। आयुर्वेदव्याकरणसाहित्यवेदान्तादिविषयेषु सर्वेष्वप्येतेषां पूर्णोऽधिकार आसीत्। गद्यपद्यरचनात्मिका कवित्वशक्तिरपि सुमहत् समुदजृम्भत। तत्रायुर्वेदे गणनाथसेनमहोदयलिखितं गद्यात्मकं प्रत्यक्षशारीरं छात्राणां सौकर्याय पद्येषु निबद्धम्। जीवानन्दनाटकस्य जीवानन्दरसायनाख्या सरला टीका निरमायि। रोगमूर्धन्यस्य ज्वरस्य चिकित्सितवर्णनाख्यः प्रबन्धो व्यधायि। तदितरेषु विषयेषु गङ्गाष्टकस्तोत्रम्, "चतुःसूत्री"तिप्रसिद्धस्य वेदान्तग्रन्थस्य "वेदान्तशास्त्रेर इतिहास" इति वङ्गभाषानिबद्धस्य च वेदान्तग्रन्थस्य विशदार्था हिन्दीटीका निरमायि। अन्ये च गद्यपद्यात्मका नैके निबन्धाः काले काले विरचिताः।

एतेषां गुरुभक्ति-निर्लोभिता—निःस्पृहता-सौजन्य-दया-दाक्षिण्यादय आत्मीया गुणा अपि पदानुगामिनां पथप्रदर्शनायालं सन्ति। तथा हि षष्ठवैद्यसम्मेलनसभापतिपदमलङ्कुर्वद्भिः श्रीस्वामिभिः कलिकातानगर्यामाहूता इमे पाठशालीयाधिकारिणामनाज्ञयाऽपि गुरुभक्तिबलेन तत्र गतवन्तः। १९१३—१४ तमे खैष्टाब्दे, इन्द्रप्रस्थीयस्य तिब्बीकालेजस्य प्रधानाध्यापकपदस्वीकरणाय सुप्रसिद्धैः "हकीम अजमलखां"महोदयैः प्रचुरवेतनदानद्वारा प्रोत्साहिता अपि नाङ्गीकृतवन्तस्तत्पदं खुर्जापरिसरे वैद्यकं प्रचारयितुकामाः। बीकानेरनगरस्थे त्रयोविंशतितमे नि० भा० वैद्यसम्मेलने द्रव्यगुणसंभाषापरिषदः सभापतिपदमलंकर्तुं नैकशः प्रार्थिता अपि निषेधन्तो भूयस्तरेणाग्रहेण स्व्यकुर्वंस्तत्पदम्। तत्कालीनं भाषणमप्येतेषामायुर्वेदज्ञानां कृतेऽमूल्यनिधिरेवास्ते।

'महीयसां महीयानेव परिवार' इति न्यायादेतेषां कनिष्ठा भ्रातरः पं०शङ्करदेवशर्माणोऽपि लब्धाचार्यपदवीकाः साम्प्रतमिन्द्रप्रस्थे बनवारीलाल-

विद्यालयेऽध्यापयन्ति, ये हि श्रीस्वामिनामपि शिष्याः, शास्त्रीयभैषज्यनिर्माणकौशलकृते बीकानेरवैद्यसम्मेलनतो भिवानीस्थ-पञ्चनदप्रान्तीयवैद्यसम्मेलनतश्च स्वर्णपदकमधिगतवन्तः। भिवानीस्थसुप्रसिद्धपंडितसीतारामशास्त्रिभिरुत्थापितां सिद्धभेषजमणिमालारसप्रस्तारविषयिणीं शङ्काञ्चापि महता पाण्डित्येनैव समाहितवन्तस्तद्विषयकश्च शास्त्रार्थः सर्वेषां वैद्यविदुषां हृदि सगौरवं जागर्ति।

ज्येष्ठः पुत्रः पं०वाचस्पतिमिश्रमहोदयः काशीविश्वविद्यालयस्य साहित्यशास्त्री, उत्तीर्णमैट्रिकपरीक्षोऽधुना काश्यां हिन्दूविश्वविद्यालये पाश्चात्त्यशास्त्रेण सहायुर्वेदाचार्यपरीक्षाग्रन्थानभ्यस्यति। अपरौ च द्वौ पुत्रौ रमापतिक्ष्मापत्याख्यौ, आङ्गभाषामधीयाते।

एवं गुणगरीयोभिरेभिर्विद्वद्वरैः स्वकीयः सर्वोऽपि समयोऽध्ययनाध्यापनग्रन्थनिर्माणचिकित्साप्रसारकार्येषु व्यतिगमितः। एवं चायुर्वेदस्य भूयस्तरां शिर उन्नमितमेभिरिति आदर्शचरिताः खल्वेते विद्वद्वराः।

एतेषां यशोमूर्तिः श्रीलक्ष्मणदासविद्यालयोऽपि काले काले भेषजनिर्माणशालाचिकित्सालयप्रभृतिना शिक्षोचितप्रबन्धेन प्रवर्द्धमानो युक्तप्रान्तेऽद्वितीय इवाभाति। यत्रैतेषामध्यापयतां न्यूनातिन्यून एकविंशतिवर्षात्मकः कालो व्यतीतः। अद्यावधि च योग्यानामधीतच्छात्राणां संख्या शतोत्तरचत्वारिंशदात्मिका संजाता। तद् यथा—

जयपुरराजकीयसंस्कृतोपाधिपरीक्षासु—

आचार्याः ६, शास्त्रिणः २२, उपाध्यायाः ६२, योगः ९०।

नि० भा० वैद्यसम्मेलनविद्यापीठपरीक्षासु—

आचार्यौ २, विशारदा २०, भिषजौ २, योगः २४।

इन्द्रप्रस्थीयबनवारीलाल-आयुर्वेदविद्यालयपरीक्षासु—

विशारदाः १३, वैद्यौ २, योगः १५।

विहारएसोसियेशनपरीक्षासु—मध्यमोत्तीर्णः १।

अप्रविष्टपरीक्षा व्युत्पत्तिभाजः —१०।

संभूय संख्यायोगः १४०।

अथेदं निवेदयतामस्माकं लेखनी कम्पते यन्महानुभावा एते अकाल एव कार्यकलापमात्मीयमुत्सृज्य दिवं प्रयाताः। भूतलं विभूषयद्भिरेभिरायुर्वेदस्य महती सेवा समाशास्यत। स्वामिमहाभागा अपि स्मारं स्मारमेषामनन्यसाधारणांस्तांस्तान् गुणगणान् सुभृशमुपतप्यन्ते वियोगव्यथया।

## ५—श्रीमतां वैद्यप्रवरश्रीमणिरामशर्मणामायुर्वेदाचार्याणां जीवनवृत्तसंक्षेपः।

एतेषां महाभागानां जन्म जम्बूकाश्मीरप्रान्तगतदेवावटालान्तिकस्थे रामपुरग्रामे त्रिचत्वारिंशदुत्तरैकोनविंशतिशततमे (१९४३) वैक्रमेऽब्दे श्रीमत्पंडितसन्तरामशर्मविदुषो गृहे अभूत्। शैशवे प्रायो जम्बूराजधान्यां( तोप )मातुलगृहे न्यवसंस्तत्रैव च श्रीरणवीरहाईस्कूलसंस्थायां प्रारम्भिकमध्ययनं कृतवन्तः। ततो जलालपुरजटांग्रामे, तदनु च लवपुरे सनातनधर्मसंस्कृतपाठशालायाम्, ततः पुनर्जम्बूनगरे श्रीरघुनाथविद्यालयेऽधीय पटियालाराजधान्यां कुत्रचिदध्यापनादि कृत्यं चिकीर्षन्त

एते केनाचिद्विदुषाऽऽयुर्वेदाध्ययनाय प्रोत्साहिताः। ततः १९०८ खिष्टाब्दे देहलीराजधानीं प्राप्य तत्र च वैद्यराजानां श्रीमनोहरलालशर्ममहोदयानां सविधे लघुत्रयीमधीत्य १९१० खैष्टाब्दे जयपुरं प्राप्य राजकीयसंस्कृतपाठशालायां भारतप्रसिद्धवैदुष्यवैभवानामायुर्वेदमार्तण्डानां श्रीलक्ष्मीरामस्वामिमहाभागानां चरणेषु यथानियमं वर्षपञ्चकं यावदध्ययनं कृत्वा १९१७ खिष्टाब्दे शेखावाटीप्रान्तस्थरामगढ़नगरे एच. आर. संस्कृतकालेजे प्रधानायुर्वेदाध्यापकपदं विभूषितवन्तः, यत्र च षोडशवर्षैर्बटून् पटून् कुर्वन्त इमेऽधुनाऽपि तत्पदं भूषयन्ति।

एतेषां चरकाद्यार्षायुर्वेदग्रन्थेष्वतीव प्रखरं पाण्डित्यं चिकित्साशैली च सर्वस्मिन्नपि प्रान्तेऽद्वितीया वर्तते। इदानीं यावच्छतशश्छात्रा एतेषां कृपयाऽऽयुर्वेदमधीत्य वैदुष्यभाजो लब्धशास्त्र्याचार्यपदवीकाः सगौरवं विविधेषु कार्यक्षेत्रेषु कार्याणि सम्पादयन्ति। स्वभावश्चैषां सरलो दयापूर्णः परोपकारप्रवणश्चास्ति। न केवलं रामदुर्गीया एवापि तु समीपस्थनगरस्था अपि महाभागानाममीषां चिकित्सया लाभान्विता भवन्ति। प्रायः प्रत्येककर्मोपकारके सार्वजनिके च कर्मणि जना एतेषां सहयोगं लभन्ते।

१९२० खैष्टाब्दे शार्ङ्गधरसंहितायाष्टीकां रचितवन्तः, परन्तु तेष्वेव दिनेषु केनचिदन्येन विदुषाऽऽढमल्लकृता तट्टीका प्रकाशितेति तां निर्मायाऽपि न मुद्रितवन्तः। वर्षेऽस्मिन् जयपुरीयशास्त्रिपरीक्षायां पाठ्यत्वेन नियतस्य रसेन्द्रचिन्तामणिग्रन्थस्य प्रौढा पाण्डित्यपूर्णा च टीका निर्माय मुद्रापिता, या च श्रीस्वामिमहाभागानां चरणकमलेषु उपायनीकृता, प्राप्तं च तदानीमेव श्रीस्वामिनिर्मितं निजगौरवास्पदमाशीर्वादात्मकमेकम् पद्यम्। तथा हि—

> शिष्यैः प्रशिष्यैः परिपूज्यमानः
> गुणैरुदारैः परिवर्धमानः।
> प्रशस्तभैषज्यविधानकर्मा
> जीव्याच्चिरं श्रीमणिरामशर्मा॥

इयमायुर्वेदसंसारस्य महान्तमुपकारमाधास्यति।

अथैतेषां सकाशादधीतवैद्यकानां छात्राणां संख्या इत्थमस्ति—

| | | | |
|---|---|---|---|
| आयुर्वेदाचार्याः | ५, | शास्त्रिणः | ९, |
| विशारदाः | २५, | आयुर्वेदोपाध्यायाः | ४३, |
| | | संभूय योगः— | ८२। |

## ६—श्रीमतामानन्दीलालशर्मणामायुर्वेदाचार्याणां संक्षिप्तं जीवनवृत्तम्।

एते महानुभावा जात्या गौड़विप्रा जयपुरमलंकुर्वन्ति। बाल्यकालिकशिक्षां प्राप्यानन्तरमायुर्वेदमध्येतुं प्रवृत्ता जयपुरीयसंस्कृतपाठशालां प्रविश्य क्रमश आयुर्वेदोपाध्यायशास्त्र्याचार्यपदवीरधिगतवन्तः।

अनन्तरं श्रीमतां पूज्यपादानां स्वामिनामाज्ञया स्थानीये श्रीधन्वन्तर्यौषधालये वृत्त्या वैद्यत्वं स्व्यकुर्वन्। तत आरभ्याधुनापर्यन्तं तत्रैव चिकित्सयन्ति रोगिणः। यथावसरं च स्वगृहे आयुर्वेदाध्यापनमपि कुर्वन्ति। एते जयपुरे चिकित्साक्षेत्रे

प्रसिद्धा यशस्विनो भिषजः सन्ति । विशेषतः साधारणभेषजैरेव महतां रोगाणां सफला चिकित्सा जयपुरे एभिरेव क्रियते इति प्रसिद्धिः ।

सामन्तानां, राज्ञां, महाराजस्य च गृहेष्वपि लब्धप्रतिष्ठाः सुफलया चिकित्सया । प्रारम्भिकस्थितौ साधारणायामपि सत्यामधुनोत्तमं धनमुपार्जितवन्तः । एतेषां दयालुता-रोगिप्रेम-सौजन्यादयो गुणाः प्रभावयन्ति जयपुरीयानिति ।

## ७—श्रीमतां कृष्णगोपालशर्मणामायुर्वेदाचार्याणां संक्षिप्तः परिचयः ।

इमे महानुभावा इटावाप्रान्तीय 'इकनौर' नगरे श्रीमतां पण्डितगङ्गाधरपाण्डेयानां गृहे १९३९ वैक्रमाब्दे जन्मालभन्त । बुद्धिवैभवाच्च स्तोकेनैव कालेन प्रारम्भिकशिक्षां समाप्य १९६१ वैक्रमाब्दे पचपुखरास्थसंस्कृतविद्यालये व्याकरणयोग्यतामन्वविन्दन् ।

अनन्तरमेषां बुद्धिवैभवप्रभावितस्तत्रत्यो मिश्रवंशावतंसो लक्ष्मीनारायणो लक्ष्मीवान् एतान् वृत्तिं प्रादायायुर्वेदमध्येतुं श्रीस्वामिनां सेवायां संप्रैषयत् । अथात्राधीयानैरेभिरायुर्वेदोपाध्यायशास्त्र्याचार्यपरीक्षास्तिस्रोऽपि पारिताः ।

अनन्तरं लक्ष्मीनारायणश्रेष्ठिन आग्रहमनुरुध्य पचपुखरासंस्कृतविद्यालये नववर्षपर्यन्तमायुर्वेदमध्यापयद्भिरेभिस्तत्र भूयानायुर्वेदप्रचारो व्यधायि । अनेके च छात्राः परीक्षोत्तीर्णा अभवन् ।

अनन्तरं कालगत्या १९८३ वैक्रमाब्दे 'इटावा'प्रान्तीये 'औरैय्या'नगरे महाविद्यालये अध्यापयितुं प्रवृत्ताः । अथ च भेषजनिर्माणकार्यमपि बहुलयन्त एते एकां रसायनशालामुद्घाटितवन्तः । अत्रापि छात्राः सम्यक् शिक्षिताः, भूयांश्च प्रचारोऽस्य शास्त्रस्य सम्पन्नः ।

अद्यावधि आचार्यशास्त्रिविशारदभिषक्प्रभृतिपदवीधारिणां छात्राणां संख्या संभूय त्रयोविंशतिः संजाता ।

## ८—श्रीमतां दयानिधिस्वामिनामायुर्वेदाचार्याणां जीवनवृत्तम् ।

इमे महानुभावा दादूपथपरिव्राजकाः परिव्राजकशिरोमणीनां व्याकरणप्रकाण्डपण्डितानां जयपुरान्तर्गत'खंडेला'नगरनिवासिनां महानन्दविद्यानिधीनां शिष्याः सन्ति ।

शैशवे स्वगुरुभिर्व्याकरणे सुव्युत्पादिता इमे, आयुर्वेदमध्येतुकामाः १९१० खैष्टाब्दे श्रीस्वामिमहाभागानां सविधे प्राप्ताः, राजगुरूणां श्रीमतां विहारीदासमहान्तानामाश्रयमाधिगत्य, जयपुरीय-संस्कृतपाठशालायामायुर्वेदाध्ययनं प्रारब्धवन्तः । तत्र च वर्षषट्केन यथानियममायुर्वेदोपाध्यायशास्त्र्याचार्यपरीक्षाः समुत्तीर्णवन्तो लब्धवन्तश्च स्वर्णपदकम् ।

तदनन्तरं च वर्षद्वयं यावत् श्रीस्वामिनां भवन एव प्रायोगिकशिक्षां साहित्यशिक्षाञ्च गृहीतवन्तः । अनन्तरं १९१९ खैष्टाब्दे श्रीमतां 'बाबा कालीकमलीवाले' इत्याख्यानां स्वामिनामायुर्वेदविद्यालये हृषीकेशनगरे प्रधानायुर्वेदाध्यापकपदमलंकृतवन्तः । सामयिकीं सुश्लाघ्यां समुन्नतिं कुर्वाणा अद्यापि तत्रैव विराजन्ते ।

श्रीमद्भिस्तत्र निवसद्भिः सपादद्विशतं शिष्याणां

तत्तद्विद्यालयसम्बद्धास्वायुर्वेदाचार्यविशारदादिषु परीक्षासु पारं गमितम् । विद्यालयोन्नतिश्च सम्यग् विहिता । कार्यमिदमवेद्य प्रीतमानसैः श्रीमद्भिः "१०८ बाबा कालीकमलीवाले रामनाथजी" इत्याख्यैर्महात्मभिरेभ्यो योग्यतासूचकं सपादशतरूप्यकमूल्यकं स्वर्णपदकं समर्पितम् ।

१६२५ खैष्टाब्दे जयपुरेऽपि निखिलभारतीयषोडशवैद्यसम्मेलनावसरे एभिः स्वर्णपदकं प्राप्तम् । गतवर्षे च भारतसम्राजैभ्यः "आनरेरी मजिस्ट्रेट" इति पदवी प्रदत्ता ।

अधुना चैषामध्यक्षतायामायुर्वेदविद्यालयो भिन्नभिन्नस्थानीयाश्च द्वादशौषधालयाः स्वकीयं कार्यं सम्यक् सम्पादयन्ति ।

एषां सकाशादधीतानां छात्राणां संख्या इत्थमस्ति ।

| आचार्याः | विशारदाः | भिषजः | योगः |
|---|---|---|---|
| ६ | ७७ | १४६ | २२६ |

## ६—श्रीमतां श्यामलालशर्मणामायुर्वेदाचार्याणां जीवनवृत्तम् ।

एते महानुभावाः कुशाग्रबुद्धयः सन्तो बाल्यकालिकशिक्षां समाप्य संस्कृताध्ययने प्रवृत्ताः स्वल्पेनैव कालेन काशीराजकीयमध्यमपरीक्षामुत्तीर्य व्याकरणाचार्यपरीक्षायाः कतिचित् खण्डान्यपि समुदतरन् ।

तदनन्तरमायुर्वेदशास्त्रमधिजिगमिषव इतस्ततः प्रारम्भिकीं शिक्षां प्राप्नुवन् । अन्ते च जयपुरमागत्य पूज्यपादानां स्वामिवर्याणां सेवायामायुर्वेदशास्त्रमखिलशोऽधीत्य क्रमशो जयपुरराजकीयशास्त्र्याचार्यपरीक्षे सबहुमानमुदतरन् ।

तदनन्तरमितस्ततो रामदुर्गादिस्थानेषु अध्यापनं कुर्वन्तोऽन्ते भिवानीनगरे श्रीनानुरामविद्यालये प्रधानाध्यापकत्वेन स्थितिमलभन्त । अत्र चाध्यापनकार्यं चिकित्साकार्यञ्च विदधतामेषां त्रयोदशाब्दा व्यतीताः, अधुनापि च तमेव विद्यालयमलंकुर्वन्ति । एतेषां पाठनप्रणाली चिकित्सापद्धतिश्च सुदृढतराऽस्ति । अतश्चैषां सकाशाद् बहवश्छात्रा आयुर्वेदमधीत्य अनेकासां भिन्नभिन्नसंस्थानामुपाध्यायशास्त्र्याचार्यविशारदादिपरीक्षा उत्तीर्य तत्रत्य चिकित्सालये प्रायोगिकशिक्षानैपुण्यसंपादनबलादनेकेषु प्रान्तेषु सगौरवमध्यापनं चिकित्साकर्म च कुर्वते । एतेषामनुकम्पया भिवानीप्रान्तः सुतरामायुर्वेदप्रचारबहुलः समजनि । चिकित्सया चैषामनेके रुग्णाः प्राप्तारोग्यफला एतेषां गुणगौरवं गायन्ति ।

दया-दाक्षिण्य-शुद्धान्तःकरणता-सच्चरित्रतादिषु महाजनोचितेष्वनेकेषु गुणेषु समुज्जृम्भमाणेष्वपि, इदं विशेषतो वरीवृत्यते यदेते महानुभावा बहुकालात् स्वकीयं मनः सांसारिकविषयवासनासंजुष्टात् प्रवृत्तिमार्गान्निवार्यात्मोद्धारपरायणे निवृत्तिमार्गे समयोजयन् ।

एतेषां समग्रः कालः प्रायो भगवदुपासनायामेव व्यत्येति । मध्याह्नोऽन्तरेमेयादेतेभागवतादिपाठेषु पञ्चमहायज्ञादिकरणे च व्यापृता भवन्ति । कृतभोजनाश्च छात्राणां पाठने प्रवृत्तिमादधते । सायमपि च यथानिश्चयं संध्योपासनपाठपूजनादिषु संलग्ना भवन्ति । इत्थमेतेषां सर्वमप्यहो भगवच्चर्चायामात्मोद्धारे च व्ययते । गृहकार्यं चिकित्साकार्यञ्च यथावश्यकं विदधति । किमधिकम्—अस्मिन्कुटिले कराले कलिकाले स्वार्थान्धेषु मानवेपून्मिषत्सु यदेतेषामेतादृशी प्रवृत्तिरवलोक्यते तत एतादृशा महानुभावाः कलिकालेपि तपःसमृद्धा महर्षय एव गणयितुं शक्याः ।

## १०-श्रीमतां वैद्यगङ्गासहायशर्मणां परिचयः ।

एतेषां जन्मकालः १९३४ वैक्रमाब्दे आश्विन शुक्लपक्ष आस्ते । एते निजजन्मनश्चतुर्विंशति-वर्षाणि यावत्कामपि परीक्षामनुत्तीर्यापि हिन्दीव्या-करणादियोग्यतामुत्तमामुपार्जितवन्तः । अनन्तरं चतु-ष्पञ्चवर्षाणि यावदायुर्वेदाध्ययनमितस्ततः कुर्वन्तोऽन्ते श्रीस्वामिमहाभागानां सेवायामागता जयपुरम् ।

जयपुरीय-संस्कृत-पाठशालायां योग्यत्वात् शास्त्रि-कक्षायां प्रविष्टास्तां परीक्षां प्रथमश्रेण्यां समुदतरन् ।

आचार्यपाठ्यक्रमञ्चाधीत्य तत्रानुत्तीर्णतां भजन्तोऽपि धैर्यं न विहाय १९६८ वैक्रमाब्दे स्व-देशं प्रति निवृत्ताः । प्रतिज्ञातवन्तश्च स्वशिष्यणामा-चार्यत्वसम्पादनाय । अनन्तरं फरुखाबादस्थ-रजी-पुरग्रामे स्वमातुलसमीपे वर्षद्वयं चिकित्साक्रममभ्य-स्यन्तोऽन्ते कस्यचित् फतहगढ़नगरस्थस्य श्रेष्ठिनः पुत्रस्यासाध्यप्रायं रोगं निवारयामासुः । तदाग्रहेणैव च फतेहगढ़नगर एव निजमौषधालयमस्थापयन् । तत्रैव च छात्राणां शिक्षादानप्रबन्धमपि कृतवन्तः ।

एवमेकादशवर्षाणि यावद् दर्शितचिकित्सा-कौशला एते तत्रागरिकाणां बाबूपार्टीस्थजनाना-मपि मनांसि देशीयचिकित्सायामाकर्षितवन्तः । फलस्वरूपञ्च डिस्ट्रिक्टबोर्डस्थसदस्यैरुच्चाधिकारि-भिश्चायुर्वेदीयचिकित्सापद्धतिप्रसाराय कोऽपि कार्य-क्रमोऽवधारितः । "हैल्थ मीटिङ्ग" सभायाश्चैते सद-स्याः स्वीकृताः । एतेषामेतद्विषयकः प्रबन्धस्तु गव-र्नमेंटस्योच्चाधिकारिभिरपि स्तुतः । किंच तस्मिन्प्रान्ते द्वादशायुर्वेदीयौषधालया एका चौषधनिर्माणशाला राजन्तेऽद्यावधि ।

चिकित्सया साकमेतेषामध्यापयतामपि अष्टा-दशवर्षाणि व्यतीतानि । चतुस्त्रिंशच्च छात्रा भिन्न-भिन्नासूत्तमोत्तमासु परीक्षासु प्रेषिता अथचोत्तीर्णाः ।

## ११-शास्त्रिठाकुरदत्तवर्मणां संक्षिप्तः परिचयः ।

एते महानुभावाः पञ्चनदप्रान्ते मूलत्राण-(मुलतान) नगरे जन्मालभन्त । इतस्ततो व्या-करणादिशिक्षां गृहीत्वाऽन्ते, आयुर्वेदाध्ययनार्थं जयपुरे श्रीस्वामिमहाभागानां सेवायामागताः ।

अत्र च शास्त्रिपरीक्षामुत्तीर्य श्रीस्वामिनां चि-कित्सालये रोगिदर्शन-भेषजनिर्माणादिप्रायोगिक-पटुताञ्चाधिगत्य स्वस्थानं मूलत्राणं प्रयाताः । तत्र च स्वतन्त्रचिकित्साव्यवसाये संलग्ना अभवन् । यद्यप्येतेषु दिवसेषु वैद्यकप्रचारोऽल्पीयानेवासीत्तथा-प्येते रोगिनैरोग्यसम्पादने समुन्नतिं समुचितां वि-हितवन्तो बहवश्च रुग्णा नीरुजीकृताः । अनन्तरं नैतावता संतुष्य लवपुरे चिकित्सितुमारब्धवन्तः । अत्र च महान्तं चिकित्साप्रसारं कृतवन्तः । किम-धिकम्, सकले लवपुरे एतेषां नामधेयं महतादरेण सुस्पष्टं स्मर्यते । अद्यावधि एते तत्रैव विराजन्ते आयुर्वेदशास्त्रमुज्जीवयन्तः । एभिश्चिकित्साक्षेत्रे सु-विशाला समुन्नतिर्विहिता । संप्रतीमे अखिले पञ्च-नदप्रान्ते वैद्यानां प्रमुखत्वं स्वीकुर्वन्ति । किञ्चाने-कलक्षाणि रूप्यकाणां चिकित्सायां धनिनां सकाशा-दधिगतवन्त इति सुस्पष्टं प्रत्यक्षदर्शकानामग्रे । एषां यशसा विजितान्तःकरणा राजपूताना-पीलीभीत-ब-रेली-काश्मीरादीनां सुदूरवर्तिनामपि नानादेशानां रुग्णाः स्वरुक्शान्त्यै समायान्ति नैरोग्यञ्च लभन्ते । अनेकवारञ्च डाक्तराणां विस्मयोत्पादनी चिकित्सा



चिकित्सकप्रवरवैद्यरत्न—
पं० श्रीठाकुरदत्तायुर्वेदशास्त्री, लाहोर



भिषगाचार्यः जयपुरम्—
वैद्यवर पं० दुर्गाप्रसादशर्मा अयुर्वेदपञ्चाननः



वैद्यवर्य–तपोनिष्ठ–श्रीश्यामलालशर्मा, आयुर्वेदाचार्यः
नानूरामायुर्वेदविद्यालयाध्यापकः ( भिवानी )

विहिता। पटनावास्तव्यस्य डिप्टीकमिश्नरस्य द्राक्तरैरपि त्यक्तस्योपान्त्रप्रदाहस्य ( अँपेंडि साइटिस ) चिकित्साभिः(?)सुफला विहिता । पञ्चनदस्य प्रमुखन्यायाधीशस्य सर शादीलालमहोदयस्य कस्यचित् सम्बन्धिनोऽसाध्यजलोदरमपि चिकित्सितम् । किमधिकमेतेषां चिकित्सया प्रभाविताः सुदूरवर्तिनः कैनाडा-अफ्रीका-इङ्गलैण्डप्रभृतिभ्यो विदेशीया एभ्यो भेषजं क्रीणन्ति ।

चिकित्सायामिवाध्ययनाध्यापनादिशास्त्रीयविचारेप्येषां समुचितोऽधिकारो वरीवर्ति । कतिचिच्छात्रा एभिः शिक्षिताः साम्प्रतं तत्र चिकित्सन्ते । अखिलभारतीय-विद्यापीठस्य, दयानन्द-आयुर्वेदिककालेजस्य, गुरुकुल-कांगड़ी-हरिद्वारस्यापरासाञ्च संस्थानां परीक्षकपदमलङ्कुर्वन्त्येते। पञ्चनद-प्रान्तीय-वैद्यसम्मेलनस्य सभापतिपदं स्थायिमन्त्रिपदमपि च सर्वतो प्रथममेभिरधिगतम् । सिद्धभेषजानामुत्तमोत्तमसंपादनाय तत्र ग्राह्याणां वनस्पतीनां सुग्रहणायैकमुद्यानमपि निजेन व्ययेन निर्मापितमेभिः, यतः प्रत्यग्रा वनस्पतयो ग्रहीतुं शक्यन्ते ।

श्रीमद्भिर्भेषजनिर्माणकार्येऽपि महती समुन्नतिः प्रदर्शिता । अत्र च पाश्चात्त्यानप्यनुकुर्वद्भिर्गुणग्राह्यत्वं प्रकटितम् । अस्मिन् विभागे सौष्ठवसम्पादनाय स्वकीयो ज्येष्ठः पुत्रः पं०भानुदत्तवर्मा इङ्गलैण्डदेशे निर्माणकार्यस्य ग्रीष्मदेशीयचिकित्सापद्धतेश्च शिक्षणाय प्रहितः । असौ च सपादवत्सरं यावत्तत्रोषित्वा मद्रास-कलकत्ता-प्रभृतिष्वपि निवसनेन तद्विषये महतीं व्युत्पत्तिमधिगतवान् । असावपि पितृतुल्यगुण आयुर्वेदकृतश्रमो प्रतिदिनं समुन्नतिमेव भजते स्वकृत्ये । अस्ति च कतीनांचित् संस्थानां परीक्षकः आयुर्वेदमहामण्डलस्य च प्रचारमन्त्री । अल्पवयस्कत्वेऽपि चिकित्साप्रभृतिकार्यं योग्यतया साधयति । नीलमेहस्य चिकित्सासाफल्ये एतेन महोदयेन द्राक्तरा अपि विस्मयमापादिताः ।

## १२—श्रीमतां पं०तुलसीरामशास्त्रिणां परिचयः ।

एते महानुभावाः बुलन्दशहरस्थनैथलग्रामे श्रीमतां पं० विहारीलालशर्मणां गृहे १९३९ वैक्रमाब्दे चैत्रकृष्णचतुर्थ्यां जन्मालभन्त । बाल्यकाले पठने प्रवृत्तानां दौर्भाग्यात् पितृषु स्वर्यातेषु मातुलगृहे व्याकरणादिज्ञानं सम्पाद्यान्ते श्रीचण्डीप्रसादशुक्लानामनुकम्पया व्याकरणे प्रावीण्यमभजत् । अनन्तरमेतैः १९६० वैक्रमाब्दे आयुर्वेदाध्ययनार्थं जयपुरमागत्य श्रीमतां भट्टगङ्गाधरमहानुभावानां गुरुतायां प्रारम्भिकज्ञानं सम्पाद्यान्ते श्रीमतां स्वामिमहाभागानां शिष्यत्वमनुभूय १९६३ वैक्रमाब्दे शास्त्रिपरीक्षोत्तीर्णा ।

अनन्तरमेते अष्टवर्षाणि यावत् स्वग्रामे स्वतन्त्रचिकित्साकार्यं कृतवन्तः । ततः १९७१ वैक्रमाब्दे श्रीसूर्यमल्लश्रेष्ठिना प्रचालिते लक्ष्मणदासचिकित्सालये खुर्जानगरे प्रधानचिकित्सकपदमलङ्कृत्य षोडशवर्षाणि कार्यमकुर्वन् । अन्ते च स्वातन्त्र्यं कामयमाना एते तत्रैव निजमौषधालयं प्राचालयन् । अधुनाऽपि च तत्रैव कार्यं कुर्वते । प्रारम्भत एवैते शास्त्रीयभेषजनिर्माणे दत्तमनसः कूपीपकरसायनादिनिर्माणे लब्धविजया एतत्परिचायकं जयपुरीयनिखिलभारतीयषोडशवैद्यसम्मेलनतः स्वर्णपदकमधिगतवन्तः । चिकित्सानैपुण्यञ्चैषां सुबहु, यत एतेषां

यशःपताका स्वप्रान्ते परितः प्रोड्डीयते। एतेषां पञ्च पुत्राः पुत्री चैका परमेशकृपया समेधन्ते। तत्र ज्येष्ठपुत्रो भीमसेनशर्मा त्वतीव योग्यः साहित्य-शास्त्री, आङ्गलमैट्रिक्युलेटः, आयुर्वेदशास्त्री, आचार्य-पाठ्याध्यायी चास्ते। द्वितीयश्च प्रभुदत्तशर्मा बी. एस. सी.पदवीधारी। अन्येऽपि च पठनोन्नतिक्रमे वर्तमानाः सन्ति।

---

## १३–श्रीमतां राजवैद्यपं०नन्दकिशोरशर्मणामायुर्वेदाचार्याणां संक्षिप्तं जीवनवृत्तम्।

एते श्रीमन्तः खाण्डलविप्रवंशावतंसानां जयपुरे सुप्रतिष्ठितानां दिवं गतानां राजवैद्यश्यामलालभिषक्चूडामणीनां ज्येष्ठपुत्राः जयपुरनगरमलङ्कुर्वन्ति। एते बाल्यकालिकशिक्षां प्राप्यानन्तरं स्वपितॄणामाज्ञया सुविदुषामन्तेवासित्वमाधिगत्य व्याकरणसाहित्यादियोग्यतां सम्यगधिगतवन्तः। अनन्तरं कुलपरम्परागतायाः स्वभवने बोभूयमानाया आयुर्वेदीयचिकित्साया भारं दित्सुभिः स्वपितृभिर्नियोजिता एते जयपुरीयसंस्कृत-विद्यालये आयुर्वेदाध्ययनं प्रारब्धवन्तः। वर्षद्वयेन च भट्टवर-श्रीकृष्णरामात्मजानां गङ्गाधरशर्मणामन्तेवासित्वावसरे आयुर्वेदोपाध्यायपरीक्षामुत्तीर्णवन्तः। अनन्तरमुच्चशिक्षां ग्रहीतुमनसः श्रीमतां पूज्यपादानां स्वामिनां सेवां विदधाना यथानियमं क्रमश आयुर्वेदशास्त्र्याचार्यपरीक्षे सबहुमानमुदतरन्। किञ्च भेषजनिर्माणरोगिदर्शनादिप्रायोगिककार्यमपि श्रीस्वामिनां गृहचिकित्सालये स्वभ्यस्तवन्तः। एवमेते तेष्वेव दिवसेषु शास्त्रिपरीक्षोत्तीर्णा अपि प्रायोगिकशिक्षाकुशलाः सुप्रतिष्ठितविद्वत्समाजे सुबहुसमादृता अभवन्। एतेषां योग्यतामुग्धा महामनसः श्रीमन्तः पं०मदनमोहनमालवीया हिन्दूविश्वविद्यालये वाराणस्यामायुर्वेदाध्यापकत्वेन नियुक्तवन्त एनान्। तत्र चैभिः कियान् कालः शिक्षादाने व्यतिगमितः। अनन्तरं गृहे चिकित्साभारं दित्सुभिः स्वपितृभिरेते तत्स्थानतः पुनराहूताः। ततश्च सुविशाले स्वचिकित्सालय एव रोगिनैरोग्यसम्पादने प्रावीण्यं प्राप्तवन्तः। अथ च १९८१ वैक्रमाब्दे जयपुरीयसंस्कृतपाठशालायामायुर्वेदविभागे द्वितीयाध्यापका अभवन्। तत्र च नववर्षपर्यन्तमध्यापयन्तो बहून् छात्रान् उपाध्याय-परीक्षामुत्तारितवन्तो बहूंश्च शास्त्रिकक्षापाठ्यमध्यापितवन्तः। गतवत्सरे च श्रीस्वामिनामध्यापनकृत्यतो विरामग्रहणानन्तरमेते विशिष्टयोग्यतया तेषां स्थाने आयुर्वेदप्रधानाध्यापका अभवन्। इदानीं तस्मिन्नेव पदे विराजमानाश्चिकित्साकर्मणि वृद्धिमादधते।

एते महानुभावा आधुनिकानां जयपुरीयवैद्यानां मध्ये प्रतिष्ठिता उत्तमकुलीनाः ग्रामत्रयस्य स्वामिनः उच्चनागरिकाणामग्रगण्याश्च सन्ति। चिकित्साप्रसारोऽप्याधिक्येनैषां राज्ञां सामन्तराजानां च गृहेष्वेव वर्तते। तथापि स्वभावतः सरला दयालवोऽनुत्सेकिनो नम्राश्च सन्तीत्येते धन्या मान्या आयुर्वेदस्य शिर उन्नमयितारश्च सन्ति। विशेषत एते पूज्यपादानां श्रीस्वामिनां कृपापात्रतज्ञाः। अहर्निशं श्रीस्वामिनामाज्ञा पवित्रयति हृदयमेषाम्। रोगिदर्शनादिकर्मणि बहुत्र श्रीस्वामिभिः सह भ्रमणावसरो लभ्यत एभिः। सामयिकीं गुणवैशेष्यापादनीं शिक्षामपि प्रतिदिनं यथावसरं श्रीस्वामिन

एभ्यो वितरन्ति । एवमेषामुपरि श्रीस्वामिनां पूर्णः स्नेह आस्ते। एतेऽपि भक्त्यतिशयेन सेवन्ते श्रीस्वामिनः । तेषामन्तरङ्गेषु कार्येष्वपि प्रवन्धका भवन्तीत्यन्तरङ्गाः शिष्याः श्रीस्वामिनामिमे ।

## १४—श्रीमतां पं० मुकुन्ददेवशर्मभिषग्रत्नानां जीवनवृत्तम् ।

एते प्रारम्भिकीं व्याकरणसाहित्यादियोग्यतां सम्पाद्यान्ते आयुर्वेदमध्यतुं कलिकातां गतास्तत्र च श्रीमतां कविराजश्यामादासभिषक्शिरोमणीनामन्ते उषित्वा यथामति अध्ययनं कृतवन्तोऽभ्यस्तवन्तश्च प्रायोगिकशिक्षाम् । कविराजमहोदयाश्च एषां सेवया प्रसन्ना योग्यतासूचिकां भिषग्रत्नेतिपदवीं प्रदत्तवन्त एभ्यः । अनन्तरं जयपुरे श्रीस्वामिनां सेवायामागताः किञ्चित्कालमध्ययनं कृतवन्तस्ततः श्रीस्वामिनां प्रेरणया स्थानीये श्रीधन्वन्तरि-औषधालये द्वितीयचिकित्सकपदं स्वीकृत्य कार्यं कुर्वन्तस्त्रयोदशाब्दान् व्यतिगमितवन्तोऽधुनाऽपि च तत्र निर्माणशालाया आरोग्यशालायाश्च प्रधानवैद्यत्वं भजन्ते।

जनसमुदाये चैषां चिकित्साप्रसारः प्रशंसनीय आस्ते । जनसाधारणकार्येष्वपि एते महान्तं सहयोगं ददति । साम्प्रतं स्थानीयहिन्दू-अनाथाश्रमसंस्थाया अप्येते मन्त्रिणः सन्ति ।

## १५—श्रीमतां मङ्गलदासस्वामिनां संक्षिप्तः परिचयः ।

इमे महानुभावा निरञ्जनीयसम्प्रदायिनो वीकानेरवास्तव्याः सन्ति । बाल्यकालिक-शिक्षालब्ध्यनन्तरमेते जयपुरमागताः संस्कृतपाठशालायामायुर्वेदमध्येतुं प्रविश्य श्रीस्वामिनां साविधे शास्त्रिकक्षान्तामायुर्वेदस्योत्तमां शिक्षामग्रहीषुः । अनन्तरं लोकसेवापरचित्ततया सार्वजनिककार्येषु भागमभजन् । स्थानीयस्य श्रीधन्वन्तरि-औषधालयस्य स्थापनेऽप्येषां महान् उत्साहपूर्णः कार्यकलापः समजनिष्ट । कियत्सु दिवसेषु गतेषु च श्रीस्वामिनां प्रेरणया यदा सर्वैरपि दादूपथस्वामिभिः स्वेषां शिष्याणां शिक्षणायैकः "दादूमहाविद्यालयः" स्थापितस्तदवसरे एषां भूयान् परिश्रम उत्साहपूर्णश्च कार्यमासीत् । तद् दृष्ट्वा च दादूमहाविद्यालय-प्रबन्धकारिसमित्या इमे दादूमहाविद्यालयस्य प्रबन्धकत्वेन नियोजिताः । इमेऽपि स्वयं सेवैकलक्ष्यास्तत्समित्या निर्णयरूपं विद्यालयप्रवन्धं सकलमपि विना वेतनेनैव स्वीकृतवन्तः । तदारभ्य च दैनंदिनं प्रबन्धसौष्ठमावदधाना विद्यालयस्थच्छात्राणामध्ययनभोजनादिव्यवस्थामत्युत्तमां विदधाना अधुनाऽपि तत्रैव विराजन्ते ।

किमाधिकम्—एषां प्रवन्धसौष्ठवेन विद्यालयच्छात्राणां परीक्षोत्तरणसंख्या प्रतिवत्सरमुत्तमोत्तमैव संजायते । अत्यल्पसंख्याकाश्छात्रा अनुत्तीर्णा भवन्ति, किन्तु भूयस्तरां प्रथमद्वितीयश्रेणावेवोत्तरन्ति परीक्षाम् ।

एषां जीवनवृत्तिस्तु एषां गुणगरिम्णा प्रह्वहृदयेन केनचिद् बीकानेरनगरस्थश्रेष्ठिना, विना याच्ञामेव बहुनादरेण संप्रेष्यते प्रतिमासम् । एषाञ्चोदारता इयती यत्तद्वृत्तितोऽपि स्वकीयव्ययं ह्रसयित्वा सामयिकीमार्थिकसहायतामपि इमे विद्यालयाय वितरन्ति ।

एभिः वैद्यकव्यवसायं सर्वथा त्यक्त्वा देशजातिसेवैव स्वकीयजीवनलक्ष्यं स्वीकृतम् । किञ्च विद्यालये वैद्यकशिक्षामपि इमे छात्रेभ्यो ददति । एवमेषां स्वार्थत्यागः केषां न मोदमादध्यात् ।

## १६–श्रीमतां पं०श्रीनारायणशास्त्रिणां परिचयः ।

इमे चोमू( जयपुर )नगरवास्तव्याः खांडल-ब्राह्मणकुलं निजजन्मनाऽलङ्कुर्वन्ति । प्रारम्भिक-शिक्षाग्रहणानन्तरमेते जयपुरीय-संस्कृत-पाठशाला-यामायुर्वेदविभागे श्रीस्वामिनां सकाशेऽधीयानाः शास्त्रिपरीक्षामुदतरन् । किञ्च श्रीस्वामिनां गृहचिकित्सालय एव तिष्ठन्तस्तत्रत्यं कार्यजातं श्रीस्वामिनां समक्षं सम्यगभ्यस्तवन्तः ।

तदनन्तरमेते श्रीस्वामिनामाज्ञया बीकानेर-नगरस्थे 'मोहताआयुर्वेदिक-औषधालये' चिकित्सका अभवन् । तत्र च सुमहती समुन्नतिर्विहिता एभिः, यतः स्वल्पेनैव कालेन प्रचुरवेतनं सुसम्मानञ्च लब्धवन्त इमे । ततः कारणवशादेभिः स्वीयः स्वतन्त्र औषधालयस्तत्रैव स्थापितो यस्य नाम "लक्ष्मी-निधि-औषधालय" आस्ते । अत्रापि चिकित्सायां प्रतिदिनं पीयूषपाणिता सुघुष्टा नागरिकेषु, परितो-षिकरूपं बहु धनं चैभिरुपार्जितम् । किमधिकम्, स्वल्पेनैव समयेनाश्चर्यावहो धनसञ्चयः समजनिष्ट ।

अधुना चैषां सुविशाल औषधालयश्चमत्करोति जनान् । बीकानेरनगरे चैषां नाम वैद्यानामग्रगण्यमास्ते । एते उत्साहसम्पन्ना कार्यकरणदक्षाः कुशलचिकित्सकाः सन्ति ।

### उपसंहारः ।

एवमयं कतीनांचिदेव वैद्यबन्धूनां परिचयो निबद्धः । इदं पुनर्विशेषतोऽवधेयं श्रीमद्भिर्यदिदं श्रीस्वामिनां शिष्यसाम्राज्यं भवतां पुर उपस्थापितं तदतीव स्वल्पमास्ते । अनुक्तमप्यूहतां तत्र भवतां पण्डितप्रवराणां कृते दिङ्मात्रमेव, यतो हि उपरिलिखितनामधेया अनुल्लिखितनामधेयाश्च सर्वेऽपि श्रीस्वामिनां शिष्यप्रशिष्याः समयोचितां महतीमुन्नतिं विहितवन्तो विदधति च । एवं श्रीस्वामिनां शिष्यसंख्या तेषां शिष्याणां शिष्यसंख्या च यदि संयोज्येत तदा सहस्रसंख्यामप्यतिशेते । न केवलमिदमेव, किन्तु दिक्षु दृष्टिर्दीयेत चेत्प्रतिप्रान्तं बाहुल्येन श्रीस्वामिनां शिष्या एव चिकित्सापाटवेन जनां श्चमत्कुर्वन्तोऽवलोक्येरन् ।

अतश्चेदं वक्तुं युज्यत एव—

न सा दिङ् न स देशोऽपि न च तन्नगरं क्वचित् ।<br>
यत्र श्रीस्वामिपादानां शिष्यैर्नैव विजृम्भ्यते ॥

---



वैद्यवर्य-श्रीनारायणशर्मा आयुर्वेदशास्त्री ( वीकानेर )।

# चिकित्सकचूडामणिविद्वद्धौरेयकविराज-
# श्रीश्यामादासमहोदयाः

लेखकः—साहित्यशास्त्रिसोमदेवशर्मा आयुर्वेदाचार्यः ( इन मेडिसन एण्ड सर्जरी फाइनल )
आयुर्वेदकालिज—हिन्दूविश्वविद्यालयः—काशी ।]



आयुर्वेद-सुतत्त्वपुण्यसलिलां गङ्गाधरात्स्यन्दितां
गङ्गां जह्नु-परेशनाथगुरुतो लुप्ताञ्च योऽवाहयत् ।
आर्त्तानामुपतापवारणविधौ धन्वन्तरिश्च स्मृतः
श्यामादास उदारधीर्जयति स प्रेष्ठोऽधुना भारते ॥

पुण्यचरिताः श्रीश्यामादासकविराजमहोदयाः साक्षाच्चरकमहर्षीणामिवावतीर्णानां श्रीधर्मदास-कविराजमहोदयानां पितृव्यपुत्राः १८६५ ईशवीये संवत्सरे बर्दवानान्तर्गतपूर्वस्थलीसमीपस्थ-चूपीपल्ल्यां जनिमलभन्त । स्वग्रामे एव बाल्यकालिकशिक्षानन्तरं देववाण्यां प्रौढिं लब्ध्वा काश्यां साक्षाद्गङ्गाधरसादृश्यं दधतां कविराजश्रीगङ्गाधररायकविरत्नमहोदयानां प्रधानान्तेवासिभ्यो विद्वत्पुङ्गवेभ्यः श्रीपरेशनाथकविराजमहोदयेभ्योऽष्टाङ्गमायुर्वेदशास्त्रं सचिकित्सितमधिगत्य नैपुण्याति-शयमवाप्नुवन् । ततो वाराणसीतः कलिकातां परावृत्य चिकित्साकार्यं प्रारभन्त । स्वल्पकालेनैव च निजप्रतिभासाहाय्येन चिकित्सामुखेनायुर्वेदगौरवं भूतले प्रसार्य निजयशोदुन्दुभिघोषं लोकानां श्रवणातिथिमकार्षुः । चिकित्सानैपुण्यञ्चैतेषामेतेनैव ज्ञायते यत्सुगृहीतनामधेया राष्ट्रीयनेतारः पं० मोतीलालनेहरूशिवप्रसादगुप्तमहोदयाश्च येषामायुर्वेदचिकित्सोपरि विश्वासलेशोऽपि नासीत्, स्वचि-कित्सार्थमेतेषां सविधे समुपातिष्ठन्त । गुणग्राहकैः श्रीपं०मोतीलालनेहरूमहोदयैस्त्विमे स्वज्येष्ठभ्रा-तृभिः श्रीधर्मदासकविराजमहोदयैः साकमाहूता अपि ।

पाश्चात्यचिकित्साविलासस्थल्यां कलिकातानगर्यां प्रसिद्धतमैरपि डाक्टरमहोदयैः ( Civil-Surgeon ) यत्र रोगिवीक्षणे प्रतिसमयं द्वात्रिंशद्रूप्यकाणि प्राप्यन्ते, तत्रैतेषां चरणेषु चतुः-षष्टिसंख्यकानि सहर्षमुपायनीक्रियन्ते । न केवलमेभिश्चिकित्साकर्मणैव लोकोऽयमुपकृतोऽपि तु पुरातनाग्निवेशप्रभृतिप्रदर्शितपन्थानमुररीकृत्याहरहः शिष्यवर्गोऽप्यध्याप्यते । परमोदाराः शिष्यवत्सलाः सरलस्वभावा इमे महानुभावाः श्री पं०मोतीलालनेहरूमहोदयेन समाहूताः प्रयागयात्रायां मध्ये काशीहिन्दूविश्वविद्यालयीयायुर्वेदविभागमपि स्वदर्शनेन सनाथीकृतवन्तः । एतदागमनप्र मुदितैश्छा

त्रैरभिनन्दिता इमे स्वोपदेशसुधाधारया छात्राणामध्यापकानां च हृत्कमलानि व्यकासयन् शतमुद्राश्च छात्रेभ्यः प्राददुः प्रसादरूपेण। अखिलभारतवर्षीयायुर्वेदसम्मेलनेन सभापतिपदमलङ्कर्तुं नैकशः प्रार्थ्यमाना अपि तत्पदमनङ्गीकृत्य लोके समाद्रियमाणां प्रतिष्ठामत्याक्षुरित्यहो एतेषां प्रतिष्ठामरीचिकात्यागः। निजसञ्चितपुण्यप्रतापैः सन्तानकल्पतरुरपि श्रीविमलानन्दतर्कतीर्थकविराजमहोदयरूपेण कलिकातापुरीं स्वयशोगन्धेन प्रसादयतीति किं बहुना—

संसारे किल ते भवन्ति विरला ये नाम धन्या नरा<br>
हित्वा कीर्तिमरीचिकां प्रमुदिता ध्यायन्ति विद्योदयम्।<br>
तेष्वादेशमनुव्रजन्नियमतः प्राचां मुनीनां सदा<br>
श्यामादास इनोपमश्च भिषजां मध्येऽद्य विद्योतते॥<br>
भ्राता यस्य निजैर्गुणैरनुपमैः श्रीधर्मदासो भिषक्—<br>
ख्यातिं भारतभूतले ह्यभिनवां प्राप्तश्च विद्वद्गणे।<br>
आयुर्वेदमहोदधेः समधिकं कृत्वा पुनर्मन्थनं<br>
रत्नोद्धारपरायणो विजयते भ्रात्रा युतोऽसौ सदा॥

---

# अभिनन्दनानि ।

साहित्यजगत्यप्यभिनन्दनस्य प्रकाशनाय संस्कृतरत्नाकरस्य विशेषाङ्कप्रकाशनं यदा प्रस्तुतम्, तदास्य वृत्तमुपलभ्य बहुभिर्भारतीयायुर्वेदविन्मूर्धन्यैः विद्वद्भिश्च स्वं स्वमभिनन्दनं विलिख्यात्र प्रेषितम् । तेष्वभिनन्दनेषु कतिचिदिह प्रकाश्यन्ते—

( महामहाध्यापक-कविभूषण-कविराजशिरोमणि-गुणार्णव-कविराजचक्रवर्तिश्रीश्यामादासवाचस्पति-सरस्वती-सार्वभौमकृतम् )

आयुर्वेदरत्नाकरायमाणलोकोत्तरत्यागिपरममाननीयश्रीमल्लक्ष्मीरामस्वामिमहोदयानामभिनन्दनम् ।

आयुर्वेदविदां वरः सुकृतिनामग्रेसरो नैष्ठिको
"लक्ष्मीराम" इति स्वनामविदितः स्वामीत्युपाख्यः श्रिया ।
आयुस्तन्त्रगुरुः प्रसिद्धयशसामग्रं गतो भारते
संन्यासाहितचित्तवृत्तिरधुना सोऽयं जयत्यात्मगः ॥

जयपुरकृतवासः सौम्यमूर्तिः सुवैद्यो
विदितनिखिलशास्त्राध्यापकः प्रीतशिष्यः ।
चरितचरकवृत्तिस्तत्र निष्णातचित्तो
जयतु सफलजन्मा निःस्पृहस्त्यक्तभोगः ॥

प्राणाचार्यवरेण तेन बहवः प्राणाः प्रदत्ता नृणां
निःस्वार्थं परदुःखमोचनधिया क्रन्दन्ति ते साम्प्रतम् ।
आयुर्ज्ञानपिपासवः कति पुना रोरुद्यमानाश्चिरं
वर्तन्तेऽत्र सदा हताशमनसः शिष्याः सुदुःखान्विताः ॥

समुन्निनीषा परमेश्वरस्य
जाता परा त्वां प्रति चिन्तयामि ।
समुद्धरन्ति स्वकुलं शृणोमि
संन्यासिनस्त्वत्कुलजा वयं च ॥

स्तब्धो वाचां प्रसारः श्रुतिसुखजनको मानसं स्तब्धमेव—
मात्मस्थं निर्विकल्पं परमसुखरतं शान्तवारान्निधिर्वा ।

तेजोगर्भो विवस्वानिव भवसि पुनर्नित्यहर्षाभिभूतो
धन्यस्त्वं पूतकर्मा जितसकलरिपुर्ज्ञानविज्ञानतृप्तः ॥
प्रलयजलधिमग्नः साम्प्रतं नः स वेद-
स्त्वमपि चलसि मुक्त्यै प्रोद्धरेद्वा क एतम् ।
अवतरणमपीत्थं प्रार्थयामः सदा ते
धृतचरकसुमूर्तिः प्रोद्धर त्वं सुवेदम् ॥
संसारभारैः परिपीड्यमाना आसक्तिमग्नाश्च गृहाश्रमस्थाः ।
भिषग्वरेण्यं च तपस्विवर्यं श्लोकैर्वयं त्वामभिनन्दयामः ॥

---

निखिलभारतीयायुर्वेदमहासम्मेलन-महामण्डल-विद्यापीठादिमुकुटमणीनाम्, अनेकनृपतिसंपूजित-पादारविन्दानाम्, सकलविद्वज्जनमनोमोहनमहनीयनानावदनानाम्, आयुर्वेदपाथोधिपारायणपटीयसां, पण्डितवर्य्यश्रीलक्ष्मीरामस्वामिमहाभागानाम् अवसरग्रहणावसरे

## अभिनन्दनम् ।

( महामहोपाध्यायश्रीगणनाथसेनकविराजेन विद्यासागरसरस्वत्यादिपदवीकेन सप्रश्रयं सादरं साश्लेषमर्पितम् । )

सुहृद्वर,

" न विद्यया न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः " ।
ततो भूयोऽमृतभाजो जुषन्ति नात्मार्थं वा नापि कामार्थमेतत् ।
श्रुत्यर्थमित्थमिह किं सुविमृश्य चित्ते
वित्ते यशस्यपि सुखे च निरस्ततृष्णः ।
सर्वां सुधां करगतां प्रवितीर्य्य भूयो
निःसङ्गमङ्ग यतसे परमामृताय ॥
रोगार्तोद्धरणाप्तवित्तविभवत्यागप्रदीप्तप्रभः
सच्छिष्यार्पितशास्त्रतत्त्वनिवहः प्रोद्यत्प्रबोधोज्ज्वलः ।
अद्वैतामृतपानतृप्तिमाधियन् विश्राणयन् सम्पदो
दृष्टिं कस्य न धीरधुर्य्य कुरुषे त्वं विस्मयाश्रुप्लुताम् ॥
आबाल्यब्रह्मचर्यव्रतनिशितधिया सर्वशास्त्रार्थदर्शी
सर्वायुर्वेदविद्याजलधिविमथनोपात्तसर्वस्वरत्नः ।

नानारोगार्तलोकोद्धरणसुनिपुणः सर्वराजन्यपूज्य-
स्त्वं लक्ष्मीराम ! लक्ष्मीं जहदपि विजयी रामवद् रम्यमूर्तिः ॥

तथापीदमभ्यर्थये–

मा विस्मार्षीस्तपसि निरतो ग्रन्थरत्नानि यानि
प्राचां तन्त्रेष्वतिपरिचितान्यद्य नष्टानि कालात् ।
तान्युद्धर्तुं कुरु परिकरं व्यर्थयत्नो यदि स्याः,
नूत्नै रत्नैः पुनरपि पुरं वैद्यकं मण्डयेथाः ॥

---

(कविराज श्रीप्रतापसिंहः निखिलभारतवर्षीयायुर्वेदसंमेलनसभापतिः काशीहिन्दूविश्वविद्यालयाध्यापकः)

अथात्रापारे संसारपारावारे के नाम न जायन्ते ? जाता जनिष्यमाणाश्च त एव धन्या जाताश्च, यैर्जातैश्चराचरगुरोर्निर्माणादर्शभूतैर्जगति किञ्चिल्लोकहिताय जायते । जगन्ति निर्माय तद्वृत्तिञ्च जगतोऽनवरतं नानाविधं भव्यं विदधतो नारायणस्य धन्वन्तरिरूपेणावतीर्णस्याष्टाङ्गायुर्वेदमुपदिश्य जगन्ति रक्षत उपकारपारम्पर्यस्य स्तवने को नाम ईष्टे ? तस्यैवांशभूता इमे महात्मानः, ये अहेतुकं जन्मनः प्रधानं लक्ष्यं परोपकारं मत्वा निरन्तरं तत्र व्याप्रियमाणा आयासखेदमविभ्रतो मोदमाना विजयन्ते ।

अद्य सुगृहीतनामधेयस्य तत्रभवतः पण्डितलक्ष्मीरामस्वामिन आयुर्वेदमार्तण्डस्य कश्चित् परिचयो लोकहितायोपन्यस्यते । यतः सतां चरित्रकीर्तनं महते श्रेयसे कल्पते । इमे खलु बालब्रह्मचारिणोऽधीत्याखिलागमरहस्यानि अष्टाङ्गायुर्वेदपरिबृंहितानि, अध्याप्य परःसहस्रं शिष्यान् दयालून् भिषक्कर्मकुशलान् आयुर्वेदजगद्दिग्गजानिव सम्पाद्य सम्पादिताशेषसत्कृतय इदानीं परामुत्कर्षभूमिमधितिष्ठन्ति । तत्र तत्रावसरेषु तेषु तेषु विषयेषु तदा तदा तैस्तैरुपकारैरायुर्वेदमुपकुर्वतोऽनन्तस्येवानन्तचरितस्य को नामोपकृतिं गणयितुं प्रभवति ? तथापि तत्र किञ्चिद् दिग्दर्शननयेनोदाह्रियते । यथा नातिचिरमेव मद्रासगवर्नमेंन्ट-सम्पादितकमीशनस्य पुरतः स्वसाक्ष्ये निर्भीकं साक्ष्यं कुर्वद्भिर्यदायुर्वेदोद्धाराय प्रयतितं तत्समेषामनुकरणीयम् । तत्साक्ष्यञ्च 'कमीशनरिपोर्ट'नामकपुस्तके द्रष्टव्यम् ।

तथेदानीमेव'त्यागाय संभृतार्थाना'मिति सतां सिद्धान्तभूतरहस्यमुपदर्शयद्भिः परोपकारगृहीतजन्मभिश्चिरसम्भृतं धनराशिं लक्षाधिकं निर्विशेषमुपकृतये उत्सृजद्भिस्तथाचरितं येन प्राचीनत्यागस्मृतिः पुनरुज्जीवितैवेति दीप्यते । अहो विश्वजितेवानेन त्यागेन के नाम न जिता लोकाः । एते च इदानीं बृहदायुर्वेदीयाभिधाननिर्माणाय कृतमतयः तदर्थं मीमांसन्त इति श्रूयते शिष्टानां परम्परया । एषां शिष्या अपि श्रद्धया विद्यया त्यागेनोपकुर्वन्तो गुरूननुकुर्वाणास्तत्र तत्र स्वयशोराशिविकासितदिगन्तराला उपलभ्यन्ते । नात्र चित्रं किञ्चिद् वस्तुविशेषस्वभाव एव एषः । यदुदाहरन्ति–

"अयः स्पर्शे लग्नं सपदि लभते हेमपदवीम्
यथा रथ्यापाथः शुचि भवति गङ्गौघमिलितम् ॥" इति

इमेऽद्यापि जयपुरराजकीयमहाविद्यालये आयुर्वेदीयविभागे कुलपतिपदमलङ्कुर्वाणा उपकुर्वन्ति। एषां पाठनशैलीं, निर्व्याजं चिकित्सिताङ्गरहस्योपदेशं, शिष्यभावज्ञतां, तेषु च सानुकम्पं सुतानिर्विशेषस्नेहं तत्रतत्रोदाहरन्ति गुणैकपक्षपातिनो धीराः। एतेषां विषये एतेनाल्पेन निबन्धेन किं नामोपस्थाप्येत ? येषामेकैकगुणवर्णनेन काव्यानि निर्मातुं शक्यन्ते। अतः समयान्तरे बहुविवक्षुरिदानीमेतावदाशासान उपसंहरामि। यत्—

आयुर्वेदविदां शिरोमणिरथायुर्वेदसंस्कारको
लक्ष्मीरामपदाभिधेययतिराड् वन्द्यो महाभूभुजाम्।
कारुण्योदधिरार्यपूतचरितो मान्यश्च संख्यावतां
लक्ष्म्या दूरमुपास्थितो विजयतां रोगेशदर्पापहा॥
येनामुना वसुमती गमिता सगर्वा
गीर्वाणगीतगरिमा गिरिशाङ्घ्रिसेवी।
गोष्ठीगुरुर्हि विदुषां यजुषां वपुष्मा-
नायुष्मतां स भवताद्भगवान् वरेण्यः॥

---

## श्रीलक्ष्मीरामाष्टकम्॥

सद्वंशप्रभवं सुसद्ग्रहगणं सद्बाललीलारतं,
सच्छिष्यं सदुपासकं सदसतोः सम्यक्कया वेदिनम्।
सच्छास्त्राध्ययनं च सद्व्रतपरं सन्नीतिसंचारकं
लक्ष्मीराममुपास्महे नववयःसंशोभितेन्दुप्रभम्॥ १॥
सम्यग्व्याकरणं पठन्तममराख्यानं रटन्तं हठात्
सत्काव्यान्यनुसेवमानमथ सत्तर्केऽप्यतर्कप्रभम्।
साहित्यं समुपासमानमसमं छन्दःसु वेदान्तिनं
लक्ष्मीराममुपास्महे शमपरं तारुण्यमप्याश्रितम्॥ २॥
श्रीकृष्णं गुरुमाश्रितं च ददतं सम्यङ्निदाने मनो
ग्रन्थं वाग्भटमापिबन्तमवगच्छन्तं च रोगान् बहून्।
योगानामवबोधनाय दधतं सच्चक्रदत्ताशयं
लक्ष्मीराममुपास्महे हि भिषजं वैद्यागमोन्मेषिणम्॥ ३॥
आत्रेयीमथ सौश्रुतीं च महतीं तां संहितां धारयन्
ख्यातां शार्ङ्गधरीं पुनः सुमधुराद् घोषात्समुच्चारयन्।

नाडीज्ञानमुपाश्रयंश्च गतवान् यः सुप्रतिष्ठां हि तं
　　लक्ष्मीराममुपास्महे सुभिषजां मध्ये वरत्वं गतम् ॥ ४ ॥

रोगाणां दलनाय दीक्षितमथो भोगेष्वनास्थावहं
　　सूक्ष्मात्सूक्ष्मतरं यथार्थममलं ज्ञानं वहन्तं हृदि ।
सद्भैषज्यविधानयोजनरुजाघातान् चरन्तं त्वरा—
　　ल्लक्ष्मीराममुपास्महे हि भिषगाचार्यं चिदात्मास्थितम् ॥५॥

आयुर्वेदचिकित्सितक्रमपरान् दुर्बोधभावानहो
　　ग्रन्थान् पाठयितुं प्रधानपदवीं सत्पाठकानां गतम् ।
शिष्यान् शिक्षणकौशलेन महतो वैद्यान् विधायोच्छ्रितं
　　लक्ष्मीराममुपास्महे गुरुवरं वैद्येन्द्रचूडामणिम् ॥ ६ ॥

भूपालैर्नतमस्तकैरतितरां सत्कारसंमन्त्रितं
　　सद्वादैरनुनीय पादकमले स्वर्णश्रियाऽलङ्कृतम् ।
निष्कामोपगतैस्तथा बहुधनैः कोपं स्वकं बिभ्रतं
　　लक्ष्मीराममुपास्महे वसुजले पद्मव्रतं संश्रितम् ॥ ७ ॥

संपाठ्याथ समर्ज्य कीर्तिमचलां संचित्य सत्संपदं
　　विश्रामव्रतमाश्रितं च नितरां निष्कामतामागतम् ।
सत्संस्थासु नियोज्य भूरि वसु तन्निःसङ्गभावस्थितं
　　लक्ष्मीराममुपास्महे यतिवरं साधुं चतुर्थाश्रमम् ॥ ८ ॥

सूर्यनारायणशर्मा आचार्यः ( संपादकः )

---

श्रीमद्विद्वद्वर्य-वैष्णवशिरोमणि-रतलामराजगुरु-स्वामिश्रीरङ्गाचार्यमहोदयैः प्रणीता प्रशस्तिः ।

श्रीलक्ष्मीरामसूरिः स जयतु भिषगाचार्यवर्यो दयालुः
　　स्वामी यो नः समेषां परिहरति रुजः संस्मृतोऽह्नाय तिस्रः ।
छात्राणां छत्ररूपश्छलमलरहितः साधुसिन्धोः सुधांशुः,
　　औदार्ये चाऽनुकार्यो वसुचयनपरैस्त्यक्तनिःशेषकोशः ॥

अहो चतुर्बाहुधरोऽपि देवो धन्वन्तरी रुग्णजनावनाय ।
धृत्वा द्विबाहू नरदेहमागात् किमत्र कारुण्यवशंवदोयम् ॥

किं वा दयालू दययाभिकृष्टौ नासत्यदेवौ समुपेत्य भूमिम् ।
आत्मानमाच्छाद्य मनुष्यतन्वा सौलभ्यमाविष्कुरुतो जनानाम् ॥
बृहत्त्रयी यै रचिता त्रयस्ते महर्षयः कारुणिकाः किमेते ।
तन्वैकयास्मान् समुपस्थिता यद् दृष्ट्या विरोगाः कथमन्यथा स्मः ॥
यद्वोपवेदाश्चतुरो विधाता साङ्गान् सभाष्यान्निगमागमांश्च ।
आचार्यवर्येण जगद्धिताय विना श्रमं प्राप्यतमानकार्षीत् ॥
चारित्रौदार्यसाम्यं यमनियमदमा ज्ञानविज्ञानसत्यं
सौशील्यं सन्मतित्वं सकलजननुता साधुता शान्तियुक्ता ।
पाण्डित्यं कायवाग्घृद्रुतमथ सकलान् सद्गुणानेवमादीन्
आस्तेऽतीत्याऽस्य चित्ते प्रकृतिपरिणतं दीनवात्सल्यमुच्चैः ॥
आयुर्वेदैकमार्तण्डः सद्वैद्यानां शिरोमणिः ।
आचार्यो भिषजां जीयात् श्रीलक्ष्मीरामकोविदः ॥
श्रीमद्रत्नपुरेन्द्रपूज्यभगवच्छ्रीवेणुगोपालक-
प्राप्यप्रापकपादपल्लवरजः पूतान्तरात्मा पुनः ।
श्रीमद्वादिभयङ्करान्वयदयापात्रान्ववायोद्भवो-
रङ्गार्यो व्यरचत् तदीयसुगुणाकृष्टोऽष्टकं सादरम् ॥

---

## अभिनन्दनम् ।

( अभिनन्दकः—श्रीरामस्वामी, प्रतापगढ़ [ अलवर स्टेट ] )

स्वामिन् ! कथं वा वद ते वदान्यतां ब्रवीतु वाङ् मेऽतिकृशा महीयसीम् ।
मन्ये जनानामुपकारहेतवे धाता भवन्तं विदधे भिषग्वरम् ॥
निष्कामकर्मैव हि सत्त्वशुद्धेर्निदानमाहुस्तत आत्मबोधः ।
सकामता कर्मसु दुःखराशेर्बीजन्तु संसारपरम्परायाः ॥
इतीदमग्र्यं वचनं हृदि स्थितं सदाऽभिसन्धाय नितान्तमादरात् ।
कृतिं विधातुं ननु कामवर्जितां चिकित्सिते धीर्भवता किमादृता ॥
कर्मक्षेत्रेऽतिगहने नैष्कर्म्यं दुर्लभं यतः ।
ततः परहितायैव कर्म कुर्याद् विमुक्तये ॥
धन्यः स एव पुरुषो यस्य वित्तं तथा मनः ।
शरीरं चोपकृतये परेषां विनियुज्यते ॥

---

# आयुर्वेदस्य वेदत्वम्

लेखकः-विद्यावाचस्पतिः श्रीशालिग्रामशास्त्री "साहित्याचार्यः
विद्याभूषणः वैद्यभूषणः कविराजः" लखनऊ ।

**आयुर्वेदस्य वेदत्वमधिकृत्य विचारणा प्रस्तूयते
प्रसङ्गाच किञ्चिदन्यद्विविच्यते ।**



म्प्रति संसारे समुपलभ्यमानेषु निखिलेष्वपि पुस्तकेषु वेदानां प्राचीनतमत्वेन न कस्यापि विप्रतिपत्तिः । आर्याणान्तु "वेदोऽखिलो धर्ममूलम्" इति समयः । प्रत्यक्षशतैरप्यनुमानसहस्रैरपि चाऽशक्याधिगममैहलौकिकं पारलौकिकं च वस्तुतत्त्वं केवलाद् वेदादेव शक्यमधिगन्तुमिति हि आर्या अभिमन्वते । अत एव च स्मर्यते, 'वेदाद् धर्मो हि निर्बभौ' "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" इत्यादि । आगमो हि चरमं प्रमाणानाम् । प्रत्यक्षानुमाने चाऽस्य विषये क्षीणचक्षुषी इव मन्दायेते। अस्याऽऽस्पदे विरोपितपदे ते प्रांशुलभ्ये फले वामनायेते। अत एवोच्यते-"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः । स साधुभिर्वहिष्कार्यो नास्तिको वेदनिन्दकः" इति, अनधिकारचेष्टानिरोधमात्रे चाऽस्य तात्पर्यम् । आगममात्रगम्ये ह्यर्थे नेतरप्रमाणाधिकार इति । धर्मे च श्रुतेरेव प्रामाण्यमधिगम्यते । यदुक्तम्—

" वेदोऽखिलो धर्ममूलमिति "

सोऽयं धर्मो यज्ञादिरूपो वा आत्मनिष्ठो वा अन्तःकरणनिष्ठो वेत्यादिकन्तु नात्रविचारापेक्षम् । यद्वा तद्वा भवतु, सर्वाणि पुनरमूनि मतानि धर्मस्य अभ्युदयसाधनतां नातिवर्तन्ते, ऐहिको वा पारलौकिको वाऽर्थप्राप्तिकामप्राप्तिरूपोऽभ्युदयो धर्मादेवेति निष्कर्षः । निःश्रेयसप्राप्तिस्तु आत्मज्ञानादेव "ऋते ज्ञानान्न मुक्तिरिति श्रुतेः" परम्परया तु धर्मोऽप्यत्र कारणमित्यन्यदेतत् ।

तदेवम्, अभ्युदयनिःश्रेयसयोः स्वरूपवर्णने, तत्प्राप्त्युपायवर्णने, तत्प्रत्यूहव्यूहपरिहारवर्णने च सकलोऽपि वेदः परिसमाप्यते । प्रत्यूहास्तु बलहानिप्रभृतयः । बलं पुनः शारीरं मानसं च । यदाह मुण्डकश्रुतिः "नायमात्मा बलहीनेन लभ्यो न च प्रमादात्" इति । प्रमादो हि मानसो रोगो वा मानसिकं दुर्बलत्वं वा । तदेवं शारीरी मानसी च बलहानिर्वेदबोधितविधीनामनुष्ठाने प्रत्यवायभूता, न खलु बलहीनेन वपुषा मनसा वा कथमपि शक्यो धर्मोऽनुष्ठातुम् । बलहानिश्चेयं रोगेभ्य एव, यदुक्तम् भगवता आत्रेयेण पुनर्वसुना—

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्याऽपहर्तारः श्रेयसो जीवितस्य च ॥"

रोगाः, न केवलं धर्मार्थकाममोक्षाणामुच्छेत्तारोऽपि तु सर्वस्यापि श्रेयसो जीवितस्य च समूलघातं हन्तार

इति जाग्रत्सु तेषु धर्मादीनां चर्चापि दूरापास्ता, तदनुष्ठानं च दुराशामात्रम्। एवं च धर्मादिप्रत्यनीकेऽस्मिन् रोगानीके समुन्मिषति मुधैव वेदोपदेशाः, वृथैव धर्माद्यनुष्ठानकथाः, मृषैव च मानवानां मङ्गलकामनाः, इति यावद्रोगप्रशमोपाया न विधीयन्ते तावद्वेदानां वैयर्थ्यं दुर्निवारमेवेति मन्वानेन भगवता स्वयंभुवा प्रजोत्पत्तेः प्रागेव सहैव वेदैस्तदङ्गभूतोऽयमायुर्वेदः प्रकाशितः प्रजाहितहेतोः।

यदुक्तं धन्वन्तरिणा—

'इह खलु आयुर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्य अनुत्पाद्यैवप्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः। सु० सू० १ अ०'

तदेवमायुर्वेदोऽयं सहोदरो वेदानाम्, सह संवर्धितो विधिबोधानाम्, सहायको धर्मादीनाम, उपकारकश्च जीवानामिति सिद्धमस्य वेदत्वम्। दृश्यते च केवलवेदशब्दप्रयोगोप्यायुर्वेदे, तथा च सुश्रुतारम्भे—"अथाऽतो वेदोत्पत्तिमध्यायं व्याख्यास्याम" इत्युपक्रम्य प्रवृत्तेऽध्याये न वर्णिता क्वचनाऽपि वेदोत्पत्तिर्वर्णिता तु केवलमायुर्वेदोत्पत्तिरेव। संहिता चासावित्थम्—

'ब्रह्मा प्रोवाच, ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः, इन्द्रादहम्, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः' अनेन ज्ञायते यदध्यायादौ वेदशब्दोऽयमायुर्वेदमेवाऽऽह। ब्रह्मप्रोक्तत्वात् आम्नायप्रवृत्तत्वाच्च स्पष्टमस्य वेदत्वम्, अङ्गत्वं तु वेदार्थोपकारकत्वात्।

अत्रेदं विचार्यते-ऋग्यजुःसाम्नां वेदानां हि त्रयी प्रसिद्धा चतुष्टयी वा सहाऽऽथर्वणेन। तदयमायुर्वेदः किं पञ्चमो वेदानाम्? उताहो उक्तेष्वेवान्तर्भवति? भवति चेत्कतमस्मिन्? अथ यद्ययमायुर्वेदोपि वेद एव तत्किमित्यायुषा विशेष्यते? किञ्च यद्यस्य वेदत्वमिष्यते तत्किमस्ति वेदानामिवाऽस्य नित्यत्वं प्रमाणसिद्धम्? श्रूयन्ते तु चरकसुश्रुतप्रभृतयो निर्मातारः संस्कर्तारश्चाऽऽयुर्वेदस्य तत्कथमस्य नित्यत्वम्? वेदानां च कर्मोपासनाज्ञानादिनाऽङ्गप्रविभागो दृश्यते श्रूयते च। यदि पुनरयमायुर्वेदोऽपि वेद एव किमु वर्ततेऽस्य तादृशः कोऽप्यङ्गविभागः? वेदेषु वेदाङ्गेषु चाऽधिकारिणः श्रूयन्ते स्मर्यन्ते च। न खल्वनधिकारिषु वेदाश्च वेदाङ्गानि च वेदार्थाश्च धार्मिकैः संक्राम्यन्ते। यदि त्वयमायुर्वेदोपि वेद एव स्यात्तदाऽस्याधिकारिणोपि निरूपणीयाः स्युः सप्रमाणम्, इति।

अत्रोच्यते—सकलोप्ययं प्रश्नकलापो मीमांसितो भगवताऽऽत्रेयेण निबद्धश्चाग्निवेशेन सूत्रस्थाने। तद्यथा—"तत्र चेत्प्रष्टारः स्युः, चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः। अयमभिसन्धिः 'तन्त्रमार्षं कार्त्स्न्येन यथाऽऽम्नायमुच्यमानं वाक्यशो भवत्युक्तम्' इति हि प्रकृतम्। अत्र च आम्नायानुवर्तिनः "आर्षस्य" वैदिकस्य तन्त्रस्योपदेशः प्रक्रान्तः आम्नायश्च ऋक्सामयजुरथर्वभेदेन चतुर्धा विभक्तः। तत्र 'यथाऽऽम्नायम्' इत्युक्त्या कोऽसावाम्नायः परामृश्यते, यमायुर्वेद उपजीवति, आयुर्वेदोऽयं कस्य वेदस्यानुगामी, कस्यायमङ्गम्, उपवेदो वेत्यभिप्रायवान् पृच्छति—"चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः' इति। अस्योत्तरम्—'तत्र भिषजा पृष्टेनैवं चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या'। भक्तिशब्दोऽत्र भागवचनः। भावप्रधानश्चायं निर्देशः। अथर्ववेदे भक्तिर्भागः अङ्गत्वमिति यावत्, 'आत्मनः' आत्मीयस्य—आयुर्वेदस्येति यावत्।

आयुर्वेदस्याथर्ववेदेऽङ्गत्वमिति निर्गलितोऽर्थः। अमुमेवार्थं भूयोऽपि स्पष्टीकरोति "वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह" प्रायश्चित्तशब्देन चाऽत्र भेषजमुच्यते। यदुक्तमत्रैव चिकित्सिते स्थाने—

प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम्,
विद्याद् भेषजनामानि' इति।

यद्वा आदिपदेनाऽत्र अष्टाङ्ग आयुर्वेद उपलक्ष्यते। अथर्ववेदे हि आध्यात्मिकः, आधिदैविकः, आधिभौतिकश्च व्याधीनां प्रतीकार उपनिबद्धस्तस्मादष्टाङ्गोऽयमायुर्वेदस्तस्यैवाङ्गंभवितुं युक्त इत्याकूतम्। यद्यपि ऋग्वेदेऽपि समुपलभ्यन्ते बहुविधा वीरुधां स्तुतिवर्णास्तथापि नहि तत्र तथाविधा अनेकशाखाश्रयिणो विधानमार्गाः यथाऽऽथर्वणे इत्यत्र रहस्यम्, यदा तु वेदानां त्रयमेव मन्यते तदा आयुर्वेदोऽयमृग्वेदस्याङ्गमुच्यते। यदुक्तं चरणव्यूहे कात्यायनेन "ऋग्वेदस्याऽऽयुर्वेद उपवेदः" इति।

"तत्र भिषजा पृष्टेनैवमात्मनोऽथर्ववेदे भक्तिरादेश्या" इति ग्रन्थं व्याचक्षाणश्चक्रपाणिस्तु "अथर्ववेदे भक्तिः सेवेत्यर्थः, एतेन भिषक्सेव्यत्वेन, अथर्ववेदस्यायुर्वेदत्वमुक्तं भवति" इति प्राह। तदेतत्सर्वं प्रमत्तप्रलपितमात्रम्। प्रश्नोत्तरयोः परस्परं संगत्यभावात्। आयुर्वेदः कस्य वेदस्याङ्गम्, इति पृष्टेन भिषजा अथर्ववेदस्याग्रे दण्डवत्प्रणामः कर्तव्यः, घण्टाघोषः शङ्खनानादश्च तस्य पुरस्ताद् विधातव्यः, प्रकारान्तरेण वा "सेवा" सम्पादनीया इति कीदृशमुत्तरमिति निमीलितलोचनं विवेचयन्तु विपश्चितः। "अथर्ववेदस्याऽऽयुर्वेदत्वम्" इत्युक्तिरपि प्रमादविजृम्भितमेव। आयुर्वेदो ह्यध्यायसहस्रात्मको लक्षश्लोकात्मकश्चेत्युक्तं सुश्रुतेन। चरकेण च—

"हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम्।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः,
सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः।
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः॥

इत्युक्तं सूत्रस्थाने प्रथमाध्याये। न चैतस्य स्कन्धत्रयविशिष्टस्य अतिमहत आयुर्वेदस्योपलम्भः शक्योऽथर्ववेदेऽन्वेष्टुम्। यदि तूपलभ्यते तदा अथर्ववेदस्य वेदत्वम् आयुर्वेदस्य च उपवेदत्वम् इति प्रविभागो नोपपद्येत। तस्मादत्र "चरकचतुराननस्य" चक्रपाणेश्चक्रो वक्राथित एव।

प्रकृतमनुसरामः। आयुर्वेद इति किमर्थमयं वेदशब्दोऽत्रायुषा विशेष्यते इति मामांसमानः पृच्छति "किमायुः? कस्मादायुर्वेदः"? इति चरक सू० ३० अ०। अस्योत्तरमाह "वेदं चोपदिश्याऽऽयुर्वाच्यम्। तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेत्येकोऽर्थः। तत्राऽऽयुर्वेदयतीत्यायुर्वेदः। कथमिति चेदुच्यते—स्वलक्षणतः, सुखासुखतो, हिताहिततः, प्रमाणाप्रमाणतश्च, यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयत्यतोप्यायुर्वेदः, च० सू० अ० ३०

यत्तु शङ्कितमायुर्वेदस्य नित्यत्वविषये तदिदानीमवतार्यते—" किं चाऽयमायुर्वेदः शाश्वतोऽशाश्वतश्च" इति। च शब्दोऽयं वार्थे, यदि त्वायुर्वेदो नित्योऽभ्युपेयते तदाऽस्य कर्तृत्वश्रुतिर्विरुध्यते। प्रमाणानि नित्यत्वविषये नोपलभ्यन्ते। अथानित्यो मन्यते तदास्य वेदत्वन्नोपपद्यते इति प्रष्टुरभिप्रायः।

अस्योत्तरमाह—"सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते अनादित्वात्, स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च। नहि नाऽभूत्कदाचिदायुषः सन्तानो

बुद्धिसन्तानो वा, शाश्वतश्चायुषो वेदिता अनादि च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात्। एष चाऽर्थसंग्रहो विभाव्यते आयुर्वेदलक्षणमिति। गुरुलघुशीतोष्णस्निग्धरूक्षादीनां च द्वन्द्वानां सामान्यविशेषाभ्यां वृद्धिह्रासौ यथोक्तम्। गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनाम्। एवमेवेतरेषामित्येष भावस्वभावो नित्यः, स्वलक्षणं च द्रव्याणां पृथिव्यादीनाम्; सन्ति तु सर्वदा गुणाश्च नित्यानित्याः। नह्यायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यतेऽन्यत्रावबोधोपदेशाभ्याम्। एतद्वै द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके। स्वाभाविकं चास्य लक्षणमकृतकम्, यदुक्तमिह चाद्ये अध्याये, यथाग्नेरौष्ण्यम्, अपां द्रवत्वम्। भावस्वभावनित्यत्वमपि चास्य यथोक्तं गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनामित्येवमादि' च० सू० अ० ३०।

एतेन आयुर्वेदस्य नित्यत्वं वेदत्वं च प्रतिपादयता तदुत्पत्तिप्रवादोऽपि समाहितः। यथा च वेदस्याङ्गानि तथैवाऽऽयुर्वेदस्यापि इतीदमुच्यते—

'तस्यायुर्वेदस्याङ्गान्यष्टौ, तद्यथा-कायचिकित्सा, शालाक्यम्, शल्यापहर्तृकम्, विषगरवैरोधिकप्रशमनम्, भूतविद्या, कौमारभृत्यकम्, रसायनानि, वाजीकरणमिति'

यथा च ब्राह्मणक्षत्रियवैश्याः संस्कारवन्तो द्विजाः वेदस्याधिकारिणस्तथैवायुर्वेदस्यापीत्युच्यते—

"स चाऽध्येतव्यो ब्राह्मणराजन्यवैश्यैः। तत्राऽनुग्रहार्थं प्राणिनां ब्राह्मणैः, आत्मरक्षार्थं राजन्यै र्वृत्यर्थं वैश्यैः, सामान्यतो वा धर्मार्थकामपरिग्रहार्थं सर्वैः" इति च० सू० अ० ३०

सर्वैर्ब्राह्मणराजन्यवैश्यैस्त्रिवर्गसिद्ध्यर्थमायुर्वेदोऽध्येतव्य इत्यभिप्रायः। सुश्रुतेन तु—

"ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रम् ऋजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेश सहं च भिषक् शिष्यमुपनयेत्। अतो विपरीतगुणं नोपनयेत्"

इत्युक्तम्। एतेनापि त्रैवर्णिकानामेव आयुर्वेदेऽधिकारः प्रतिष्ठाप्यते वेदवत्। किञ्च करालाकृतीनां विकटचेष्टानां दर्शनादेव च रोगिजनमनःसु यमदूतान् स्मारयतां विभीषणसोदराणां त्रैवर्णिकानामपि नात्राधिकारः स्वीक्रियते।

अतः परं च—"शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके" इत्युक्तं सुश्रुतेन। एतेन ज्ञायते यदायुर्वेदस्य मन्त्रभागस्तद्व्याख्याभागश्च पूर्वमासीत्। मन्त्रभागस्त्वयं ब्रह्मप्रोक्त आयुर्वेद एव योऽसौ निर्दिष्टोऽधस्तात्। तद्व्याख्याभागश्च चरकसुश्रुतादिर्योऽद्याप्युपलभ्यते यथा कथंचित्, मन्त्रभागे उपनयने च शूद्राणां नाधिकार इति सर्वसंमतम्। मन्त्रवर्जम् उपनयनवर्जं च शूद्रेष्वपि कुलगुणसम्पन्नेषु संक्रामणीयमिति केचन मन्वते स्म। शूद्राणां कुलगुणश्च सेवाधर्मः प्राधान्येन। तत्परेषु तेषु तदनुमन्यते।

एवं च आयुर्वेदोऽयं वेदः, ब्रह्मप्रोक्ते अध्यायसहस्रात्मके मन्त्रभागे परिनिष्ठितः, वेदाधिकारिण एवास्याधिकारिणः, वेदवदेवाऽस्याप्यङ्गानि, तद्वदेव चायं शाश्वत एकप्रभवश्च, आयुःशब्दविशेषणं साभिप्रायम्, अङ्गभूतोऽयमथर्ववेदस्य प्रत्यूहव्यूहविनाशकतया च प्रधानोपकारको धर्माद्यनुष्ठानविधायकस्य वेदभागस्येत्यावेदितं भवति।

वैदिको हि शब्दसंग्रहो निघण्टुरित्युच्यते लौकिकस्तु कोष इति। दृश्यन्ते चाऽद्यापि निखिला आयु-

वैदीयाः शब्दसंग्रहा निघण्टुशब्देनाभिधीयमानाः । तदेतत्प्रमाणं वैदिकपरम्परागतम् ।

अनेके च तादृशाः शब्दा ये केवलं वैदिके साहित्ये समुपलभ्यन्ते न च सम्पद्यन्ते पाणिनीयानुसारम्, न वा व्यवह्रियन्ते लौकिके संस्कृते । दृश्यन्ते तु तादृशा अनेके शब्दा आयुर्वेदीयसंहितासु संप्रत्यपि यथा—"न वेगान्धारणीयः," "तिस्रैषणीयः," 'यज्जःपुरुषीयः,' "कियन्तःशिरसीयः" इत्यादि "अच्छावाकीयं सूक्तम्," "वागम्भृणीयं सूक्तम्" इत्यादिवत् खल्वमी "न वेगान्धारणीय" प्रभृतयोऽध्यायाः । ब्रह्मप्रोक्ते आयुर्वेदे समुपनिबद्धानामध्यायानामिदं वैदिकं नामकरणम्, अग्निवेशसंहितायां तद्रूपमेवोद्धृतमिति स्पष्टं प्रतीयते ।

अथेदं चिन्तनीयम्, चरके च सुश्रुते च सर्वत्राध्यायप्रारम्भे—"अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः" 'अथातो वेदोत्पत्तिमध्यायं व्याख्यास्यामः' इत्यादिकं दृश्यते । तत्कोऽस्यार्थः ? क्व नु खल्वमी अध्याया येषामियं व्याख्या संप्रति प्रस्तूयते । न चासति मूले व्याख्या प्रसरति । न च तन्मूलमुपलभामहे । न च केवले कथने व्याख्यानशब्दोऽयं प्रयुज्यमानो दृश्यते । ये तु टीकाकृतो 'व्याख्यास्यामः' इत्यस्य 'विशिष्य आख्यास्यामः' इत्यर्थं कल्पयन्तो निरापदमात्मानं मन्यन्ते तान् प्रति पृच्छामः—केयं विशिष्य आख्या ? सामान्यत आख्यातस्य हि विशिष्य आख्या संभवति, सेयं विशिष्य आख्यैव व्याख्येति मन्यते । या च सामान्यतः आख्या सा मूलमित्युच्यते । तदेवं 'भक्षितेपि लशुने न शान्तो व्याधिः' व्याख्यायाः पुनरपि मूले सापेक्षत्वस्य तादवस्थ्यात् । तदेव तु मूलं निर्देष्टव्यं यस्येयं व्याख्या क्रियते ।

किञ्च अध्यायमुद्दिश्य व्याख्यामात्रमस्य वाक्यस्य विधेयम् । तस्मात्पूर्वसिद्धेनात्र अध्यायेन भवितव्यम् । न चेदं घटादिवत्कार्यं कर्म, न वा दध्यादिवत् विकार्यं कर्म यत् क्रियया निर्वर्त्येत । तस्माद् व्याख्यातव्यो ऽध्यायो नूनमन्वेष्टव्यो यस्येयं व्याख्या समारभ्यते । स चाऽसावध्यायो न संभवत्येवाऽन्यत्र ब्रह्मप्रोक्तादायुर्वेदात् । अध्यायसहस्रात्मकमायुर्वेदं ब्रह्मा प्रोवाचेति प्रागवोचाम । अष्टौ चास्याङ्गानि तत एव च शिष्यजिज्ञासानुसारं वा, आचार्यप्रतिपिपादयिषानुसारं वा, तं तमुपयुक्तमध्यायं मनसि कृत्वा कायचिकित्सातः पुनर्वसुना, शल्यतन्त्राच्च धन्वन्तरिणा तस्यैव सामान्याख्यातस्य विशिष्याख्येयमारभ्यते यदुक्तं 'व्याख्यास्याम' इति ।

एवं चैतन्मूलभूतस्यायुर्वेदस्य वेदत्वं चरकादीनां च तदुपजीवकत्वं सुस्पष्टं भवति ।

किञ्च ब्रह्मप्रोक्तस्यायुर्वेदस्य विलीनप्रचारता वा विरलप्रचारता वा बहुतिथात्किल कालात्समजनीति ज्ञायते चरकादेव । तथा हि दीर्घञ्जीवितीये अध्याये इदमुपनिबध्यते ।

"विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाऽध्ययनब्रह्मचर्यव्रतायुषाम् ॥ ६ ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः
समेताः पुण्यकर्माणः पार्श्वे हिमवतः शुभे ॥७॥
अङ्गिरा जमदग्निश्च वशिष्ठः कश्यपो भृगुः,

इत्यादिना अधिकपञ्चाशानां महर्षीणां नामान्युक्त्वा ततः—

"सुखोपविष्टास्ते तत्र पुण्यांचक्रुः कथामिमाम् ।
धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥१५॥
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ।
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः १६

अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ।
स वक्ष्यति शमोपायं यथावदमरप्रभुः ॥१७॥

एतेन ज्ञायते यत्तदानीमायुर्वेदोपलम्भो न सम्भाव्यते स्म शक्रादन्यतः । यदि त्वसौ सुलभप्रचारो वाऽभविष्यत् तदा किमिति महर्षीणां सहस्राक्षभवनपर्यन्तमनुधावनमापतिष्यत् ।

ततश्च—

'कः सहस्राक्षभवनं गच्छेत्प्रष्टुं शचीपतिम् ।
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः'
'भरद्वाजोऽब्रवीत् तस्मादृषिभिः स नियोजितः १८'
तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥२२॥

एतेन स्पष्टमिदं प्रतीयते यद् भरद्वाजेन शतक्रतुसकाशात् य आयुर्वेद उपलब्धः सोऽत्यल्पपदवान् बह्वर्थः सूत्ररूपः परममेधाविगम्यश्चासीत् ।

ततश्च—

'तेनाऽऽयुरमितं लेभे भरद्वाजः सुखान्वितः ।
ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् ॥२५॥

इदमुक्तं भवति । भरद्वाजेन आयुर्वेदं प्राप्य तदनुरूपानुष्ठानेनामितं सुखं चायुराप्तम्, ततश्च शक्रात् यथा प्राप्तोऽयमायुर्वेदस्तेनैव रूपेण सूत्ररूपः, नाऽणुमात्रमपि न्यूनः, न च स्तोकोऽप्यधिकोऽन्येषु महर्षिषु संक्रामितः । एवञ्चेदानींपर्यन्तमयमायुर्वेदः सूत्ररूप एव महर्षिकल्पपरममेधाविगम्य एव चासीदिति स्पष्टमापतति ।

ततश्च—

'अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया २६
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः' ॥३०॥

अथ भगवान् पुनर्वसुरात्रेयः, सर्वभूतानुक्रोशपरवशोऽग्निवेशप्रभृतीन् षट् शिष्यानध्यापयामास । न तु तेनैव रूपेण यथा भरद्वाजादाप्तवान् । तस्य रूपस्य परमर्षिमात्रगम्यसूत्रभूतात्यल्पाक्षरमयत्वात्, सर्वसाधारणानुपयुक्तत्वात् । एवं च भरद्वाजात्प्राप्तस्य सूत्ररूपस्यास्यायुर्वेदस्य विशिष्याऽऽख्यानं भगवता पुनर्वसुना आत्रेयेण शिष्यानुग्रहार्थं भूतानुग्रहार्थं वा कृतमिति प्रत्यध्यायादौ साधु खल्विदमुच्यते—"व्याख्यास्यामः" इति । सामान्यतो भरद्वाजाऽऽख्यातस्य हीदं विशिष्याऽऽख्यानम् । अथ तस्य मूलभूतस्य पृथगुपनिबन्धोऽनावश्यकत्वादात्रेयेणैव न कृतोऽग्निवेशेन वा तत् संहितोपनिबन्धनाऽवसरे परित्यक्तमित्यन्यदेतत् ।

इमां महर्षेर्भरद्वाजस्य महेन्द्रभवनगमनकथामालोकमालोकं केचन महाशयाः—म० म० श्रीगणनाथसेनमहोदयाः—ऋषीणां सर्वज्ञत्वे विप्रतिपद्यन्ते । ते चैवं प्रत्यवतिष्ठन्ते—

"मा भूत्कस्यापि हृदये व्यामोहो यद् ऋषयः सर्वज्ञा इति । न खलु सर्वज्ञता नाम ईश्वरादन्यत्र क्वापि संभवति । श्रुतिस्मृतितन्त्रादिषु सर्वत्रैव तादृशसिद्धान्तदर्शनात् । न च तेषां सर्वज्ञत्वे—'वेदा विभिन्नाः स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम्' । इति महाभारतीयं वाक्यं संगच्छेत । किञ्च सर्वज्ञानामेकविधमेव दर्शनं स्यात् न षड्विधम् । न वा संभवेयुः सत्यपि अधिकारभेदे परस्परविरोधिनः सिद्धान्ता मुनीनां धर्मनिर्णयादिविषयेषु । श्रृणुमश्च चरकसंहितायां पुरा हिमगिरिसानौ सहस्रशः समवेता ऋषय आधिव्याधिशमोपायं ध्यानेन निर्धार्य आयुर्वेदशिक्षार्थं महर्षिं भरद्वाजं

देवराजसकाशे प्रेषयामासुः। चरकचिकित्सास्थानारम्भेऽपि लोकोपकारव्रतानामृषीणां स्वयं रोगजीर्णानां पुनरपि इन्द्रसकाशे प्रस्थानं न तेषां सर्वज्ञतां व्यनक्ति। किञ्च चरके रसदोषादिसिद्धान्तविषयेषु बहुधा दृश्यन्ते ऋषीणां विप्रतिपत्तयः, यन्मीमांसार्थं सिद्धान्तनिर्णयपरा वाचोयुक्तिर्भगवत आत्रेयपुनर्वसोः प्रवृत्ते……

……………निरतिशया हि सर्वज्ञता परमेशितुरेव संभवति न मानुषाणाम्। पूर्वोक्तकर्मदर्शनाच्च ऋषीणां स एव निर्णयो दृढीभवति। जागर्ति चेश्वरविषये पातञ्जलसूत्रम्—'तत्र निरतिशयं सर्वज्ञताबीजम्' इति।"

(वैद्यसम्मेलनपत्रिका, सन् १९३१, जनवरीमासः)

सर्वतोऽधिकं खिदं दुःखाकरं च लज्जाकरं च यद् वैद्यसम्मेलनस्य सभापतिना कृतोऽयं महर्षीणां केशालुञ्चनाय प्रयासः। तदत्र हेतुत्रयमन्तर्हितम्।

१—पातञ्जलेन सूत्रेण केवलमीश्वरस्य सर्वज्ञत्वं बोध्यते।

२—'वेदा विभिन्नाः स्मृतयो विभिन्ना'—इत्यादिना महाभारतवाक्येन विभिन्नमतानुयायिनां षण्णां दर्शनानामुपलम्भेन च प्रतीयते यत्र ऋषयः सर्वज्ञा इति।

३—चरकोक्तेन आयुर्वेदज्ञानार्थमिन्द्रसमीपे ऋषीणां गमनेन तेषामसर्वज्ञत्वं प्रतीयते।

तदेतत् त्रयमपि यथाक्रमं परीक्षिष्यते। पातञ्जलं सूत्रं हि महर्षीणां सर्वज्ञतामूलमुच्छेत्तुं प्रधानतमः कुठारो महाशयानाम्। तत्सर्वतः पूर्वमस्यैव तैक्ष्ण्यं परीक्षामहे। अङ्ग हि तावदिदं व्याचष्टां भवान् यत् सूत्रेऽस्मिन् निरतिशयपदस्य किं व्यावर्त्यम्? सूत्रेण ह्यनेन परमेश्वरे 'निरतिशयं सर्वज्ञबीजं' प्रतिपाद्यते। यदि त्वेक एव सर्वज्ञः स्यात् एकविधमेव च सर्वज्ञबीजं स्यात् तदा निरतिशयपदेन तस्य विशेषणे को हेतुः? न खलु भवन्मते सन्ति सातिशयाः सर्वज्ञा महर्षयो यान् व्यावर्तयितुं पदमिदमुपादीयेत। असति तु व्यावर्त्ये समुपादीयमानं विशेषणं सूत्रकर्तुर्वा व्यामोहं बोधयेत् उत्सूत्रं व्याकर्तुर्वा।

योगदर्शनस्य समाधिपादे परमेश्वरस्य सर्वातिशायि ऐश्वर्यम्, सर्वातिशायि (निरतिशयं) च सर्वज्ञत्वं प्रतिपादितम्। यद्यपि योगिष्वपि मुक्तेष्वपि च दृश्यते श्रूयते च ऐश्वर्यमपि, सर्वज्ञत्वमपि च, परं न तन्निरतिशयम्, सातिशयं खलु तत्। यत्र पुनश्चरमा सीमा अनयोरैश्वर्यसर्वज्ञत्वयोः स परमेश्वर इतीदमुच्यते।

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः।' २४ (यो० १ पा)। अत्र भाष्ये "कैवल्यं प्राप्तास्तर्हि सन्ति बहवः केवलिनः" इत्यनेन बहूनां योगिनामैश्वर्यं प्रदर्श्य ततः—'तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्। न तावदैश्वर्यान्तरेण तदतिशय्यते' इत्युक्तम्। एतेन सातिशयम् ऐश्वर्यं योगिनाम्, निरतिशयं च परमेश्वरस्येति स्पष्टमुक्तं भवति।

अस्यैवाग्रिमं सूत्रम्—

"तत्र निरतिशयं सर्वज्ञबीजम्" २५ इति।

(यो० १ पा०)

अत्र "सर्वज्ञबीजस्थाने" "सर्वज्ञताबीज" कल्पनमपि महाशयानां व्यामोहविजृम्भितमेव। अस्मिन्सूत्रे "सर्वज्ञबीज" शब्देन किं गृह्यते, कतिविधं च तद् भवति, कुत्र च कीदृशं तिष्ठतीत्युच्यते—एतत्सूत्रभाष्ये व्यासेन। "यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणम् अल्पं बह्विति सर्वज्ञबीजम्, एतद्धि वर्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य, सातिशयत्वात् परिमाणवदिति।"

एतेन स्पष्टमिदं भवति यत्सातिशयाः सर्वज्ञा महर्षयो, निरतिशयः सर्वज्ञश्चेश्वर इति । महर्षीणां सर्वज्ञत्वमपलपितुं सोऽयं सम्भ्रमेण सूत्ररूपः कालसर्पः समासादितो महाशयैर्यो न केवलं तन्मतमुत्सादयति, प्रत्युत प्रतीपं प्रतिष्ठापयत्यपि । अनेनैव हि महर्षीणां सर्वज्ञत्वं सिध्यति ।

किञ्च 'ऋतम्भरा तत्र प्रज्ञा' ॥४८॥ (यो०१पा०) इति सूत्रभाष्ये 'तस्मिन् समाहितचित्तस्य या प्रज्ञा प्रजायते तस्यां ऋतम्भरेति संज्ञा । अन्वर्था च सा, सत्यमेव बिभर्ति, न च तत्र विपर्यासज्ञानगन्धोऽप्यस्तीति' एवं च सबीजसमाधौ निर्विचारवैशारद्ये ऋतम्भरोदये योगिनो निर्भ्रान्तं सत्यं ज्ञानमाविर्भवतीति स्पष्टमुक्तम् । एतदेव सर्वज्ञबीजम् ।

किञ्च "समाधिसिद्धिरीश्वरप्रणिधानात्" ४५॥ ( यो० द०, २ पा० ) इति सूत्रं व्याचक्षाणो व्यासः प्राह—"ईश्वरार्पितसर्वभावस्य समाधिसिद्धिर्यया सर्वमीप्सितम् ।

"अवितथं जानाति देशान्तरे देहान्तरे कालान्तरे च"।

यःखलु देशान्तरस्थं, लोकान्तरस्थं वा देहान्तरस्थं वा कालान्तरस्थं वा इन्द्रियैरसंनिकृष्टमतीन्द्रियमपि पदार्थजातम् अवितथं यथाभूतं जानाति, कथमिवासौ न सर्वज्ञः स्यात् ?

किं बहुना, योगसूत्रकृता दुन्दुभिघोषमुद्घोषितं सर्वज्ञत्वं योगिनाम् । तथा हि सूत्रम्—

"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" ॥४९॥ ( यो० ३ पा० )

अत्र व्यासः—'इत्येषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति' एवं च ऋषयो न सर्वज्ञा इति कथनं प्रलपितमात्रम् । योगसूत्रबलेन तत्साधनप्रत्याशा च दुःसाहसमात्रम् ।

अतीतानागतातीन्द्रियविषयं हि ज्ञानं सर्वज्ञबीजं भवति, तच्चेदं सातिशयं योगिनाम् । उत्तरोत्तरमुत्कर्षदर्शनात् । एतदेव ऋषीणामृषित्वं यदव्याहतं दर्शनम् इति । अत एवोक्तम् "ऋषिर्दर्शनात्" इति यास्केन । "विशोकां" सिद्धिं प्राप्तवन्तश्च महर्षयो ये नाम द्रष्टवन्तो वेदांश्च वेदार्थांश्च । यदुक्तं यास्केन—"साक्षात्कृतधर्माण ऋषयो बभूवुः" इति । एतानेवाधिकृत्येदमुच्यते—

"आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्नातिरिच्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥इति॥

एतानेव च महर्षीनधिकृत्य चरकेणोच्यते—

"रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताः शिष्टा विबुद्धा ये तेषां ज्ञानमसंशयम् ।
सत्यं वक्ष्यन्ति ते, कस्मादसत्यं नीरजस्तमाः" ॥इति

एवं च य एव वेदानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदस्यापीति समानः खल्वायुर्वेदो वेदैः ।

इदं तु बोध्यम्—निर्बीजसमाधिसाधनाविधूतपाप्मनां प्रशमितरजस्तमसां निर्मलमणिप्रख्यसत्वानां महर्षीणां विषये एवेदं सर्वमुच्यते । एत एव हि आविर्भूतप्रकाशा अतीतानागतातीन्द्रियज्ञाननिधयश्चरकेण 'त्रिकालज्ञा आप्ताः शिष्टा विबुद्धा'श्चोच्यन्ते । एत एव च साक्षात्कृतधर्माणः क्षीणक्लेशबन्धना वशिनः सर्वज्ञाः सर्वभावाधिष्ठातारश्च महर्षयः कथ्यन्ते ।

ये तु सबीजसमाधिमात्रसमृद्धय ऋतम्भरां प्रज्ञामधिगतवन्तस्तेऽमीभ्यो वरे ज्ञाने च विज्ञाने च भावाधिकारे च न तथा प्रभवन्त ऋषय इत्युच्यन्ते।

ये पुनर्वैदिकान् महर्षिप्रोक्तांश्चार्थान् अनुकूलैस्तर्कैः समर्थयन्तो मननशास्त्रावबोधनैर्जनानुपकुर्वन्ति तेऽमी मुनय इति मन्यते। ऋषिर्दर्शनात्, मुनिश्च मननात्। "आत्मा वा अरे अयं द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति" श्रुतिप्रोक्ते दर्शने लब्धाधिकारा ऋषयः, मनने च प्राप्तप्रतिष्ठा मुनय इति तत्त्वम्। "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि"रित्यादिस्मृत्या हि उपपत्तिप्रधानं शास्त्रं मननशास्त्रम्। एवं च षड्दर्शनानि मननशास्त्राण्येव, तन्निर्मातारश्च मुनय एव न ऋषयो नापि महर्षयः। मुनिष्वपि च क्वचनाऽऽदरातिशयार्थं महर्षिप्रभृतिपदप्रयोगो दृश्यते इत्यन्यदेतत्। तत्तर्कमात्रावलम्बनानां मुनीनां मतभेदो न दोषाय। श्रुतिप्रतिपादिते आत्मसाक्षात्कारे प्रेरणं तत्समर्थनं चैषां प्रधानं लक्ष्यम्। न चात्र विषये कस्यापि दर्शनकर्तुर्विसंवादः। प्रक्रियायां भेदस्तु न गण्य एव, यत्र तु साक्षात्कृतधर्मणां महर्षीणां मतभेदस्तत्र द्वयमपि मान्यम्—

"श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ" इतिवत्। एतेन "सर्वज्ञानामेकविधमेव दर्शनं स्यान्न तु षड्विधम्" इति यदुक्तं तत्परास्तम्। मुनीनामसर्वज्ञत्वात्, ऋषिमुन्योर्भेदात्, प्रधाने लक्ष्ये भेदाभावात्, प्रक्रियाभेदस्य च न गण्यत्वात्।

किञ्च "षड्विधं दर्शनम्" इत्यप्यविचारिताभिधानम्, न्यायवैशेषिकयोः, सांख्ययोगयोः, पूर्वोत्तरमीमांसयोश्च समानतन्त्रत्वात्। न्यायवैशेषिकयोः समानतन्त्रत्वं तु बाला अपि जानते। "सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः" इति च भगवता स्मर्यते। मीमांसयोश्चैकशब्दाभिधानयोः पूर्वोत्तरपदव्यपदेश्यत्वमेव तयोरैक्यं समर्थयति। "व्यवहारे भट्टनयः" इति च प्रसिद्धं वेदान्तेषु। तस्मात् "षड्विधं दर्शनम्" इत्यविचारिताभिधानम्।

यत्तु महाभारतीयं वचनमुद्धृतं महाशयैस्तदपि निर्मूलम्। नासौ पाठो महाभारते। दृश्यते त्वेवम्—

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायाम्
महाजनो येन गतः स पन्थाः॥ ११९॥

(म० भा० वनपर्व, २१ अध्याय)

न चास्त्यत्र काचन विप्रतिपत्तिः। तर्कस्याप्रतिष्ठितत्वात्, मुनीनां चासर्वज्ञत्वात्, श्रुतिद्वैधबोधितेऽर्थे सदाचारस्यैव प्रमाणत्वात्। यदुक्तं मनुना—

'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः'।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥ इति

यदि तु 'वेदा विभिन्नाः स्मृतयो विभिन्ना नाऽसौ मुनिर्यस्य मतं न भिन्नम्' इति पाठो मन्येत तदा प्रत्येकं मुनेर्मतभेद आवश्यकः स्यात्। न च द्वौ अपि मुनी एकमतौ संभाव्येयाताम्। एवं च मुनीनां समाजो विक्षिप्तानां वा उन्मत्तानां वा समूह एव प्रसज्येत।

अथेदं चिन्तनीयं यत्सति सर्वज्ञत्वे ऋषीणां किमिति तेषामायुर्वेदज्ञानार्थमिन्द्रसमीपे गमनमिति। पूर्वोक्तेन चरकवर्णनेन विज्ञायते यदात्रेयस्य पुनर्वसोर्गुरुर्भरद्वाज आसीत्। भरद्वाजेन इन्द्रादधीतम्। पुनर्वसोश्च अग्निवेशप्रभृतयः संहिताकाराः षट् शिष्याः। एवं च नैते सृष्टेरारम्भकाले जाताः साक्षात्कृतधर्माणो वेदानां द्रष्टारः प्रवक्तारश्च। महर्षयोऽपि तु प्राणिषु

प्रादुर्भूतान् रोगान् दर्शं दर्शं दूयमानमनसो मैत्रीकरुणा-वशाः कालवशाद् दुर्लभीभूतमायुर्वेदमुद्धर्तुकामा ऋषयो मध्यकालजन्मानो येष्वन्यतमो भारद्वाज इन्द्रं प्रति प्रतस्थे । ऋषीणां सर्वज्ञत्वं भावाधिष्ठातृत्वं च न महर्षि-वत्सर्वलोकातिशायीत्यनुपदमेवोदितम् । तत्तादृशानाम-तिशयाधानार्थमिन्द्रसमीपे गमनं न दोषाय ।

किं च सर्वज्ञत्वं सर्वकर्तृत्वं चेति नैको धर्मः । न खलु ज्ञानं च क्रिया चेत्यभिन्नं वस्तु । न च जाना-नोऽपि सर्वः पारयते पूरयितुं कार्यकलापम् । प्रत्यहं पश्यामो यन्नापितः कङ्कतिकान्तर्गतान् केशान् कृत्वा कर्तरिकया द्रुततरं कृणत्ति । न चैतेन ज्ञानमात्रेण केशानां यथावद् वपने प्रभवामः । न चायमायुर्वेदः शब्दमात्रे परिसमाप्यते । अस्मिन् शिक्षणीया अनु-शीलनीयाश्च क्रियाः प्रक्रियाश्च । तत् सत्यपि सर्वज्ञत्वे ऋषीणां कथं नाम सर्वकर्तृत्वममीषामापततु ? यदि तु नामी सर्वज्ञा अभविष्यन् कथं नाम ध्यानचक्षुषा महेन्द्रमद्रक्ष्यन्, कथं वा तस्याऽऽयुर्वेदवित्त्वमज्ञास्यन्, कथं च तत्सकाशान्निजां मनोरथसिद्धिं निरधारयिष्यन् ?

किञ्च धर्मस्य प्रवर्तयितारः खलु महर्षयः कथं नाम धर्मविरुद्धमधितिष्ठेयुः ? अयं च धर्मो यद् वेदवद् गुरोर्मुखादायुर्वेदमधीत्य तत्सकाशे एव चासकृत्क्रिया-कलापमभ्यस्यात्राधिकारी भवति । यदुक्तं सुश्रुतेन—
"शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ।
यः कर्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः" इति ।

तद्गुरुमुखादनधीतविद्यैरमीभिर्ऋषिभिः कथं वा तस्करैरिव भवितव्यम् ? तत्सर्वज्ञेनापि महर्षिकल्पेना-पि च सताऽयमायुर्वेदो गुरुमुखादेवाध्येतव्योऽनुशील-नीयश्च गुरुसकाशे एव क्रियाकलापोऽत्राधिचिकीर्षता इति लोकान् बोधयितुमपि धर्मधुरीणानाममीषामृषीणां तदध्ययनाय पाकशासनसमीपे गमनमावश्यकमासीत इति कृतं कुत्सितकल्पनया ।

प्रकृतमनुसरामः । अस्वीकृतवेदप्रामाण्यं प्रति-पक्ष मतमुत्तोदयितुं स्वपक्षं च प्रतिष्ठापयितुं यतमानानां तार्किकमूर्धन्यानामप्यायुर्वेद एव शरणम् । तथा च गौतमीयं न्यायसूत्रम् —

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" ६८
(न्या० सू० २ अ० १ आ०)

यदि त्वायुर्वेदस्य वेदत्वं न स्यात्, न तस्य प्रामा-ण्येन वेदानां प्रामाण्यं साधयितुं शक्यं स्यात् । न खल्वन्यस्य तत्वमन्यत्र शक्यं संचारयितुमनुमान-सहस्रैरपि । तथा चोक्तमत्रैव भाष्यकृता वात्स्यायनेन— "य एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेद-प्रभृतीनाम् इत्यायुर्वेदप्रामाण्यवद् वेदप्रामाण्यमनुमात-व्यमिति"

एतेन वेदस्य आयुर्वेदस्य च समान एव द्रष्टारः प्रवक्तारश्चेति सिद्धम् ।

किम्बहुना—यादृशः पुरुषो वेदे अधिक्रियते तादृश एव चाऽऽयुर्वेदेऽपि । वस्तुतो धर्मादित्रिवर्गा-नुष्ठानकामिनो वेदाधिकारिपुरुषस्य प्रत्यूहव्यूहरोगा-नीकनिवारणायैवास्यायुर्वेदस्यारम्भ इति प्रागवोचाम । वेदे च न वेदान्तवत् अशनायापिपासाद्यतीतोऽसंसारी नित्यशुद्धबुद्धमुक्तः पुरुषोऽपेक्ष्यते । यदुक्तं भगवत्पादैः शारीरिकमीमांसायाम्—"ब्राह्मणो यजेत, इत्यादी-नि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्या-समाश्रित्य प्रवर्तन्ते" इति । न खलु विशुद्धे आत्मनि ब्रह्मत्वक्षत्रियत्वादिका धर्माः संभाव्यन्ते । संभाव्यन्ते तु ते शरीरबुद्धीन्द्रियादिविशिष्टे अध्या-साश्रये आपामरं च अहमितिप्रत्ययगोचरे । अस्यैव

च स्वर्गादिकामाः संभवन्ति नासंसारिणो नित्यशुद्ध-मुक्तस्य। तस्माद् "ग्रामकामो यजेत" 'स्वर्गकामो यजेत'–"शत्रुमरणकामः श्येनेनाभिचरेत्"–इत्यादिका वेदबोधिता विधयोऽध्यासविशिष्टं शरीरवन्तमेव पुरुष-मवलम्बन्ते न तु विशुद्धमात्मानम्।

अयमेव च शरीरी पुरुष आयुर्वेदेऽधिक्रियते। न खलु विशुद्धे आत्मनि रोगाणां स्पर्शोऽपि संभाव्यते, न च तस्य निदानादिकम्, न चामुष्य नाडीपरीक्षा नापि चात्र भेषजसंचारः शस्त्रप्रयोगो वा शक्यतेऽधि-कर्तुम्, तस्माद् विशुद्धोऽयं पुरुषो नाधिक्रियते आयु-र्वेदे, अधिक्रियते तु स एव धर्मानुष्ठानाधिकृतः शरीरी अध्यासाश्रयः।

यदुक्तं सुश्रुतेन—

"अस्मिंस्तु शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोऽधिष्ठानम्, कस्मात्? लोकस्य द्वैविध्यात्; लोको हि द्विविधः, स्थावरो, जङ्ग-मश्च; द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात्, पञ्चात्मको वा। तत्र चतुर्विधो भूतग्रामः स्वेदजाण्डजो-द्भिज्जजरायुजसंज्ञः, तत्र पुरुषः प्रधानम्, तस्योपकरण-मन्यत्, तस्मात् पुरुषोऽधिष्ठानम्॥"॥२१॥(सु.सू.१अ.)

इदमत्राकूतम्। "दुःखसंयोगा व्याधय उच्यन्ते" तत्प्रतीकारायैव चायमायुर्वेद आरभ्यते। न चासौ दुःखसंयोगः संभवति विशुद्धे आत्मनि; नापि च चेतनारहिते ग्रावादौ, संभवति तु केवलं शरीरेन्द्रिय-विशिष्टे चेतने। तत्रैव चास्य परिहारः संभवत्प्रक्रम इति। दुःखपरिहाराय प्रारब्धेऽस्मिन् शास्त्रे स एवा-धिकर्तुमुचित इतीदमुच्यते—"अस्मिंस्तु शास्त्रे पञ्च-महाभूतशरीरिसमवायः पुरुष इत्युच्यते" इति। अस्मि-न्नेव पुरुषे भेषजसंचारो वा शल्यप्रयोगो वा शक्य-श्चिकित्सकेन कर्तुमित्युक्तम्–"तस्मिन् क्रिया" इति।

न खलु केवलं चिकित्साशास्त्रोक्तानां क्रियाणामयं विषयोऽपि तु निखिलानां क्रियाणामधिष्ठानमपि। न वै इच्छापूर्विका काचनापि क्रिया पुरुषमिममतिक्रम्य शक्यते समुपलब्धुम्, इत्युक्तम्–'सोऽधिष्ठानम्' इति।

ननु दृश्यन्ते हि जडेष्वपि क्रियाः, वर्षत्सु मेघेषु, नभसो निपतन्तीषु करकासु, पर्वतेभ्यः समापतन्तीषु च शिलास्वपि दृश्यन्ते क्रियाः। तत्किमिदमुच्यते सर्वासां क्रियाणां "पुरुषोऽधिष्ठानम्" इत्यभिप्रायवान् शङ्कते–'कस्मात्' इति।

उत्तरयति–'लोकस्य द्वैविध्यात्' इति। एतदेव स्पष्टीकरोति 'लोको हि द्विविधः'इति। किं तद्द्वैविध्यम् इति जिज्ञासून्प्रति तदेव द्वैविध्यमुद्घोषयति–'स्थावरो जङ्गमश्च' इति।

अयमत्राभिसन्धिः। द्विविधं खलु जगत्। स्थावरं च, जङ्गमंच तत्र 'स्थावर'शब्दोऽयं 'ष्ठागतिनिवृत्तौ' इति धातोर्निष्पन्नः सर्वासां क्रियाणां निवृत्तिमभिधत्ते। 'जङ्गम'शब्दश्च गत्यर्थात् 'गम्' धातोर्निष्पन्नः क्रिया-श्रयं वस्तुजातमभिधत्ते। तदयं निर्गलितोऽर्थः—संसारे समुपलभ्यमानं सकलमपि वस्तुजातं द्विविधम् 'स्थावरं' क्रियारहितम्, "जङ्गमं" क्रियासहितं च यत्क्रियारहितं तज्जडमित्युच्यते। क्रियासहितं च चेतनमिति वा चेतनाधिष्ठितमिति वा। एवं च सर्वा अपि क्रियाः साक्षात् परम्परया वा पुरुषे एव परिसमाप्यन्ते इति सुष्ठूक्तम् 'तस्मिन् क्रिया—सोऽधिष्ठानम्' इति। स्थावर-जङ्गमात्मकस्य लोकस्य द्वैविध्यात्, स्थावरस्य क्रिया-रहितत्वात्सर्वाः क्रिया ज्ञानपूर्विका जङ्गमे परिसमाप्यन्ते, जङ्गमश्चाऽयं 'पञ्चमहाभूतशरीरिसमवायः पुरुष' इति स एवाधिष्ठानं क्रियाणामिति।

तदेतत् स्थावरजङ्गमात्मकं जगत् पुनरपि विभजति 'द्विविधात्मक एवाग्नेयः सौम्यश्च'। अत्र पक्षे चिकित्सोपयोगिषड्रससम्पत्तिर्न साधु सिध्यतीत्यरुचेराह— "पञ्चात्मको वा" इति। पञ्चात्मकत्वम्, पञ्चभूतात्मकत्वम्। अत्र जङ्गमेष्वपि भेदानाह—'तत्र चतुर्विधो भूतग्रामः स्वेदजाण्डजोद्भिज्जजरायुसंज्ञः' इति।

ननु स्वेदजादौ भूतग्रामे येयं क्रिया समुपलभ्यते नासौ केवले चेतने, अपि तु जडचेतनसमुदायमाश्रयतीति कथं चेतने एव क्रियेत्यभिमन्यते इत्याशङ्कां मनसि कृत्वा उत्तरयति—"तत्र पुरुषः प्रधानम्, तस्योपकरणम् अन्यत्" इति।

सत्यं जडचेतनसमुदाय एव क्रियाकलाप उपलभ्यते, परमस्मिन् समुदाये ज्ञानेच्छाविशिष्टः पुरुष एव प्रधानम्, तत्प्रेरित एवायं जडवर्ग इङ्गति, चेष्टते, निमिषति च। तस्मात्पुरुष एव प्रधानम्। अन्यत्सर्वं तस्योपकरणम्। प्रधाने च व्यपदेशा भवन्तीति। जडमाश्रयन्त्यपि क्रिया प्रधाने पुरुषे एव प्रत्याय्यते इति पुरुष एवाधिष्ठानं सर्वासां क्रियाणां न त्वन्यदित्यभिप्रायवान् प्रकरणमिदमुपसंहरन्नाह—"तस्मात्पुरुषोऽधिष्ठानम्" इति।

महामहोपाध्यायश्रीगणनाथसेनमहाशयास्तु सुश्रुतस्य पाठमिमम् "अपपाठं" मन्वते। मयसूरनगरे सभापतिपदात्तैरस्यापपाठत्वं डिण्डिमघोषमुद्घोषितम्। एवं च तेषां सन्दर्भः, "तस्मिन् क्रिया, सोऽधिष्ठानम्, कस्मात्? लोकस्य द्वैविध्यात्; अत्र लोकस्य द्वैविध्यं पुरुषस्य क्रियाधिष्ठानत्वे हेतुरुपन्यस्तः। तत्र च तादृशहेतुतावच्छेदकत्वं नास्ति किमपि। किं बहुना, नायं हेत्वाभासोऽपि। सम्भाव्यते चेह अस्मद्गुरुपरम्परागतं (?) लोकस्य तद्विधेयत्वात् इति पाठः साधीयान् इति।"

वास्तविकं हेतुत्वं तु दूरापास्तम्; 'लोकस्य द्वैविध्यात्' इत्यत्र आभासमानमपि हेतुत्वं नास्तीति महाशयानामभिमानः। परं नाऽसौ पन्थाः प्रदर्शितो महाशयैर्येनास्याऽपपाठत्वमधिगच्छेम। यथा चास्य निर्बाधं साधकत्वं तथा प्रतिपादितमस्माभिः। 'स्थावर, जङ्गम' शब्दयोरवयवाऽर्थे विशिष्य साभिप्रायं ग्रन्थकारमनधिगत्यैव महाशयानां मनसि व्यामोहोऽयं समजनीति जानीमहे।

अथेदानीं महाशयानां 'गुरुपरम्परागतः पाठः' परीक्षणीयः। तत्र जिज्ञास्यम्, 'लोकस्य तद्विधेयत्वात्' इति यत्कल्प्यते तत्र तच्छब्देन किं परामृश्यते? प्रधानतया प्रक्रान्तः पुरुषः? उताहो सन्निहितो लोकः? यदि तु लोकः परामृश्यते तदा 'लोकस्य लोकविधेयत्वात् पुरुषः प्रधानम्' इत्येवोक्तं भवति। तदेतद् रिक्तं वचः, प्रमादविजृम्भितमात्रम्। नात्र शक्यं हेतुत्वमुपपादयितुम्। अथ चेत्तच्छब्देनानेन पुरुषः परामृश्यते, तदा 'लोकस्य पुरुषविधेयत्वात्, इत्यापन्नं भवति। अत्र प्रष्टव्यम्; किमसौ 'लोकः' पुरुषातिरिक्तः प्रतिपद्यते, तत्सहितो वा? यदि तु चेतनातिरिक्तं जडमात्रं जगत् लोकपदेनाभिप्रेयते तदा तस्य विधेयत्वं दुरुपपादम्। न खलु निर्जीवे जगति विधयः संप्रवर्तन्ते। न वै केनापि लोष्ठो वा पाषाणो वा इदमुच्यते, एवं कुरु, मैवं कार्षीरिति। न चायं 'लोक'शब्दो जीवविरहिते जने वा भुवने वा केनापि प्रयुज्यते 'मृतकलोकः' 'घटलोकः', 'पटलोकः' इति।

यदि तु पुरुषसहितं जडचेतनात्मकं लोकमधिकृत्य प्रवृत्तमिदं वाक्यम्, चेतनस्य च सशरीरस्य विधेयत्वम-

नेनोच्यते इति मन्यसे, तदा 'लोकस्य तद्विधेयत्वात्' इत्यत्र लोकशब्दस्यापि पुरुषोऽर्थः। तच्छब्देनापि च स एव परामृश्यते। एवं च 'पुरुषस्य पुरुषविधेयत्वात् पुरुषः प्रधानम्' इत्येवार्थः सम्पद्यते। स चायं पूर्ववत् अनर्थक एव। तस्मात् 'तद्विधेयत्वात्' इति कल्पनं जल्पनमात्रम्।

किञ्च 'लोकस्य द्वैविध्यात्' इत्यस्यैव स्पष्टीकरणमग्रिमे ग्रन्थे दृश्यते 'लोको हि द्विविधः' इति। यदि तु 'तद्विधेयत्वात्' इति पाठः स्यात्तदा अग्रिमोऽयं ग्रन्थो व्याकुप्येत। तिष्ठेच्च निरालम्बनोऽनन्वित एव त्रिशङ्कुवत्।

किञ्च 'स्थावरो जङ्गमश्च' इत्ययं प्रपञ्चोऽपि द्वैविध्यस्यैव प्रदर्शितो ग्रन्थकृता, न तु तद्विधेयत्वस्य। तन्महाशयैः कल्पिते पाठे कथमेतत्संगच्छेत।

किञ्च 'द्विविधात्मक एवाऽऽग्नेयः सौम्यश्च' इति यद् ग्रन्थकृताऽनुपदमेव द्विविधत्वं परामृष्टं तदपि द्वैविध्ये पूर्वमुक्ते एव संगच्छते। 'तद्विधेयत्वात्' इति पाठे तु सर्वमपीदमाकुलीक्रियेत।

किञ्च मूलसुश्रुतोक्तं पाठमधिक्षिपद्भिर्यदुक्तं महाशयैः- 'अत्र लोकस्य द्वैविध्यं पुरुषस्य क्रियाधिष्ठाने हेतुरुपन्यस्तः। तत्र च तादृशं हेतुतावच्छेदकत्वं नास्ति किमपि' इति। तदप्यविचारिताभिधानम्। न खलु हेतौ हेतुतावच्छेदकत्वं शक्यं कुत्राप्युपलब्धुम्। न खल्वन्यस्य धर्मा अन्यत्रोपलभ्यन्ते। न वै घटे रूपत्वं वा संख्यात्वं वा केनापि शक्यमनुसन्धातुम्। तद् यदि हेतौ हेतुतावच्छेदकत्वं नास्ति, किमत्र चित्रम्? हेतुतावच्छेदकत्वं हि हेतुतावच्छेदकस्य धर्मो न तु हेतोः। तत्कथमसौ हेतौ दृश्येत?

स्यादेतत्। इदं तु नो वक्तव्यम्। यादृश एव पुरुषो वेदेष्वधिकृतस्तादृश एवायुर्वेदे। 'ब्राह्मणो यजेत' इत्यादौ यथा ब्राह्मणत्वादिविशिष्टोऽध्यासवान् शरीरी अधिकारवान् भवति, तथैव चायं 'पञ्चमहाभूतशरीरिसमवायः पुरुषः' आयुर्वेदे वर्णितः। चरके च—

'खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः'

चेतना धातुरप्येकः स्मृतः पुरुषसंज्ञकः' १४। इति

(च० शा० १ अ०)

अत्र पूर्वार्धे वर्णित एव पुरुषश्चिकित्साधिकृतो, नापरः। यदुक्तं सुश्रुते—

"यदुक्तं पञ्चमहाभूतशरीरिसमवायः पुरुष इति सोऽयं कर्मपुरुषश्चिकित्साधिकृतः" १६।

(सु० शा० अ० १)

चरके च—"षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते, तद् यथा पृथिव्यापस्तेजोवायुराकाशं ब्रह्म चाव्यक्तमित्येते षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते।" ५. (च० शा० अ० ५)

किञ्च 'हिताहारोपयोग एक एव पुरुषवृद्धिकरो भवति' (च० सू० अ० २५) इति चरकवचनेन पुरुषस्य वृद्धिक्षयौ आहारनिमित्तावित्युक्तम्। उक्तं चेदं वेदेऽपि "पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्-अन्नात् पुरुषः" इति। एवञ्च वेदायुर्वेदयोरेकत्वमुक्तं भवति।

कालवशाद्वा, अस्माकं दुर्भाग्याद्वा, विदेशीयानामाक्रमणाद्वा सोऽयं ब्रह्मप्रोक्त आयुर्वेदो नाऽद्योपलभ्यत इति सर्वसंमतम्। न चाऽद्य तदर्थं कृतेन हाहाकारेणापि किंचित्सिध्यति। यं चाऽऽयुर्वेदमध्यापिताः सूत्ररूपं भरद्वाजधन्वन्तरिप्रभृतय इन्द्रेण, सोऽपीदानीं दुर्लभः। यत्तु सूत्ररूपस्याऽस्य व्याख्यानं कृतमात्रेयपुनर्वसुदिवोदासप्रभृतिभिस्तदिदानीमनेकसंस्कर्तृप्रतिसंस्कर्तृभावैः प्रभावितं चरकसुश्रुतरूपेणोपलभ्यते। परमस्माकं सौभाग्याद्वा भगवतोऽनुग्रहाद्वा मूलभूतमायुर्वेदीयं

तत्त्वं तु तदद्याप्युपलभामहे, यद्बलेनाद्याप्यायुर्वेदः संसारे प्रसरन्तीः सर्वा अपि चिकित्सापद्धतीरतिशेते। हेतुज्ञानं, लिङ्गज्ञानम्, औषधज्ञानं चेति स्कन्धत्रये स्वस्थातुरपरायणोऽयमायुर्वेदः परिसमाप्यते स्म। अद्यापि चायुर्वेदानुयायिनीं पद्धतिं विहाय न संसारे तादृशीं कामपि पद्धतिं पश्यामो या त्रिकालवर्तिनो हेतून्, तादृशानि लिङ्गानि तादृशान्येव चौषधजातानि समादधीत। भूते, भविष्यति च जातान् जनिष्यमाणान् वा रोगानधिगन्तुं तच्चिकित्सां वा निश्चेतुं वैज्ञानिकंमन्या अपि वाह्येन चाकचक्येन समुच्छलन्त्योपि च साम्प्रतिक्य उच्छृङ्खलप्रचाराश्चिकित्सापद्धत्यो वृद्धस्यास्याऽऽयुर्वेदस्याग्रे अन्धा इव, बधिरा इव, मूका इव च भवन्त्यो नववधूयन्ते। साम्प्रतिकानपि न सर्वान् रोगान् विवेक्तुममूः क्षमाः। अस्मिन्मार्गे च वेदबोधितस्त्रिधातुवादः परमं शरणमायुर्वेदानुयायिनाम्। विस्तरेण त्वेतद्विवेचितमस्माभिस्त्रिधातुवादे (अमुद्रिते)। उक्तं च चरके—"सर्वं एव विकारा निजा नान्यत्र वातपित्तकफेभ्यो निर्वर्तन्ते। यथा हि शकुनिः सर्वं दिवसमपि परिपतन् स्वां छायां नातिवर्तते; तथा स्वधातुवैषम्यनिमित्ताः सर्वे विकारा वातपित्तकफान्नातिवर्तन्ते" ॥१६॥ इति ॥ च० सू० अ० १९ ॥

त्रिकालवर्तिनां रोगाणां ज्ञानमधिकृत्य चेदमुच्यते चरकेण—

"त एवापरिसंख्येया भिद्यमाना भवन्ति हि।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः ॥४८॥
व्यवस्थाकरणं तेषां यथा स्थूलेषु संग्रहः।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥४९॥
विकारनामाऽकुशलो न जिह्रीयात्कदाचन।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ५०
स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून् ॥५१॥
तस्माद् विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥५२॥
यो ह्येतत् त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक्।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥५३॥"

च० सू० १८ अ०

त्रिकालवर्तीनि भेषजद्रव्याणि चाधिकृत्येदमुच्यते 'अनेनोपदेशेन नानौषधिभूतं जगति किञ्चिदुपलभ्यते तां तां युक्तिमर्थं च तं तमभिप्रेत्य' ॥ १२ ॥

च० सू० अ० २६ ॥

विस्तराद् विवेचितं चेदमस्माभिरायुर्वेदमहत्त्वे च, त्रिधातुवादे च। तदेवं भूतभविष्यद्वर्तमानकालवर्तिनां यावतां रोगाणां तद्धेतूनां तदुपायानां च ज्ञानं न शक्यमायुर्वेदादन्यत्रोपलब्धुम्। प्रत्यक्षानुमानमात्रोपजीविनां वैज्ञानिकंमन्यानां तु नात्राधिकारः। अधिक्रियन्ते तु तेऽत्र महर्षय आविर्भूतप्रकाशास्त्रिकालदर्शिनोऽतीन्द्रियातीताऽनागतज्ञाननिधयो 'येषां त्रिकालममलं ज्ञानमव्याहतं सदा'। तस्मादाप्तागमोऽत्र प्रधानं प्रमाणानाम्; तदनुगामिनी च प्रत्यक्षानुमाते। आप्तागमश्चायमायुर्वेद एव तदनुजीविनश्च निबन्धाः। यदुक्तं चरकेण—

"तत्राऽऽप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद् वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाऽऽप्तागमः"

च० सू० ११ अ०

एवं चाऽऽप्तागमस्यास्यायुर्वेदस्य वेदत्वं स्पष्टं सिध्यति। न च जगद्विधातारं जगन्नियन्तारं च विना

कोऽपि शक्नोति यावतो जागतान् भावानधिगन्तुं वा अधिकर्तुं वा । तत् त्रिकालवर्तिनां सकलजगदन्तर्गतानां च हेतुलिङ्गौषधानां ज्ञानपर्यन्तमिममायुर्वेदं को वाऽन्यो विधातुमीशीत विना भगवन्तं विश्वविधातारमिति स्पष्टमायुर्वेदस्य वेदत्वम् ।

एवं चात्र निबन्धे—

प्राचीनतमता वेदेष्वार्यधर्मादिमूलता ।
प्रत्यूहव्यूहविध्वंसे चायुर्वेदोपयोगिता ॥ १ ॥

द्रष्टृप्रवक्तृसामान्यं वेदायुर्वेदयोस्तथा ।
चरकोक्तं च वेदत्वम्, भ्रमष्टीकाकृतामपि ॥ २ ॥

सुश्रुतेन च संवादः, प्रयोगा वैदिकास्तथा ।
'व्याख्यास्याम' इति व्याख्या, सर्वज्ञत्वं च योगिनाम् ॥ ३ ॥

प्रावादुकमतानां च निरासस्तार्किकोक्तयः ।
वेदायुर्वेदयोरिष्टं यत्साम्यं पुरुषं प्रति ॥ ४ ॥

रहस्यं सुश्रुतोक्तीनाम्, अपपाठत्वविभ्रमः ।
आयुर्वैदिकपद्धत्यां विशेषश्चाप्तमानता ॥ ५ ॥

परमेशप्रकाशाच्चाऽऽप्यायुर्वेदस्य वेदता ।
एतत्सर्वं समासेन निबद्धं विबुधां मुदे ॥ ६ ॥



# असम्पूर्णः सम्पूर्णो वा भारतीयायुर्वेदः ।

( ले०:-श्रीज्ञानेन्द्रनाथसेनकविराजः, बी. ए. ऋषिकुलायुर्वेदीयकालेजाध्यक्षः, हरिद्वारम् )



भारतीयायुर्वेदः सर्वथाऽसम्पूर्ण इति वचनपारुष्यं सर्वदा श्रूयतेऽस्माभिः परतन्त्राधिकारेभ्यः पाश्चात्यविद्याभिमानिभ्यः। अतोऽयं मे समुद्यमः-असम्पूर्णश्चेद् भारतीयायुर्वेदः, तत्र के केंऽशाः पूर्त्तिसापेक्षाः-कथं वा ते पूरणीयाः-इति ।

प्राच्यप्रतीच्यायुर्वेदतन्त्रस्य मूलं भारतीयायुर्वेदः पूर्णतया मन्यते तावत् क्षुद्रबुद्धिना मया । यानि सन्त्यष्टाङ्गानि आयुर्वेदस्य शल्यशालाक्यादीनि, न तेभ्योऽतिरिक्तं किञ्चिद् भवितुमर्हति सम्भाव्यते वा । न चाप्यस्ति कस्मिंश्चिदायुर्विज्ञाने भारतीये उत पाश्चात्त्ये । एतत्वस्माकं महद् दुर्भाग्यं यद् विदेशिराजकीयसाहाय्याद् वयं सर्वथा वञ्चिताः। विज्ञानादिकम्(Science) सर्वमेव कर्मात्मकम्( Practical )। अतएव सर्वं तद् व्ययसापेक्षम् । विज्ञानादिकस्योन्नतिविधायकं साहाय्यं तु राजतो राजमात्रतो वा सम्भाव्यते । तत एव हि तत् प्रापणीयम् । मत्त उन्मत्तोऽपि स्वकीयं परकीयं वा विचारयति, का कथा राज्ञां राजामात्यानां वा । राजा चास्माकं परदेशितया तत्स्वदेशस्यायुर्विज्ञानस्यैव पक्षपाती । यत् किंचित् सम्भाव्यते साहाय्यं तत्सर्वमेव तस्य पाश्चात्त्यायुर्विज्ञानस्योन्नत्या एव व्यय्यते, न

च किंचिदप्यर्थजातं भारतीयायुर्वेदस्यार्थे प्राप्यते। न चैतत् किंचित् प्रकृतिविरुद्धमिति सूचितं पूर्वमेव। परिणामश्चास्य राजानुग्रहात् सर्वथा सर्वदा च वञ्चिता वयम्, भारतीयायुर्वेदश्च।

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥

इति यदुक्तं श्रीभगवता श्रीमद्गीतोपनिषत्सु, तत्तु सत्यतयात्र प्रत्यक्षीक्रियते।

राज्ञः प्रमाणाद् न केवलं तत्तद्देशीयाः पाश्चात्त्या राजमात्राः, अपि तु राजप्रसादलोलुपा भारतीया राजानो महाराजा राजन्या राजमात्रा वणिजश्च सर्वे एव पाश्चात्त्यायुर्विज्ञानस्यैव पक्षपातिनः संजाताः, भारतीयायुर्वेदस्य च विरुद्धाः। केचित्तत्र स्वेच्छातः स्वोपकारबुद्धिप्रचोदिताः, केचित्तानिच्छातोऽपि दैवकृताः।

भारतीयायुर्वेदे तु शल्यतन्त्रीयाः केचनांशाः पूर्त्तिसापेक्षा इति यदुच्यते, तत्तु न सम्यक्। अपि तु सर्वथा मृषावाद एव। परममेतत् सौभाग्यमस्माकं यदेतादृशे दुर्दिनेऽपि विद्यन्ते सत्यभाषिणः कृतज्ञाः केचन पाश्चात्त्या विद्वांसो यैरनुदिनमुच्चैर्विघोष्यते निर्भयमेतद्-यदायुर्वेदो भारतीय एव सर्वेषामपि पाश्चात्त्यायुर्विज्ञानानां मूलमिति। अत्र तु अमेरिकामहाप्रदेशान्तर्गत-फिलडिल्फियानगरवास्तव्याः डा० क्लार्कमहोदयाः (Dr. Clarke) एव प्रमाणम्। उक्तं हि तत्रभवद्भिरांग्लभाषायाम्-"चरकानुमता चिकित्सा प्रचाल्येत चेत्, मृत्युसंख्या नूनं जगति ह्रासमेष्यति, भविष्यति च शववहनदहनकृतां कर्मभारो लघीयान्"-इति।

डा० वाइज (Dr. Wise), डा० चार्ल्स (Dr. Charles), डा० हरनलि (Dr. Horneele) प्रभृतयो बहवोऽन्ये पाश्चात्त्या महात्मानो विद्यन्ते, यैर्हि पाश्चात्त्यायुर्विज्ञाने भारतीयायुर्वेदस्य प्रभावः पूर्णतयैवाङ्गीक्रियते, न च ते केभ्योऽपि विभीताः।

ये तु यूरोपीयचिकित्सिते जातपक्षपाताः इदानीन्तनानां वैद्यानां शल्यकर्मसु न्यूनतामवलोक्य अव्याहतार्षज्ञानदृशामस्माकं पूर्वाचार्य्याणां महर्षीणां शस्त्रकर्मविज्ञाने संशेरते, ते खलु प्रज्ञाभिमानिनो देवानांप्रियाः। तैस्तु कदापि न दृष्टोऽस्माकं भारतीयायुर्वेदः। न वा पठितो नाप्यालोचितो नापि परिश्रुतः। सुश्रुतसंहितायां शस्त्रकर्म त्रिशिष्यैवोक्तम्। मूढगर्भचिकित्सिते तावदाधुनिकाः पाश्चात्त्याः विज्ञानाभिमानिनो विशेषेण स्पर्द्धन्ते। तेषामवबोधायेदं वक्तुमुचितम्-यन्न तदप्यस्माकं पूर्वाचार्य्यैरविदितमासीत्। कुक्षिं पाटयित्वा शिशोरुद्धरणं (Cæsarean section) सुश्रुतेनैव सर्वतः प्रथममुपदिष्टम्। अत्रापि संशयं कुर्वतो जनस्य सुश्रुतसंहिताया अनवलोकनमेवात्मकृतं प्रमाणयते, न चानेनायुर्वेदस्य न्यूनता प्रमाणयते काचिदपि।

ये चाधुना पाश्चात्त्यायुर्विज्ञानीयशल्यतन्त्रस्य पक्षपातिनो भारतीयायुर्वेदस्य च निन्दकास्तेषामवबोधायेदं वक्तुमुचितम्, यत् पाश्चात्त्यायुर्विज्ञानं न केवलं कार्य्यतः, अपि तु शब्दतोऽपि यन्त्रशस्त्रादीनां नामकरणे भारतीयायुर्वेदस्यैवाधमर्णः। पाश्चात्त्यायुर्विज्ञानीयशल्यतन्त्रस्य Lion faced forech नामकं यन्त्रं भारतीयायुर्वेदे सुश्रुताद्युक्तात् सिंहमुखयन्त्रादभिन्नमेवेति निःशङ्कं वक्तुं पार्य्यते।

न च भारतीयायुर्वेदः शारीरकर्मविज्ञानविषये (Fhysiology) बाहुल्येनोन इति वाच्यम्। भेत्ता

हि भेद्यमन्यथा भिनत्तीति शास्त्रसिद्धान्तात् प्रत्यक्षदृष्टत्वाच्च ।

अयं भावः—न हि तत्र काचन न्यूनता विभावनीया । परमिह विषयविभागः प्रकारान्तरेण भेदवैचित्र्यमेव । विषयविभागकरणे तु कर्त्तुरेव प्रामाण्यम् । यावन्न कार्य्यहानिः, विषयाणामाधिक्यं न्यूनता वा, तावत्तु कर्त्ता यथाकथंचिद् विभावयितुं भेत्तुं च शक्नोति । न तेन किंचिल्लघुत्वं कर्त्तुर्विषयस्य वा भवति । अत्रापि श्रीभगवदुक्तं पूर्वोद्धृतं वाक्यं स्मरणीयम् ।

राजानुग्रहलाभादेव श्रेष्ठत्वं पाश्चात्त्यायुर्विज्ञानस्य । तत्र हि यदुक्तं किमपि, तत् सर्वं कार्मुकमुपादेयं च, हेयमितरद्-इति निश्चितसिद्धान्तैः पुरुषैः यत् किमपि तन्नानुकरोति, यद्वा तेन सार्धं न संवदति—तत्सर्वं हेयमिति राज्ञा राजामात्यैः तदनुग्राहितैश्च मन्यते । अन्यैरपि सर्वैः शिक्षितम्मन्यैराधुनिकैस्तदेवानुमन्यत इति । पूर्वं तु यदा आयुर्वेदो राजानुग्रहे आसीत्, तदास्यासीत् सर्वविधैवोन्नतिः । मूढगर्भ-विसर्प-दुष्टव्रण-विषादिचिकित्साश्च पूर्णतया अधीताः, अवगताः प्रचालिताश्चास्माकं पूर्वपितामहैः प्राणाचार्यैर्भिषग्वरैः ।

इदानीन्तने काले न यदि तादृशानां वैद्यानां सद्भावो न तत्रास्माकमपराधलेशोऽपि विद्यत इति वक्तुमशक्यत्वेऽपि प्राधान्येनात्र नृपतिरेवापराध्यति; नृपतेरनादरेणैव विज्ञानादीनां शास्त्राणां च विनाश इति तु वचनमविसंवादि ।

कालधर्मोऽप्येतादृश एव ।

" अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा" ॥

परमिह न केवलमुदासीनाः राजपुरुषाः, अपि बहुधा विदधति विरोधमायुर्वेदस्य, किन्तु बहुधा कृतवत्स्वपि विरोधं राजपुरुषेषु यदि जीवत्यायुर्वेदः, स ह्येतस्य महिमा महानिति निर्भयं वक्तुं पार्य्यते । ( cf. Survival of the fittest ) । शर्मन्यादिदेशेषु ( Germany etc. ) यदिदानीं शल्यतन्त्रादीनां प्राधान्यं दृश्यते, न तत्रापि किंचिद् दुःखकारणमस्माकम् । न वापि विस्मरणीयं केनापि, तत्रापि भारतीयायुर्वेद एव मूलमिति ।

अत एवाशङ्कितं वक्तुं पार्य्यते-यद् न भारतीयायुर्वेदे केचनांशाः पूर्त्तिसापेक्षाः, अपि तु भारतीयायुर्वेदः स्वयमेव सम्पूर्णः, तदितरनिखिलायुर्विज्ञानानां च मूलम् । केवलन्त्वत्र राजानुग्रह एवापेक्ष्यते तद्विकाशार्थम् । प्रतिश्रुतं च सम्यगत्र तत्रभवता आत्रेयेण महर्षिणा—"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् " इति ।

॥ शम् ॥



# "आयुर्वेदस्याथर्ववेदे मूलम्"

लेखकः—जगन्नाथशर्मा वाजपेयी "आयुर्वेदाचार्यः" बी० ए०
प्रो० आयुर्वेदविद्यालय, हिन्दूविश्वविद्यालय 'काशी'



सिद्धान्तोऽयमपूर्वैः पूर्वतरैरप्यायुर्वेदाचार्यैर्महर्षिभिः स्वीकृतपूर्वः! महर्षिणाग्निवेशेन "तत्र भिषजा पृष्टेनैवं चतुर्णामृग्यजुःसामाथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या, वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्साम्प्राह" इति वदता केवलं स्वीकृतोऽयं विषयोऽपि त्वथर्ववेदस्य भक्त्याश्रयत्वेन सर्वदाऽभ्यसनार्हत्वमुपदर्शितम्। तथैव महर्षिः सुश्रुतोऽपि "आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य" इत्यादि निर्दिशन् अथर्ववेदस्यायुर्वेदमूलत्वं स्वीकृतवान्।

तर्ककर्कशविचारचतुराणामाधुनिकानां विदुषान्न कश्चनापि विषयस्तावत्सन्तोषावहो यावत् प्रत्यक्षेण न साध्यते युक्त्या वा। अथर्ववेदस्यायुर्वेदमूलत्वमुभयोरपि पर्य्यालोचनयैव शक्यते निर्णेतुम्। परञ्च साम्प्रतं सत्यामप्यायुर्वेदस्याध्ययनाध्यापनपरिपाट्यामथर्ववेदस्य सा लुप्तप्रायैव। अतश्चोभयोरसुकरा सन्तुलनापि, तदर्थञ्चायुर्वेदवदथर्ववेदस्याप्यध्ययनमावश्यकम्, तत्र चान्वेषणशालिनां विदुषां संजागृयाद्दुत्कण्ठेत्येतदर्थमेवायमुपक्रमः।

प्रायः सर्वेषामप्यायुर्वेदविषयाणान्तत्राऽवाप्यते सूत्ररूपेण निर्देशः। अष्टावपि शल्य-शालाक्य-कायचिकित्साप्रभृतीन्यायुर्वेदाङ्गानि तत्र समासेन समुपलभ्यान्यविभक्तानि।

शल्यचिकित्साया निर्देशस्तत्र मूत्रकृच्छ्रामयाक्रान्तपुरुषाश्वासकैरुपलभ्यते मन्त्रैस्तथाहि—

अथर्व, काण्ड १, अ० १, सू० २,

"प्रतेभिनद्मि मेहनं वर्त्रं वेशन्त्या इव,
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम्।
यदान्त्रेषु गवीन्योर्यद्वस्तावधिसंश्रितम्,
एवाते मूत्रं मुच्यतां बहिर्बालिति सर्वकम्।
विषितं ते वस्तिबिलं समुद्रस्योदधेरिव,
एवोने मूत्रं मुच्यतां बहिर्बालिति सर्वकम्।

(लेखबाहुल्यभिया तत्तत्प्रकरणोक्तानाङ्केषांचित्परमोपयोगिनामेवोल्लेखो मन्त्राणाम्, तत्राप्यत्यन्तकठिनानामेव शब्दानान्निर्दिष्टा भविष्यन्त्यर्थास्तथा चात्र) वर्त्रम्=मार्गम्, वेशन्त्याः=आपः, बालिति मूत्रगमनस्यानुकरणम्, गवीन्योरिति मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ (Ureters) विषितम्=विमुक्तम् मूत्रनिःसरणयोग्यमित्यर्थः।

विनियोगे चास्य सूक्तस्य सायनाचार्येण कण्ठरवेणैवोपदेशः कृतः शल्यचिकित्सायास्तथाहि—

"विद्या शरस्येति तृतीयसूक्तेन मूत्रपुरीषनिरोधे हस्त्यश्वादियानारोहणं शरविसर्जनम्—शरेण मूत्रनालविदारणं लोहशकलस्य मूत्रद्वारे प्रवेशनमित्येवमादीन्यपि सूक्तोक्तप्रकारेण व्याधितस्य कुर्यादिति।"

शालाक्यतन्त्रस्य निर्देशश्च तत्राञ्जनप्रशंसया, तथाहि—

अथर्वकाण्ड ४ अ० २ सू० ६

"नैनं प्राप्नोति शपथो (परकृतःशापः) न कृत्या,

नाभिशोचनम्, नैनं विष्कन्ध—( विघ्नजात )—मश्नुते यस्त्वा बिभर्त्याञ्जन ।

असन्मन्त्राद् दुःष्वन्याद्दुष्कृताच्छमलादुत,
दुर्हार्दश्चक्षुषो घोरात्तस्मान्नः पाह्याञ्जन ।"

कायचिकित्सावर्णनन्तत्र बहुत्र वर्तते, तच्च विभिन्न-विषयैरेव भविष्यति सुस्पष्टमिति पृथङ् नोच्यते ।

भूतविद्या तु तत्र प्राधान्येनोपदिष्टा तस्या निर्देशकाः कतिचिन्मन्त्रा द्रष्टव्यास्तथाहि—

अथर्वकाण्ड १ अ० २ सू० ७

"विलपन्तु (परिदेवनं कुर्वन्तु) यातुधाना अत्रिणो ( भक्षकाः ) ये किर्मादनः ( स्वप्रवृत्तये कालान्वेषणं कुर्वन्तः ) अथेदमग्ने, नो हविरिन्द्रश्च प्रतिहर्यतम् ( आगच्छतम् ) पश्यामि ते वीर्यं जातवेदः प्रणो ब्रूहि यातुधानान् नृचक्षः ( सर्वदर्शनशक्तः ) त्वया सर्वे परितप्ताः पुरस्तात् न आयन्तु प्रब्रुवाणा उपेदम् ।

आरभस्व ( राक्षसापनोदनकर्म कर्तुमुपक्रमस्व ) जातवेदोस्माकार्थाय जज्ञिषे ( जातवानसि )

दूतो नो अग्ने भूत्वा यातुधानान् विलापय ।
त्वमग्ने यातुधानान् उपबद्धां इहावह,
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु ।"

कौमारभृत्यं सगर्भाधानन्तत्रास्त्युपवर्णितन्तथाहि—

अथर्वकाण्ड ६ अ० २ सू० ११

पुंसि वै रेतो भवति तत् स्त्रियामनुषिच्यते
तद्वै पुत्रस्य वेदनं तत्प्रजापतिरब्रवीत् ।
शमीमश्वत्थ आरूढस्तत्र पुंसवनं कृतम्
तद्वै पुत्रस्य वेदनं तत्स्त्रीष्वाभरामसि ॥

प्रसूतितन्त्रञ्च—

चतस्रो दिवः प्रदिशश्चतस्रो भूम्या उत, देवा गर्भं समैरयन् तं व्यूर्णवन्तु, ( विगतावरणं कुर्वन्तु, ) सूतवे ( प्रसवितुम् । )

विते भिनद्मि मेहनं वियोनिं विगवीनिके, विमातरं च पुत्रं च विकुमारं जरायुणाव जरायु पद्यताम् ।
यथा वातो यथा मनो यथा पतन्ति पक्षिणः,
एवा त्वं दशमास्य साकं जरायुणा पतात्र जरायु पद्यताम् ॥

बालरक्षा च यथा—

यस्ते स्तनः शिशयुः ( शिशुपोषकः ) यो मयोभूः सुम्नयुः ( विशिष्टसुखकरः ) सहवो ( सर्वैः स्तूयमानः ) यः सुदत्रः ( कल्याणकारकः ) ।

येन विश्वा ( सर्वाणि ) पुष्यसि वार्याणि ( वरणीयानि ) सरस्वति तमिह धातवे ( धातुं पातुं योग्यम् ) कः ( कुर्वित्यर्थः ) ॥

विषतन्त्रसूचका मन्त्रास्तथाहि—

अथर्वकाण्ड ६ अ० ६ सू० ५६

मा नो देवा अहिर्वधीत् सतोकान् ( सहापत्यान् ) सह पूरुषान् । संयतं ( अहेरस्य ) न विष्पाद् ( विश्लिष्टं भवति ) व्यात्तं ( विवृतम् ) न संयमन्नमो देवजनेभ्यः ।

नमोस्त्वसिताय ( कृष्णवर्णाय सर्पाधिपतये ) नमस्तिरश्चिराजये । स्वजापत्रभ्रवे नमो नमो देवजनेभ्यः ॥

अथर्वकाण्ड ७ अ० ५ सू० ५८

तिरश्चिराजे रसितात् पृदाकोः ( सर्पविशेषात् ) परिसम्भृतम् तत्कंकपर्वणो विषमियं वीरुदनीनशत् ॥

इयं वीरुन्मधुजाता मधुश्च्युन्मधुला मधूः ( मधुकाख्यौषधिः ) सा विह्रुतस्य ( विषस्य ) भेषज्यथो मशकजम्भनी ( मशकानां हिंसित्रीत्यर्थः )

अदन्ति त्वा पिपीलिका विवृश्चन्ति मयूर्यः ।
सर्वे भल ब्रवाथ शार्कोटमरसं विषम्,
य उभाभ्याम्प्रहरसि पुच्छेन चास्येन च
आस्येन ते विषं किमु ते पुच्छे धावसत् ॥
( ते मुखस्यैव विषन्नष्टं किम्पुनः पुच्छस्येत्यर्थः )

वाजीकरणतन्त्रञ्च—

अथर्वकाण्ड ६ अ० १० सू० १०१

आवृषायस्व ( बद्धेनार्कमणिना बहुरेतस्को भवेदिति सायनः ) श्वसिहि वर्धस्व प्रथयस्व ( स्थूलावयवो भव ) च। यथाङ्गं वर्द्धतां शेपस्तेन योषितमिज्जहि। (गच्छेत्यर्थः)

येन कृशं वाजयन्ति येन हिन्वन्ति (प्रीणयन्ति) आतुरम्। तेनास्य ब्रह्मणस्पते धनुरिवातानया पसः। ( मन्त्रराशेः पालक देव ! तेन रसविशेषेणास्य वाजीकरणकामस्य पसः पुंस्यजननं धनुरिवातानयोन्नमितं कुर्विति सायनः )

रसायनतन्त्रञ्च—

अथर्वकाण्ड ७ अ० ३ सू० ३३

उप प्रियं पनिपूर्तं ( स्तूयमानम् ) युवानमाहुतीवृधम् ( अग्निम् ) अगन्म ( उपचरेम ) बिभ्रतो नमो ( नमस्कारं कुर्वतः ) दीर्घमायुः कृणोतु मे ।

सं मा सिञ्चन्तु मरुतः सं पूषा ( पोषकः सूर्यः ) सं बृहस्पतिः ( बुद्धिदेवता ) सं मायमग्निः सिञ्चतु पूजया च धनेन च दीर्घमायुः कृणोतु मे ॥

"निघण्टुना विना वैद्य" इति लोकप्रसिद्धया निघण्टोरायुर्वेदस्य प्रधानाङ्गत्वमुपदर्शितम् । निघण्टुश्चौषधनामगुणाख्यापको ग्रन्थः । औषधनामगुणनिर्देशोऽथर्ववेदेऽप्युपलभ्यत एव। तत्रस्थौषध्युत्पत्तिवर्णनमेव विशेषेण प्रेक्षणीयम्—तथाहि—

अथर्वकाण्ड ११ अ० २ सू० ६

यदा प्राणो, अभ्यवर्षीद् वर्षेण पृथिवीं महीम् । ओषधयः प्रजायन्तेऽथो याः काश्च वीरुधः ॥

सन्ति च तत्र बहूनान्द्रव्याणां गुणा वर्णितास्तेषामल्पीयसामेव निदर्शनम्भविष्यत्यलं सुधियां सन्तोषाय ।

अतश्चापामार्गवर्णनं यथा—

अथर्वकाण्ड ४ अ० ४ सू० १८

अपामार्गोऽपमार्ष्टु क्षेत्रियं ( सहजं रोगम् ) शपथश्च ( शत्रुप्रदन्तः शापश्च ) यः । अपाह यातुधानीरपसर्वा अराय्यः ( रक्षःपिशाचादीन् ) रोगोत्पादकजीवाणूँश्च नाशयेत्यर्थः ।

क्षुधामारं [ भस्मकरोगं ] तृष्णामारं [ तृष्णारोगम् ] अगोताम् [ मूकत्वम् ] अनपत्यताम् अपामार्ग त्वया वयं सर्वन्तदपमृज्महे ।

लाक्षावर्णनं यथा—

अथर्वकाण्ड ४ अ० ३ सू० १२

रोहिण्यसि [ लोहितवर्णासि ] रोहिणि [लाक्षे] अस्थ्नश्छिन्नस्य रोहिणी। रोहयेदमरुन्धति। [ अरुन्धतीति रोधनशीले ]

पिप्पलीवर्णनं यथा—

अथर्वकाण्ड ६ अ० ११ सू० १०९

पिप्पली क्षिप्तभेषज्युतातिविद्धभेषजी ।

ता देवाः समकल्पयन्नियं जीवितवा अलम्, पिप्पल्यः समवदन्नायतीर्जनन्या दधि ।

यं जीवमश्नवामहै न स रिष्याति [नश्यति] पूरुषः ॥

गुग्गुलुवर्णनं यथा—

अथर्वकाण्ड १९ अ० ५ सू० ३८

न तं यक्ष्मा अरुन्धते नैनं शपथो अश्नुते ।

यं भेषजस्य गुग्गुलोः सुरभिर्गन्ध अश्नुते ॥

विष्वञ्च [ परित ] स्तस्माद् यक्ष्मा मृगा अश्वा इवेरते । यद् गुग्गुलु सैन्धवं यद् वाप्यासि समुद्रियम्, उभयोरग्रभं नानास्मा अरिष्टतातये । आयुर्वेदीयाधारभित्तिरूपस्य त्रिदोषसिद्धान्तस्यानुगमस्तत एव कार्यः । तथाहि—

अथर्वकाण्ड १ अ० ३ सू० १२ मं० ३

मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य यो अभ्रजा [ अपो बिभर्तीत्यभ्रं प्रवर्षको मेघसंघस्तस्माज्जायते। प्रवर्षणोदकसंसर्गेणोत्पद्यत इति अभ्रजाः]

श्लेष्मरोगः ] वातजा यश्च शुष्मो [ शोषकः पित्तविकारजनितः ] वनस्पतीन् सचतां पर्वतांश्च ॥"

अस्य शिरोरोगः कासस्तथा प्रतिपर्वं प्रविष्टोऽन्योऽपि यः कश्चिच्छ्लेष्मवातपित्तजो रोगोऽस्ति स एनं विहाय काननस्थान् वृक्षान् मनुष्यसंचाररहितान् शिलोच्चयाँश्च गच्छत्वित्यर्थः ।

पाश्चात्यवैज्ञानिकैः समुद्घोषितस्य क्रिमिविज्ञानस्य [जीवाणुविज्ञानस्य च] व्याख्यानं तत्र विस्तरेण वर्तते । तथा हि—

अथर्वकाण्ड २ अ० ५ सू० ३१

"दृष्टमदृष्टमतृह [ हन्मि ] मथो कुरूरु [ अन्तरवस्थितं क्रिमिकुलम् ] मतृहम् ।

अल्गण्डून्त्सर्वाञ्छलुनान् [ तन्नाम्नः क्रिमीन् ] वचसा [ मन्त्रेण ] जम्भयामसि [ नाशयामः ] ॥"

"ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्वन्तः । ये अस्माकं तन्व [ तनूः ] माविविशुः सर्वं तद्धन्मि जनिम् [ उत्पत्तिम् ] क्रिमीणाम् ।"

प्रत्यङ्गं क्रिमीणां सञ्चारस्तत्र दृश्यते वर्णितस्तथा हि—

अथर्वकाण्ड २ अ० ६ सू० ३३

"हृदयात्ते परि क्लोम्नो हलीक्ष्णात् ( फुप्फुसात् ) पार्श्वाभ्याम् । यक्ष्मं मतस्नाभ्यां ( वृक्काभ्याम् प्लीह्नो यक्न ( यकृतः ) स्ते विवृहामसि ॥"

"आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो ( बृहदन्त्रात् ) रुदरादधि । यक्ष्मं कुक्षिभ्यां प्लाशेः ( उपान्त्रात् ) नाभ्या विवृहामसि ॥"

"अङ्गे अङ्गे, लोम्नि लोम्नि यस्ते पर्वणि पर्वणि । यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीबर्हेण ( तदुक्तसूक्तेन ) विष्वञ्चम् ( सर्वावयवव्याप्तम् ) विवृहामसि ( विनाशयामः ) ।"

वैज्ञानिकैरपि सूर्यरश्मीनां क्रिमिनाशकत्वं स्वीक्रियते प्रशस्ततमत्वन्तथैवाथर्ववेदेऽपि दृश्यते तथा हि—

अथर्वकाण्ड २ अ० ६ सू० ३२

"उद्यन्नादित्यः क्रिमीन् हन्तु निमोचन् ( अस्तंगच्छँश्च ) हन्तु रश्मिभिः । ये अन्तः क्रिमयो गवि ( गोशरीरे ) ॥"

तत्रास्ति बहूनां व्याधीनां चिकित्सितं वर्णितम् । ततश्च केवलं राजयक्ष्मविषयक एक एवोद्ध्रियते मन्त्रः । तथाहि—

अथर्वकाण्ड ३ अ० ३ सू० ११

"मुञ्चामि त्वा हविषा ( हविष्यान्नेन ) जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।

ग्राहिः ( ग्रहणशीलो व्याधिः ) जग्राह यद्येतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥"

शेषश्च यक्ष्मिणामाश्वासनाय लिखितेन मन्त्रेण पूर्यतान्तथा हि—

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥

॥ शम् ॥

# आयुर्वेदस्याथर्ववेदे मूलम् ।

( निबन्द्धा—श्रीहनुमत्प्रसादशास्त्री, साहित्याचार्यः, आयुर्वेदविशारदः,
प्रिं०—श्रीहरनन्दराय—रूइयासंस्कृतकालेज, रामगढ़-सीकर )



**ॐ ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।**
**वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ अथर्व० १-१-१-१ ।**

वेदो हि भगवान् त्रिकालाबाधितज्ञानराशिर्दयामयस्य निःसीमदयाया आदिस्रोतो भारतीयार्याणां सौभाग्यभूमा कश्चित् । यदिदमनादिनियनं शब्दतत्त्वात्मकमक्षरं ब्रह्मार्थभावेन विवर्त्तते; यतश्चेयं जगतः प्रक्रिया, सोऽयमेव वेदो यः सृष्टितः प्रागेव ब्रह्मादिमहामहर्षिपरम्परया प्रादुर्भूय, भूतं भव्यं भविष्यच्च सर्वं प्रसाधयन्, प्रत्यक्षेणानुमित्या वापि दुर्वेदं वेदयन्, स्वतः-प्रमाणत्वेन प्रमाणान्तरानपेक्षः प्रचण्डमार्त्तण्डवत्तात्पीति। जगति दृष्टानि श्रुतानि वा निखिलानि ज्ञानानि, विज्ञानानि, शास्त्राणि, च निखिलाश्च विद्या गिरिराजादिव सरितोऽस्मादेव प्रसस्यन्दिरे । मन्त्रब्राह्मणात्मकतया द्विधाशरीरोऽप्ययं मन्त्रशरीरे ऋग्यजुःसामाथर्वतया चातुर्विध्यं भजते, यदीयेषु चतुर्षूपवेदेषूपलभ्यमान उपवेदो हेतुलिङ्गौषधज्ञानः स्वस्थातुरपरायणो निखिलसुरनरतिर्यगायुरारोग्यप्रदः पुण्यः शाश्वतिकश्चायुर्वेदो नाम। योऽयं **"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"** इति गौतमोक्तसूत्रदिशा वेदस्यापि प्रामाण्यं निर्वहन् वेदवदेव ब्रह्मादिप्रवक्तृकत्वात्तद्वदेव माननीयः ।

स चायुर्वेदः कस्योपवेद इति विचारणायां विप्रवदन्ते वैद्याः; ऋग्वेदस्योपवेद इति केचित्, अथर्ववेदस्योपवेद इति चापरे। तदेवं विकल्पे स्वयमयमायुर्वेद आत्मानं यदीयमुपवेदं वेद तदेव प्रमाणं स्यात् । तत्र प्रधानायामार्षसंहितायां चरके सूत्रस्थानेऽर्थे दशमहामूलीयाध्याये भगवान्पुनर्वसुरात्रेय आयुर्वेदविदो लक्षणं विनिर्दिश्य— **"तत्र चेत्प्रष्टारः स्युः-चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः?"** इत्याशङ्क्य **"तत्र भिषजा पृष्टेनैवञ्चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या। वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह। चिकित्सा चायुषो हितायोपदिश्यते"** इति सभक्तिकं स्वस्याथर्ववेदसेवित्वं ख्यापयति । सुश्रुतसंहितायां च सूत्रस्थानीये वेदोत्पत्त्यध्याये भगवान् धन्वन्तरिः सुश्रुताय-**"इह खल्वायुर्वेदमुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान्स्वयम्भूः ।"** इति सन्दर्भेणाऽऽत्मनोऽथर्ववेदानुयायित्वं समुपदिदेश । तदेवमायुर्वेदस्याथर्ववेदोपवेदत्वे प्रौढप्रमाणनिर्व्यूढे न कस्यापि विमतेः संशीतेर्वा लेशः स्यात् । येषां तु **"त्रय्युपसंहारोऽथर्ववेदः"** इति मतं, तेषामृग्वेदोपवेदताऽप्यायुर्वेदस्य न विरुध्यते ।

वस्तुतस्तु कृत्स्नोऽप्ययमथर्ववेद आमूलचूलमायुर्वेद-तत्त्वैरोतप्रोतः केवलमायुर्वेद एव। न ह्यनेन प्रायः— **"शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य, विशेषेण यौवनवतः, समर्थानुगतबलवीर्ययशःपौरुषपराक्रमस्य, ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये वर्त्तमानस्य, परमर्द्धिरुचिरविविधोपभोगस्य, समृद्धसर्वारम्भस्य, यथेष्टविचारिणः सुखमायुरुच्यते ।"** इति भगवच्चरकोपदिष्टस्य सुखायुषः सम्पादनमन्तरान्यत् किञ्चिद्विधीयते। द्विविधाः खलु व्याधयः-आहारविहारादिनिमित्ता अन्यजन्मपापनिमित्ताश्चेति। तत्राहारविहारादिनिमित्तानामथर्ववेदोक्तचिकित्सया प्रशमनम्, पापनिमित्तानां त्वाथर्वणिकैर्होमबन्धनपायनादिभिर्भैषज्यकर्मभिरुपशमनम्। अथर्ववेदे कानिचिदेव सूक्तानि विहाय शिष्टानि प्रायः सर्वाण्येवंविधचिकित्सितोपदेशकान्येव सन्ति, येषां तत्र तत्र कर्मसु प्रयोगो महामुनिना कौशिकेन सूत्रितः सायणेन च भगवता स्वीये वेदार्थप्रकाशभाष्ये विशदीकृतः। येषां तु न तथा प्रयोग उपदिष्टस्तेषामपि **"औषधिवनस्पतीनामनुक्तान्यप्रतिषिद्धानि भैषज्यानामंहोलिङ्गाभिः"** इति (कौ० ४-८) सूत्रेण **"स नो मुञ्चत्वंहसः"** इत्यादिपापनिवृत्तिप्रतिपादनपराणां मन्त्राणां सर्वत्र भैषज्यकर्मणि विनियोगः सूचितः। तदेवं सिद्धेऽथर्ववेदस्यायुर्वेदमहारत्नाकरत्वे तदुपवेदत्वेन समुपलभ्यमानस्यायुर्वेदस्य रत्नानां कुत्र कुत्र किं किं मूलमित्येवास्मद्विवेचनाया विषयः।

आयुर्वेदस्य ह्यात्रेयसंप्रदायबहुमतान्यङ्गान्यष्टौ, तद्यथा-कायचिकित्सा, शालाक्यम्, शल्यापहर्तृकम्, विषगरवैरोधिकप्रशमनम्, भूतविद्या, कौमारभृत्यकम्, रसायनानि, वाजीकरणमिति। तानि चैवं विवृतानि बोद्धव्यानि-

**१-कायचिकित्सा**—कायः सकलं शरीरं तस्य चिकित्सा, किंवा—कायति शब्दं करोतीति कायो जाठराग्निस्तस्य चिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहातिसारादीनामुपशमनम्।

**२-शालाक्यम्**—शलाका पटलवेधनी, तस्याः कर्म शालाक्यम्, तत्प्रधानमङ्गं शालाक्यं नाम विभिन्नधातुनिर्मिताभिर्विविधौषधसंस्कृताभिश्च शलाकाभिरूर्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणशिरःकपालादिसंश्रितानां व्याधीनामुपशमनम्।

**३—शल्यापहर्तृकम्**—शलनं शलो हिंसा, तस्य निमित्तं संयोगः शल्यम्, तदपहर्तृकं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावदुष्टव्रणान्तर्गर्भशल्योद्धरणं यन्त्रशस्त्रक्षाराग्निप्रणिधानं च।

**४—विषगरवैरोधिकप्रशमनम्**—विषं स्थावरं जङ्गमं चेति द्विविधम्। तत्र स्थावरं कालकूटहलाहलादिकं मूलपत्रपुष्पत्वक्क्षीरधात्वादिभेदेन दशविधम्, जङ्गमन्तु सर्पवृश्चिकादीनां दृष्टिनिःश्वासादिभेदेन षोडशविधम्। गरः कालान्तरप्रकोपि विषम्। वैरोधिकं संयोगविरोधादिना समुत्पन्नम्। तदेतेषां सर्वविधानां लक्षणप्रभावादिज्ञानपुरःसरं भेषजैर्मणिमन्त्रौषधादिभिश्च चिकित्सनं विषगरवैरोधिकप्रशमनमगदतन्त्रं नाम।

**५—भूतविद्या**—देवासुरगन्धर्वयक्षरक्षःपिशाचपितृनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिमणिमन्त्रादिभिरुपशमनम्।

**६—कौमारभृत्यकम्**—गर्भात्प्रभृति तद्रक्षा, सुखप्रसवः, जातस्य कुमारस्य पोषणम्, स्तन्यदुष्टिनिराकरणम्, ग्रहादिप्रशमनं च।

**७—रसायनानि**—रसादिशुक्रान्तधातूनामाप्यायनानि वयःस्थापनान्यायुर्मेधाबलवर्धनानि च।

**८—वाजीकरणम्**—अल्पदुष्टक्षीणशुष्करेतसामाप्यायनं स्त्रीषु वाजिवत्सामर्थ्यस्योत्पादनं च।

तदेवं निरूपितानामायुर्वेदस्य प्रायोऽष्टानामेवा-

ज्ञानां मूलमथर्ववेदे समुपलभ्यते, यत्प्रकाशाय संक्षेपतः किञ्चित्प्रयत्यते। तत्र प्रथमं कायचिकित्सायाम्—स्वस्थस्य स्वास्थ्यसंरक्षणम्, अस्वस्थस्य तु नियतपरिमाणावस्थायिनां वातपित्तकफानां त्रयाणां रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणां च सप्तानां शरीरधातूनां मिथ्याहारविहारादिभिः कर्मजैर्वा दोषकलापैर्वृद्ध्या ह्रासेन वा विकृतानां दोषतां दूष्यतां चापन्नानां कर्षणबृंहणाख्येन द्विविधेन चिकित्सितेन साम्यसम्पादनद्वारा स्वास्थ्यसंजननमेव मुख्यः सर्वमान्यश्चायुर्वेदसिद्धान्तः। तदुक्तम्—**"विकारो धातुवैषम्यं धातुसाम्यमरोगता।" "स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान्। क्षपयेद्बृंहयेद्वापि दोषधातुमलान् भिषक्।", "याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम्।"**—इत्यादि। वातपित्तकफानां रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणां च आब्रह्मस्तम्बपर्यन्तं स्थावरजङ्गमात्मकभूतजातेषु यथायथं सर्वत्रावस्थानं तद्धारणाद्धातुत्वं च विख्यातं विद्वानबहुमतं च; तेषां साम्ये स्वपरिमाणावस्थायित्व एव च बलं स्वास्थ्यं च, अन्यथा तु रोगोऽस्वस्थता च। तदेतत्सर्वं चिकित्सामूलसूत्रमथर्ववेदस्य प्रारम्भमन्त्र एव प्रार्थनाविधया सूक्ष्मं संसूच्येश्वरेणास्यायुर्वेदमहारत्नाकरता सुष्ठु प्रख्यापिता। तथा चायं मन्त्रो माङ्गलिकतया मुखे धृतो व्याख्यायमानो निभाल्यताम्—"ये=लोकवेदप्रसिद्धाः, त्रिसप्ताः-त्रयो वा सप्त वा त्रिसप्ताः=वातपित्तकफात्मकास्त्रयो रसासृङ्मांसमेदोऽस्थिमज्जशुक्ररूपाः सप्त च, परियन्ति=आकीटपिपीलकं हिरण्यगर्भावधि प्रतिशरीरं यथोचितं पर्यावर्त्तन्ते, किं कुर्वाणाः? विश्वा=विश्वानि सर्वाणि यथायथशरीरसंनिवेशोचितानि रूपाणि=प्रतिनियताकारान् जगदनुग्रहार्थं बिभ्रतः=धारयन्तः; यद्वा-रूप्यन्त इति रूपाणि=चेतनाचेतनात्मकानि वस्तूनि, तानि सर्वाणि बिभ्रतः=स्वसाम्ये नियते परिमाणे च स्थिताः पोषयन्तः, अत एव ते धारणाद्धातव इत्युच्यन्ते। वाचस्पतिः—वाचः=वेदात्मिकायाः पतिः=पालकः स्वामीश्वरस्तेषाम्=प्रागुदीरितानां त्रिसप्तानां बला=बलानि तत्तदसाधारणसामर्थ्यानि, मे=तत्फलार्थिनो मम तन्वः=तन्वाः शरीरस्य, अद्य=इदानीं प्रार्थनाकाले दधातु=विदधातु करोत्वित्यर्थः। येनेदं निखिलं जडजङ्गमात्मकं जगत् सृष्टं स एव **"प्रथमो दैव्यो भिषक्"** तद्रक्षणमप्युचितं वेदेति तत्प्रार्थनया मन्त्रेऽस्मिन्नपरिसंख्येयानां शारीरमानसानां व्याधीनां दोषमूलिका चिकित्सा कियन्मधुरं वर्णिता इति सुधियः स्वयं कणेहत्य निरीक्षन्ताम्। अत एव सूक्तस्यास्य सर्वव्याधिष्वाज्यहोमादिपूर्वकं व्याधितशरीरसंमार्जनादिकर्मणि विनियोगः। किञ्च—प्रागुदाहृते सुखायुषि चरकोक्ते यद्यदिष्यते तत्तस्य सर्वस्य सम्पादनाय सूक्तमिदं विनियुज्यते इति सायणभाष्ये विस्तरशः प्रोक्ताः पञ्चदशाधिकाः प्रयोगाः।

## कायचिकित्सायां नानासूक्तानि।

१—ज्वरातिसारातिमूत्रनाडीव्रणेषु तदुपशमनकामेन "विद्माशरस्य" इति द्वितीयसूक्तेन मुञ्जशिरोनिर्मितरज्जुबन्धनं वल्मीकमृत्तिकापायनं सर्पिर्लेपनं च। अत्र चतुर्थ्यामृचि मूत्रास्रावरोगस्य स्पष्टं नामोपलभ्यते।

२—पञ्चमे सूक्ते **"अप्स्वन्तरमृतमप्सु भेषजम्। अपामुत प्रशस्तिभिरश्वा भवथ वाजिनो गावो भवथ वाजिनीः"** इति मन्त्रेणामृतोपमस्य भेषजस्य च जलस्य शुद्धस्य केवलं सेवनेन न केवलं मनुष्याणामपितु पशूनामपि रोगनाशः।

३—षष्ठं सूक्तं जलशुद्धिव्यवस्थयाऽऽरोग्योपदेशकम्। कीदृशे जले रोगनाशनी स्वास्थ्यसंवर्धनी च

शक्तिर्भवतीति श्रूयताम्-**"शं व आपो धन्वन्याः शमु सन्त्वनूप्याः। शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः। शिवा नः सन्तु वार्षिकीः।"** अत्र 'धन्व' शब्दो मरुदेशवाचकस्तत्र यादृशं जलं जीवनं भवति, तादृशं नान्यत्र। अत एव वेदेऽपि तदीयानामेव जलानां प्राथमिकत्वेनोल्लेखः। अत एव च **"मरुभूरारोग्यदेशानाम्"** इति भगवता चरकेणासौ देशः प्रशस्यते। अप्सु सोमस्यौर्वैद्युताग्नेश्च सत्तया तासां विश्वभेषजता विश्वशंभुवत्ता च स्पष्टं श्रूयते। किञ्च-तासु वरूथम्=वारकं ज्वरादिसर्वरोगनिवर्त्तकं किञ्चन भेषजतत्त्वमस्तीति तासां सर्वरोगनाशकता। आधुनिकजलचिकित्सा न नवीनोपक्रमा हन्त!

४—दशमं सूक्तम् "अयं देवानाम्" इत्यनृतभाषणादिपापजनितस्य जलोदररोगस्य शान्तये।

५—"जरायुजः" इत्यादि द्वादशं सूक्तं वातपित्तश्लेष्मविकारजेषु रोगेषु विनियुक्तम्। अत्र **"य एकमोजस्त्रेधा विचक्रमे", "अङ्गे अङ्गे शोचिषा शिश्रियाणम्"** इति वचनाभ्यामेकस्यैव सूर्यतेजसो वाय्वग्निचन्द्रात्मना वातपित्तश्लेष्मलक्षणदोषत्रयकारिदेवतात्मना च पृथिव्यादिलोकत्रयव्यापकत्वं प्राणात्मना कृत्स्नशरीरे वर्तमानत्वं च निरूप्य त्रिदोषजाखिलव्याधिनाशकता तस्य निर्णीता। रश्मिचिकित्सासिद्धान्तं स्वोपज्ञं मन्यमाना मनाङ् नेत्रमुन्मील्य निभालयन्त्वत्रत्यं वैदिकं तत्वम्। अत्रैव "मुञ्च" इत्यस्यामृचि शीर्षक्ति (शिरःशूल) कासरोगयोः स्पष्टमुल्लेखः। अभ्रजा-वातजा-शुष्मः-इति पदत्रयेण च वातपित्तश्लेष्मणां विशदं विवेचना।

६—"अनुसूर्यम्" इति सूक्तस्य हृद्रोगकामलादिरोगोपशान्तये प्रयोगः। अत्र-रक्तवर्णाया गोः शुकसारिकादिपक्षिणाञ्चैतद्रोगनाशकत्वेन तत्पालनं वेदविज्ञानसम्मतम्।

७—"नक्तं जाता", "सुपर्णो जातः" इति त्रयोविंशचतुर्विंशाभ्यां सूक्ताभ्यां श्वेतकुष्ठापनोदनाय श्वित्रप्रदेशं शुष्कगोमयेनालोहितदर्शनं प्रघृष्य, भृङ्गराजहरिद्रेन्द्रवारुणीनीलिकाः पिष्ट्वा लेपयेत्। पलितनाशनेऽपि पलितान्याच्छिद्य विलिम्पेत्। आज्यहोमादीनि कर्माण्यपि कुर्यात्। अत्रैतेन त्वङ्मांसास्थिगतस्य दूष्याकृतस्यापि च नाशनं श्रूयते। रोगस्यौषधीनां त्वक्सवर्णीकरणादेः क्रियाकलापस्य **"किलासभेषजम्"** इतिनिर्मितौषधस्य चेह विशदं वर्णनम्। वैद्या वेदविभवस्यास्य फलोपधायकतां परीक्ष्य रुग्णानुल्लाघीकृत्य च यशोऽर्जयेयुरित्यस्मदभ्यर्थना।

८—ऐकाहिकादिशीतज्वर-सन्ततज्वर-वेलाज्वरादिशान्तये **"यदग्निरापः"** इति पञ्चविंशं सूक्तं जपेत्। लोहकुठारमग्नौ सन्ताप्योष्णोदकमध्ये स्थापयित्वा तेनोदकेन व्याधितमभिषिञ्चेत्। अत्र सूक्ते—उष्णोदकसेवा, धर्मधृतिः, दोषवशाज्जाठराग्नेर्विकारता ज्वरस्य, कृच्छ्रजीवनकारित्वेन तस्य 'तक्मा' इतिनाम, शरीरौष्ण्यं सन्तापश्च, अन्तस्तापबहिस्तापौ, शीतज्वरस्य वरुणपुत्रत्वेनाभिधानादधिकवर्षादियुक्तप्रदेशेषु जलप्रायस्थानेषु चाधिक्येन तत्प्रचारः, अन्येद्युरुभयद्युस्तृतीयकादीनां नामग्राहं गणना चेत्यादि सर्वं ज्वरविषयकं विज्ञानं द्रष्टव्यमेव।

९—"अदो यत्" इत्येकोनचत्वारिंशत्तमं सूक्तं ज्वरातिसारातिमूत्रनाडीव्रणेषु। अत्र—**"नीचैः खनन्त्यसुराः"** इतिमन्त्रेण गम्भीरस्य नाडीव्रणस्यापि भेषजं यच्छल्यतन्त्रमूलम्। **"तदास्रावस्य भेषजं तदु रोगमनीनशत्"** इत्यत्र स्पष्टं रोगस्य भेषजस्य च नामोल्लेखः।

१०—"उदगाताम्" इति त्रिचत्वारिंशत्तमेन सूक्तेन कुलागतकुष्ठक्षयग्रहण्यादिरोगशान्तये उदकघट-

मभिमन्त्र्य गृहाद्बहिर्व्याधितमवसिञ्चेत्। अत्र "क्षेत्रिय" शब्देन शरीरान्तरे चिकित्स्यानां व्याधीनां स्पष्टमुक्तिः। तेषां चिकित्सायाः कालस्तूषःप्रारम्भो द्वितीयमन्त्रेण सूचितः।

११—"क्षेत्रियात्" इति ४५ सूक्तं क्षेत्रियस्य राजयक्ष्मणो नाशायातीव महत्त्वपूर्णम्। अत्र-रश्मिजलसोमभेषजचिकित्साः, जलवाय्वादीनां स्वच्छता, स्थानस्यैकान्तता, यथेष्टसूर्यातपशुद्धवायुभ्यां तत्पवित्रता, पर्वतीयजलवायुसेवनमित्यादयो यक्ष्मरोगिणो नितान्तमुपशायिनो विषया अतीवहृद्यतया सूत्रिताः।

१२—"शंनो देवी पृश्निपर्णी" इति ६० सूक्तेन कुष्ठादिसर्वरोगभैषज्यकर्मणि पृश्निपर्णीं पेषयित्वा तल्लेपः। **"तामभाक्षि सहस्वतीम्"** इतिवचनस्यार्थदर्शनेन तद्भक्षणमपि प्रतीयते। द्वितीयमन्त्रेऽनया दुर्नाम्नां शिरोव्रश्चनं तृतीये च शुद्धरक्तापगमहेतो रक्तविकारस्य नाशनमपि श्रूयते।

१३—"पार्थिवस्य" इति ६४ सूक्तेन तृषार्त्तभैषज्यकर्मणि मथितं सक्तूदकमभिमन्त्र्य पाययेत्। अत्र—**"ते हृदयं तर्पयामि", "पिबतां मन्थम्"** इति वचने द्रष्टव्ये।

१४—"अक्षीभ्याम्" इति ६८ सूक्तमक्षिनासाकर्णशिरोजिह्वाग्रीवादिसर्वावयवजयक्ष्मरोगभैषज्यकर्मणि। अत्र—पापरोगोऽयं कथं प्रत्यङ्गं प्रतिरोमकूपं च व्याप्य रोगिणं निगृह्णातीति निदानस्थानोपयुक्तं वर्णनमतीवविमर्शनीयमस्ति।

१५—"हरिणस्य" इति ७८ सूक्तेन क्षेत्रियव्याधौ हरिणशृङ्गमणेर्बन्धनम्।

१६—"कर्शफस्य" इति ८० सूक्तेनारत्नुमणिबन्धनम्। **"अश्लेष्माणो अधारयन् तथा तन्मनुना कृतम्"** इति वचनेन श्लेष्मादिदोषत्रयनाशाय केनैतद्धारणं कृतमितीतिहासो द्रष्टव्यः। तृतीयमन्त्रार्थविमर्शनेन बालानां शोषरोगेऽपि प्रयोगः।

१७—"मुञ्चामि" इति ८२ सूक्तेन निरन्तरस्त्रीसङ्गजनितयक्ष्मणि पूतिगन्धमत्स्यसहितमोदनमभिमन्त्र्य भोजनकाले व्याधितमाशयेत्। आङ्ग्लचिकित्सायां डाक्तरा रोगेऽस्मिन्मत्स्यतैलं यत्प्रयुञ्जते तदनेन साम्यमावहति। अत्राज्ञातयक्ष्मणो राजयक्ष्मणश्च निरूपणं द्रष्टव्यम्। द्वितीयमन्त्रार्थदर्शनेन प्रतीयते यत्—क्षितायुषां परेतानां मृत्योरन्तिकं नीतानामपि यक्ष्मग्रस्तानां पुनराहरणपूर्वकं शतशारदजीवनसम्पादनं कदाचिदिह सुप्रचलितमासीदित्यहो भारतमहिमा ! चिकित्सार्थं किञ्चन शतायुर्हविर्निर्मीयते स्मेत्यपि द्रष्टव्यम्।

१८—"एहि जीवम्" इति १११ सूक्ते चतुर्थमन्त्र आञ्जनमणिबन्धनेन यक्ष्मनाशः। अत्रैव-**"त्रयो दासा आञ्जनस्य तक्मा बलास आदहिः। वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता।"** इति मन्त्रे तन्मणे रोगनाशनशक्तिरुत्पत्तिभूश्च द्रष्टव्ये।

१९—"यो गिरिष्वजायथा" इति १४६ सूक्तेन राजयक्ष्मकुष्ठादिरोगशान्तये कुष्ठाख्यौषधिमिश्रं नवनीतमभिमन्त्र्य प्रतिलोमं व्याधितशरीरानुलेपनम्। अत्र निघण्टूपयुक्ता कुष्ठौषधिगुणा द्रष्टव्याः संग्राह्याश्च।

२०—"अग्निस्तक्मानम्" इति १६४ सूक्तेन ज्वरभैषज्यकर्मणि लाजानभिमन्त्र्य मण्डं कृत्वा पाययेत्। अत्र—**"यत्त्वं शीतोऽथो रूरः सह कासावेपयः" "या स्मैतान्सखीन्कुरुथा बलासं कासमुद्युगम्" "तक्मन् भ्रात्रा बलासेन स्वस्रा कासिकया सह" "तृतीयकं वितृतीयं सदन्दिमुत शारदम्। तक्मानं शीतं रूरं ग्रैष्मं नाशय वार्षिकम्" "गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः"**

इत्येते मन्त्रभागा ज्वरविषयकं कृत्स्नं स्वरूपादिकं बोधयन्तीति निदानोपयुक्ताः ।

२१—"ओ ते मे" इति १६५ सूक्तेन कृमिभैषज्यकर्मणि करीरमूलमभिमन्त्र्य बध्नीयात् । अत्र—कीटाणुवादविज्ञानमतीव विशदमुपलभ्यते । एते कीटाणवः प्रायो यक्ष्मणः ।

२२—"आवतस्ते" इति १७२ सूक्तं यक्ष्मरोगभैषज्ये । अत्र स्वेषां परेषां वा विरुद्धानुध्यानेन, शपथादिना, मातापित्रोरपचारेण च समुत्पन्नस्य यक्ष्मणो वर्णनम् । तद्रोगिणः समाश्वासनपूर्वकं निर्भयतासम्पादनम् । **"यत्ते माता यत्ते पिता जामिर्भ्राता च** सर्जतः । **प्रत्यक् सेवस्व भेषजं जरदष्टिं कृणोमि त्वा"** इत्यनेन भेषजस्य परिचारकाणां च निर्देशः । सूर्यमरीचिसेवनम्, अन्धकारयुतस्थानादिवर्जनम्, अधिकं स्वप्नाभावः, प्राणानां मनसश्चक्षुर्बलस्य शरीरस्य बुद्धेः पादयोश्च समुचितं व्यापारणम्, शुद्धवातयुतस्थाने निवासश्चेत्यादि यक्ष्मिणः समुचितं विहारादिकं वैद्यानां मननयोग्यं सूक्तेस्मिन् ।

२३—"अस्थिस्रंसम्" इति १८६ तृचस्य कासश्वासादिभयङ्करश्लेष्मरोगनाशाय प्रयोगः । एतज्जपेन रोगिणोऽवश्यं हितं स्यादिति हृदयं विश्वसिति ।

२४—"आवयो" इति १८८ चतुर्ऋचस्याक्षिरोगनाशाय विविधाः प्रयोगाः ।

२५—"अग्नेरिव" इति १९३ तृचस्य पित्तज्वरनाशाय प्रयोगः । अत्र **"अग्नेरिवास्य दहतः"**, **"शुष्मिणः" "मत्तो विलपन्नयायति" "नम ओषधीभ्यः" "अभिशोचयिष्णुः" "विश्वा रूपाणि हरिता करोषि"**=रक्तदूषणेन हरिद्रावर्णानि करोति, **"अरुणाय बभ्रवे नमः"** इत्यैतैः कृत्स्नं पितज्वरस्वरूपं निदानोपयुक्तमुक्तं भवति, औषधसेवया साध्यता च ।

२६—"हिमवतः प्रस्रवन्ति" इति १९६ तृचस्य हृदयदोषजलोदरकामलारोगेषु प्रयोगः । अत्र—
**"यन्मे अक्ष्योरादिद्योतः पार्ष्ण्योः प्रपदोश्च यत् ।**
**आपस्तत्सर्वं निष्करन् भिषजां सुभिषक्तमाः"**
इत्यनेन कामलाजनितदाहस्य स्वरूपं दृश्यतां जलप्रायमौषधमत्र प्रयुज्यतां च ।

२७—"पञ्च" इति १९८ तृचस्य गण्डमालानिवृत्तये प्रयोगः । **"पञ्च च याः पञ्चाशच्च"** **"मन्या अभि"** **"सप्त च याः सप्ततिश्च"** **"ग्रैव्या अभि"**, **"नव च या नवतिश्च"**, **"स्कन्ध्या अभि"** इत्यैतैः पदैरत्र गण्डानां संख्यानं स्थानं च दृश्यम् ।

२८—"अपचितः" इति २५६ सूक्तेन गण्डमालायां शङ्खलेपः, शुनकलालालेपः, रुधिरमोक्षणाय जलौकावचारणम्, सैन्धवलेपः, गोमूत्रेण प्रक्षालनमित्येते प्रयोगाः । अत्र अपचितः=दोषवशादपाक्चीयमाना गलादारभ्याधस्तात्प्रसृता गण्डमाला-इत्येवं सायणोक्ता निदानोपयुक्ता व्युत्पत्तिर्द्रष्टव्या । तथा मन्त्रस्थैः—**"एनी-श्येनी-कृष्णा-रोहिणी-असूतिका** =पूयस्रावमजनयन्ती चिरपाका-**ग्लौः"** इत्यादिपदैस्तत्स्वरूपम् ।

२९—"यां ते" इति २६२ तृचेन शारीरशूलपरिहारार्थं लोहमणिबन्धः । वस्तुतस्तु—**"विषूचीं विबृहामसि"** इति वाक्येन **"सूचीभिरिव गात्राणि तुदन्सन्तिष्ठतेऽनिलः"** इत्याद्युक्तलक्षणो विषूचिकारोग एवात्र शूलरोगः प्रतीयते । **"निर्विषाणि ह्वयामसि"** इत्यग्रिमवाक्येन च विषूच्यां विषसत्ता तद्दूरीकरणावश्यकता च प्रतिपादिता ।

३०—"अश्वत्थो देवसदना:" इति २६६ तृचेन राजयक्ष्मकुष्ठादिरोगशान्त्यर्थं कुष्ठौषधमिश्रितनवनीतलेपः। तथा "या ओषधयः" इति तृचेन जलोदरे सोमलतामग्नो प्रक्षिप्य व्याधितस्य धूपनम्।

३१—"यथा मनः" इति २७८ तृचेन कासश्लेष्मादिशान्तये सक्तुमन्थभक्षणम्।

३२—"पिप्पली क्षिप्तभेषजी" इति २६२ तृचेन धनुर्वातक्षिप्तवातादिकृत्स्नवातव्याधिषु पिप्पलीप्राशनम्। अत्र—पिप्पलीकल्पस्य गुणाः, तस्येतरौषधेभ्यो व्यतिरेकः, जीवनशक्तिश्चेत्याद्या विषया अतीव दर्शनीयाः।

३३—"विद्रधस्य बलासस्य" इति ३०० तृचेन जलोदरविसर्पादिषु पलाशशकललेपः। अत्र निदानोपयुक्तं विद्रधिविसर्पयोः स्वरूपमपि विशदं निरूपितम्।

३४—"यः कीकसाः" इति ३६३ इति तृचेऽस्थिपर्यन्तव्यापकस्य मांसादिसर्वधातुशोषकस्य यक्ष्मणो वर्णनम्, यो जायान्यः=निरन्तरस्त्रीसम्भोगजन्यः। **"पक्षी जायान्यः पतति स आविशति पूरुषम्"** इत्यनेन तन्मूलभूतानां सर्वत्र विसृत्वराणां कीटाणूनां सञ्चारः सूचितः।

३५—"आरभस्व" इति ४४० सूक्तं मृतानामुज्जीवनाय। अयं वेदविभवो दर्शनीयः।

३६—**"शिवौ ते स्तां व्रीहियवावबला सावदोमधौ। एतौ यक्ष्मं विबाधेते एतौ मुञ्चतो अंहसः।"** इति यक्ष्मणि पथ्योक्तिरपि द्रष्टव्यैव।

३७—"यौते" इति ४४४ सूक्तं दुर्नामरोगनाशनम्। **"कृणोम्यस्यै भेषजं बजं दुर्णामचातनम्"** इत्यनेन श्वेतसर्षपप्रयोगः।

३८—"या बभ्रवः" इति ४४५ सूक्तं यक्ष्मनाशायातीवप्रशस्तम्।

३९—"शीर्षक्तिम्" इति ४६६ सूक्तं यक्ष्मनाशाय प्रसिद्धम्। अत्र-लक्षणभेदेन नानाविधा यक्ष्मरोगा वैद्यानां मननार्हाः।

**४०—"न तं यक्ष्मा अरुन्धते—यं गुल्गुलोः सुरभिर्गन्धो अश्नुते"** इति ५८२ सूक्ते गुग्गुलुधूपः कुष्ठधूपश्च यक्ष्मनाशनः। एतदुत्तरसूक्ते **"सकुष्ठो विश्वभेषजः"** इत्यादिना महता सन्नाहेन कुष्ठौषधगुणाः।

## शालाक्यतन्त्रमूलम्

१—"पुरस्तात्" इति १७१ सूक्ते **"अक्ष्यौ निविध्य हृदयं निविध्य जिह्वां नितृन्द्धि प्रदतो मृणीहि।"** इति मन्त्रार्थपर्यालोचनेन प्रतीयते यत्—प्रायः सर्वेषामूर्ध्वजत्रुगतानां रोगाणां शलाकाचिकित्सेह सुप्रथिताऽऽसीत्। अत्र—**"त्वं भिषग् भेषजस्यासि कर्ता"** इति वचनेन वैद्यकर्त्तव्यमपि द्रष्टव्यम्। किञ्च—पक्वापक्वभोजने, क्षीरे, मन्थे, अकृष्टपच्येऽशने, धान्ये, अप्सु, शमने, रुधिरे, मनसि च रोगोत्पादककीटाणूनां कथमाक्रमणं कथं च तैर्भक्षितस्य मांसादेः पुनराप्यायनमिति विशदं वर्णनमुपलभ्यते। एते च कीटाणवो यक्ष्मण एव स्युः **"अयक्ष्मं कृणु जीवतु"** इत्युत्तरवाक्येन तथा प्रतीतेः।

## शल्यतन्त्रमूलम्

१—"विद्मा शरस्य" इति ३ सूक्तेन मूत्रपुरीषनिरोधे प्रमेहणसाधनहरीतकीकर्पूरबन्धनम्। आत्ययिके रोगे तु मूत्रनालं विदार्य तत्र लोहनलिकां प्रवेश्य तथा चिकित्सा क्रियते स्म यथा मूत्रं **"बाल्"** इति शब्दं कुर्वद् बहिर्गच्छति स्म झटिति च रोगिणस्तन्त्रे शं भवति स्म। न केवलमियदपि तु—आन्त्रगवीनिकाबस्तिमेहनादिविदारणपर्यन्तं सूक्ष्मा शस्त्रक्रियेह सुप्रथिताऽऽसीदिति सर्वं शल्यतन्त्रं सूक्तेऽस्मिन् मूलत आमृश्यते।

२—**"वि ते भिनद्मि मेहनं वियोनिं वि गवीनिके । वि मातरं च पुत्रं च वि कुमारं जरायुणाव जरायुः पद्यताम् ।"** इत्येकादशसूक्तस्थलमन्त्रे मूढगर्भचिकित्सने योनिं विदार्य बालनिष्कासनं जरायुतोऽपि तत्पृथक्करणं कथमुपदिष्टमिति विचार्यताम् ।

३—"अमूर्याः" इति १७ सूक्तं शस्त्रघातादिजरुधिरप्रवाहस्य स्त्रीरजसोऽतिवर्तनस्य च निवृत्तये । अत्र—शिराधमनीनां विवेचनमपि शारीरव्याकरणोपयुक्तं मननीयम् । मन्येऽत्रत्यं सङ्ख्याविवरणं प्रत्यक्षमूलमेव भवेत् ।

४—"रोहिण्यसि" इति ११४ सूक्तेन शस्त्राद्यभिघातजनितरुधिरप्रवाहनिवृत्तयेऽस्थ्यादिभङ्गनिवृत्तये च लाक्षोदकावसेको घृतदुग्धपानञ्च । अत्र—अस्थिमज्जचर्मासृङ्मांसलोमत्वचां सन्धानं कीदृङ् मनोरममिति सर्वं मनोहत्य मीमांस्यम् ।

५—"रात्री माता" इति १४७ सूक्तेन दुग्धे लाक्षां निष्क्वाथ्य शस्त्राद्यभिघाते तत्पानम् । अत्र—**"वृक्षं वृक्षमारोहसि"** इत्यनेन लाक्षोत्पत्तिक्रमस्तस्या रोहिणीतिनाम्नो निर्वचनं च, **"भद्रात्प्लक्षान्निस्तिष्ठस्यश्वत्थात्खदिराद् धवात् । न्यग्रोधात्भद्रात्पर्णात् सा न एह्यरुन्धति"** इत्यनेन तदुत्पत्तिमन्तो वृक्षाः, **"वृक्षाँ अभि सिष्यदे"** इत्यनेन तस्या निष्यन्दरूपता चेत्यादि सर्वं निघण्टूपयुक्तं विवेचनमपि द्रष्टव्यम् ।

६—"इदमिद्" इति २३० तृचेन मुखरहितव्रणनिर्हरणायोग्रभेषजस्य जालाषस्य (गोमूत्रस्य) प्रयोगः ।

७—"अपचिताम्" इति ३६३ सूक्ते दुःसाध्यानामपि गण्डमालानां ग्रीवाकक्षवङ्क्षणयोन्यादिस्थितानां शस्त्रचिकित्सया शङ्खादिक्षारैश्च साधनमभिहितम् । जलौकावचारणं च । **"मुनेर्देवस्य मूलेन सर्वाः विध्यामि ता अहम्"** इत्यनेन मन्युमतो देवस्य=रुद्रस्य मूलेन=वीर्येण पारदेनेति भगवत्सायणसूचितार्थेन पारदस्य केनचिद्विशिष्टेन प्रयोगेणापि गण्डमालानां भेदनं शान्तिश्च क्रियते स्मेति रसशास्त्रमूलमपीह दृश्यताम् ।

## अगदतन्त्रमूलम् ।

१—"ब्राह्मणो जज्ञे", "वारिदम्" इत्याभ्यां १०८-१०९ सूक्ताभ्यां कन्दादिस्थावरविषभैषज्येऽभिमन्त्रितोदकपानम्, प्रोक्षणम्, क्रमुकवृक्षशकलोदकपानम्, छर्दिजननाय मदनफलभक्षणम्, सर्पिर्हरिद्रापानम्—इत्येते प्रयोगाः । चूर्णनलेपनक्षेपणसंसर्जनादिविधयाऽनेकधा विषदातॄणां कर्म । "करम्भाख्य"—मन्थविशेषेण मूर्च्छापसारणम् । **"वध्रिर्विषगिरिः कृतः"** इत्यनेन पर्वतीयं खनिजं विषं शतमल्लादि प्रतीयते ।

२—"ददिर्हि" इति १५५ सूक्तं सर्वविषभैषज्यकर्मणि । अत्र—ग्रहणीकटकबन्ध-मृदादिरेखाकरण-विषस्तम्भन-शिखाबन्धन-ग्रन्थिबन्धनादिभिर्विषस्य विसर्पणप्रतिबन्धः । **"विषेण हन्मि ते विषम्"** इत्यनेन स्थावरविषेण जङ्गमविषस्य तेन च तस्य शान्तिर्भवतीति **"विषस्य विषमौषधम्"** इति वचनस्य मूलं सूचितम् ।

३—"परिद्यामिव" इति १८४ तृचेन सर्पविषभैषज्यकर्म ।

४—"मा नो" इति २२६ तृचः सर्पवृश्चिकादिभयनिवृत्तये । अत्र—असितराजिमत्स्वयज्ञातबभ्रवर्णादिसर्पाणां वर्णनं द्रष्टव्यम् ।

५—"देवा अदुः" इति २७३ तृचेन स्थावरजङ्गमविषभैषज्यार्थं वल्मीकमृदो बन्धनं पायनमाचामनं प्रलेपनं च ।

६—"तिरश्चिराजेः" इति ३७३ अष्टर्चेन

वृश्चिकमशकपिपीलिकाशर्कोटकादिसर्वविधजङ्गमविषनाशाय मधुकस्याभिमन्त्रितस्य पानं मृत्तिकाबन्धनं च। अत्र—नानाविधानां दंशकानां पानकर्तॄणां च सर्पाणां विज्ञानं तद्विषस्य विहुतिः, वृश्चिकादिविषजन्तूनां च विशदं वर्णनं द्रष्टव्यमेव।

७—"इन्द्रस्य" इति ४७२ नानासर्पास्तेषां च विषाणि तत्तत्प्रतीकाराश्च सर्पविषापहारिकाश्च काश्चिदौषधयो विशदं वर्णिताः। शङ्काविषचिकित्साऽपि द्रष्टव्या।

८—"यत्ते" इति ५४३ सूक्तस्यर्चा **"अग्निष्टद् विश्वादगदं कृणोतु"** इतिवचनेन सर्पदंशस्थानमग्निना दहेदित्युपदिश्यते।

**भूतविद्यामूलम्**

१—**"स्तुवानम्"** इति ७ सूक्तेन भूतपिशाचाद्युच्चाटनार्थं फलीकरणादिकर्म, येन ते "अयमस्मि" इति वदन्तोऽपसरन्ति।

२—"दीर्घायुत्वाय" इत्ति ३९ सूक्तेन विस्कन्धदूषणस्य जङ्गिडमणेर्बन्धनं कृत्यादूषणार्थमात्मरक्षणार्थं च। विस्कन्धो रक्षःपिशाचादिकृतः शरीरशोषणरूपो विघ्नः।

३—**"दशवृक्ष"** इति ४४ सूक्तस्य ब्रह्मग्रहशान्तये प्रयोगः। अत्र—**"अधीतीरध्यगादयमधि जीवपुरा अगन्। शतं ह्यस्य भिषजः सहस्रमुत वीरुधः।", "यश्चकार स निष्करत्स एव सुभिषक्तमः। स एवं तुभ्यं भेषजानि कृणवद्भिषजा शुचिः।"** इत्यादिमन्त्रेषु वैद्यस्वरूपं द्रष्टव्यम्।

४—"त्वया पूर्वम्" इति १३६ सूक्तं सर्वभूतग्रहभैषज्यार्थम् अत्र—के के भूतविद्यानिष्णाता अभूवन्निती‍तिहासोऽजश्रृङ्गीगुग्गुल्वाद्यौषधीनां भूतशान्तिगुणाश्च द्रष्टव्याः।

५—"उत्सूर्यः" इति २२५ तृचेन रक्षोग्रहभैषज्यम्।

६—"इमं मे" इति २८४ चतुर्ऋचस्य गन्धर्वराक्षसाप्सरोभूतग्रहादिपीडादिशान्तये प्रयोगः। **"यो बद्धः सुयतो लालपीति—यदानुन्मदितोऽसति" "—यदि ते मन उद्युतम्। कृणोमि विद्वान् भेषजं यथानुन्मदितोऽसति"** इत्यादिवाक्यैः प्रलपत उन्मत्तवच्चेष्टमानस्य रक्षोगृहीतस्य चिकित्सनं सुस्पष्टं प्रतीयते।

७—"रक्षोहणम्" इति ४४१ सूक्तं तदग्रिमाणि कानिचित्सूक्तानि रक्षोग्रहपिशाचादिभैषज्यार्थं प्रसिद्धानि। अत्र—विविधः कर्मकलापो द्रष्टव्यः। तत्र ४४४ सूक्ते **"ये सर्यं न तितिक्षन्ते"** इति वचनेन रक्षसां रात्रिञ्चरत्वं सुव्यक्तम्। रक्षसां भूतानां च कीदृक्स्वरूपमित्यपि श्रूयताम्—**"येषां पश्चात्प्रपदानि पुरः पार्ष्णीः पुरो मुखा। खलजाः शकधूमजा उरुण्डा ये च मट्मटाः कुम्भमुष्का अयाशवः"**। भूतानां पादाग्रप्रदेशाः पश्चाद् भवन्तीति लोकविश्वास एतन्मूलक एव भवेत्।

**कौमारभृत्यमूलम्**

१—"वषट्" इति ११ सूक्तेन पुत्रजननविज्ञानं सुखप्रसवश्च। अत्र—गर्भविस्रंसनम्, जरायुपातनम्, मूढगर्भस्य योनिं विभिद्य निष्कासनमित्यादिकर्माणि द्रष्टव्यानि।

२—"निःसालाम्" इति ४९ सूक्तं मृतापत्याया अपत्यनाशपरिहारार्थम्।

३—"अहं रुद्रेभिः" इति १३२ सूक्तेन जातकर्मणि शङ्खपुष्पिकागन्धपुष्पिके पिष्ट्वा हिरण्यशकलेन प्राशयेत्। शङ्खनाभिं पिप्पलीं च प्राशयेत्। मेधाजननार्थं प्रथमं वाग्व्यवहारं कुर्वतः शिशोर्मातुरुत्सङ्गे

विहितस्यानेन सूक्तेनाज्यं हुत्वा तालुनि सम्पातानानयेत् ।

४—"ब्रह्मजज्ञानम्" इति १४८ सूक्तस्य स्त्रीप्रसवरोगे सूतिकारोगे च प्रयोगः ।

५—"शमीमश्वत्थः" इति १८४ तृचेन पुंसवनकर्म । "स्त्रैषूयमन्यत्र दधत्पुमांसमु दधदिह" इति वाक्येन स्त्रीप्रसवसम्बन्धिनो निमित्तस्यान्यत्र स्थापनपूर्वकं पुंसवनं विशदं बोध्यते इति वैदिकविज्ञानमाहात्म्यम् ।

६—"यथेयम्" इति १६० तृचेन गर्भदंहणकर्म "ते ध्रियतां गर्भः" इति स्पष्टमुच्यते ।

७—"यन्तासि" इति १५४ तृचेन गर्भाधानाय स्त्रिया हस्ते कङ्कणं बध्नीयात् ।

८—"इदं जनासः" इति ३२ सूक्तेन वन्ध्याया अपि पुत्रप्रजननकर्म ।

९—"यौ ते" इति ४४४ सूक्ते "यः कृणोति मृतवत्सामवतोकामिमां स्त्रियम् । तमोषधे त्व नाशयास्याः कमलमञ्जिवम्" इतिमन्त्रेण गर्भस्रावचिकित्सा सुव्यक्ता ।

### रसायनतन्त्रमूलम्

१—प्रथमस्य "ये त्रिषप्ताः" इति सूक्तस्य मेधाजनने पुष्टिकर्मणि च विविधाः प्रयोगाः ।

२—"प्रातरग्निम्" इति ८७ सूक्तेन मेधाकामस्य प्रातर्मुखप्रक्षालनं दधिमधुप्राशनं च ।

३—"वाताज्जातः" इति ११२ सूक्तेन आयुष्कामस्य शङ्खमणिबन्धनम् । अत्र—"शङ्खेनामीवाममतिं शङ्खेनोत सदान्वाः । शङ्खो नो विश्वभेषजः कृशनः पात्वंहसः ।" इति शङ्खगुणाः पर्यालोच्याः ।

४—"नव प्राणान्" इति १७० सूक्तेनायुष्कामस्य हिरण्यमणिबन्धः । अत्र—सुवर्णरजतलोहानां मणिरूपेण धारणप्रयोगः । त्रिवृत ओषधेरपि गुणा इह द्रष्टव्याः ।

५—"उत्तमः" इति १८८ सूक्तेनायुष्कामस्य पुष्टिकामस्य च पलाशमणिबन्धनम् ।

६—"इमाः" इति १६४ सूक्तेन केशवृद्धिकामं विभीतकहरिद्राक्वाथाभ्यामवसिञ्चेत् । "उत स्थ केशदृंहणीरथो ह केशवर्द्धनीः" इति मन्त्रखण्डः पर्यालोच्यः । अत्रैव सूक्ते "कृष्णां नियानम्" इति तृचस्योदरतुन्दादिभैषज्ये प्रयोगः । तुन्दिलाः प्रायो भोगासमर्था अल्पप्रजा भवन्तीति । "तुन्दाना पत्येव जाया" इति मन्त्रार्थो विवेच्यताम् ।

७—"शतं तेऽयुतं हायनान् द्वे युगे त्रीणि चत्वारि कृण्मः" इति ४४० सूक्तस्थमन्त्रे रसायनसेवया कियत्परिमितमायुर्वर्धते स्मेति दृश्यताम् अत्रैव—"शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दद्मसि । वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः ।" इतिमन्त्रे आयुर्वृद्धये स्वास्थ्यानुवृत्तये चावश्यकी ऋतुचर्याप्यालोच्यताम् ।

### वाजीकरणतन्त्रमूलम्

१—"उत्तुदस्त्वा" इति ६६ सूक्तजपेन स्त्रीवशीकरणाय विविधाः प्रयोगाः ।

२—"पर्वताद्" इति १६७ सूक्तेन गर्भाधानशक्तिसम्पादनम् ।

३—"यथा वृक्षं लिबुजा" इति १८१ तृचेन स्त्रीवशीकरणम् । अत्र—लतावेष्टितकालिङ्गनस्य वात्स्यायनाद्युक्तस्य मूलं विमृश्यताम् । अग्रिमसूक्तस्यापि तत्रैव प्रयोगः ।

४—"यथासितः" इति २४५ तृचेन वाजीकरणकाम एकशाखार्कमणिमभिमन्त्र्यार्कसूत्रेण बध्नीयात् । अत्र सूक्ते कृत्स्नो वाजीकरणशब्दार्थो विशदमुक्तः । विशेषतः—"यावदङ्गीनं पारस्वतं हास्तिनं गार्दभं

च यत् । यावदश्वस्य वाजिनस्तावत्ते वर्धतां पसः ।" इत्यस्मिन्मन्त्रे औपम्येन निर्दिष्टा पुंव्यञ्जन-वृद्धिर्विलोक्यताम् ।

५—"आवृषायस्व" इति २७४ तृचेन वाजीकरणकाम एकशाखार्कमणिं बध्नीयात् । अत्र—"आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च । यथाङ्गं वर्ततां शेपस्तेन योषितमिज्जहि ।", "येन कृशं वाजयन्ति येन हिन्वन्त्यातुरम् । तेनास्य ब्रह्मणस्पते धनुरिवा तानया पसः ।", "आहं तनोमि ते पसो अधि ज्यामिव धन्वनि । क्रमन्स्वर्श इव रोहितमनवग्लायता सदा ।" इत्येतेषु त्रिषु मन्त्रेषु मन्ये वाजीकरणतत्त्वविज्ञानाय न किमपि परित्यक्तं स्यात् । वाजीकरणकर्मणि किं वैद्यकर्त्तव्यमिति मनाङ् मीमांस्यताम्, तेन हि रुग्णस्तथाऽऽश्वासनीयो यथाऽसौ स्वीयां मन्दां शक्तिं वीक्ष्यानुदिनं चिन्तातुरः सत्यमेव क्लीबो न भवेत् । भेषजप्रयोगेण च तच्छरीर-पुष्टयेऽङ्गवृद्धये च प्रयत्नः कर्त्तव्य इति सर्वमत्रत्यं विज्ञानं विमृश्यताम् ।

### अथ प्रकीर्णविषयसूलम्

उपर्युक्ते विवेचने निदान-शारीर-निघण्ट्वादीनां प्रकीर्णविषयाणां यत्र तत्र सङ्क्षेपेणोल्लेखः कृत एव । अधुना त्वन्योऽपि विशेषो यथास्थूलं विनिर्दिश्यते—

१—'शतस्य धमनीनां सहस्रस्य हिराणाम् । अस्थुरिन्मध्यमा इमाः साकमन्ता अरंसत ।" इति १७ सूक्तमन्त्रे "मध्यस्थायाः सुषुम्नायाः पर्वपञ्चकसम्भवाः । शाखोपशाखतां प्राप्ताः सिरा लक्षत्रयात्परम् । अर्धलक्षमिति प्राहुः शारीरार्थविचारकाः ।" इत्यादिकमाचार्यैः कृतं धमनीसिरा-व्याकरणं नामायुर्वेदीयशारीरशास्त्रभागो वैद्यैः प्रत्यक्षतोऽपि विज्ञेयः । अत्रैव "परि वः सिकतावती धनूर्बृहत्यक्रमीत्" इति मन्त्रे "सूत्राशयो धनुर्वक्रो बस्तिरित्यभिधीयते" इत्युक्तलक्षणे मूत्राशये सिकतावत्यां नाम नाड्यां (यत्र वीर्यादीनां सिकताः क्रमशश्चीयन्ते) अश्मर्याख्यरोगोत्पत्तिरिति शारीरज्ञानपूर्वकं निदानज्ञानं सम्पाद्यम् ।

२—"केन पार्ष्णी" इति ४७० सूक्ते मनुष्य-माहात्म्यवर्णनपरे तद्भिन्नभिन्नावयवाः "को देवोऽकरोत्" इत्यादिप्रश्नरूपेण तदुत्तररूपेण च वर्णिताः । वैदिकशारीरविज्ञानायेदं सूक्तमतीवोत्कृष्टं यद्धि पृथगेव निबन्धरूपेण वर्णनमपेक्षते । भिषग्वरा वेदविभवमिमम-वश्यं पश्येयुः ।

३—"या बभ्रवो" इति ४४५ सूक्ते दृश्यतां वैदिको निघण्टुविभवः—"प्रस्तृणती स्तम्बिनीरेकशुङ्गाः प्रतन्वतीरोषधीरा वदामि । अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुधो वैश्वदेवीरुग्राः पुरुषजीवनीः ।", "समुद्रो मूलं वीरुधां बभूव ।" इत्यादिमन्त्रेषु कुत्रौषधयः प्राप्यन्ते कथं च ता विज्ञेया इति सर्वमिदं विज्ञानं सम्भृतम् । "वराहो वेद वीरुधं नकुलो वेद भेषजीम् । सर्पा गन्धर्वा या विदुस्ता अस्मा अवसे हुवे ।" "याः सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदुः । वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिणः । मृगा य विदुरोषधीस्ता अस्मा अवसे हुवे ।" इत्यादिभिर्मन्त्रैरिदमुपदिश्यते यत्—या ओषधीरुपजीव्य पशवः पक्षिणः क्षुद्रा जीवाश्च नीरोगाः सुपुष्टाश्च सन्तश्चिरं जीवन्ति, तत्तत्स्थानेषु गत्वा वैद्येनान्विष्यान्विष्य तद्विज्ञानं सम्पाद्यम् ।

४—'सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः । न वै तत्र म्रियन्ते नो यन्त्यधमं तमः ।" इति ४४० सूक्तमन्त्रे दृष्टरिष्टस्यापि मृत्युहर-

णम्, तदाश्वासनाय साम्रेडमुक्तिः कियन्मनोहारिणीति मनीषिणो मनन्तु । **"ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः"** इतिमृत्युसङ्ख्यानमपि द्रष्टव्यं यन्मूला लोकेऽपि शतं मृत्यवो मन्यन्ते ।

५—**"सोमारुद्रा विवृहतं विषूचीममीवा या नो गयमाविवेश"** इति ३५९ सूक्तमन्त्रे सौमसत्त्वं तैजससत्त्वं च शरीरं धारयतो याम्यां विषूचीनाशनप्रार्थनेति विज्ञानमपि दृश्यम् ।

६—**"रुद्रस्य मूत्रमस्यमृतस्य नाभिः । विषाणका नाम वा असि पितृणां मूलादुत्थिता वाती कृतनाशनी ।"** इति २१८ सूक्तस्थमन्त्रे **"रसशास्त्रोक्तप्रकारेणेश्वरवीर्यस्य रसस्य पारदस्यासेवनेन हि सिद्धा अजरामरत्वं लभन्ते"** इति भगवत्सायणव्याख्यानेन रसशास्त्रस्यापि मूलं मृग्यम् ।

अहो वेदमहिमा ! नास्त्यसौ कश्चनापि विषयो यः पूर्वं भगवच्चरकोपदिष्टस्य सुखायुषः सम्पादनायोपयुक्तोऽथर्ववेदे न समुपलभ्येत । आयुर्वेदमहारत्नाकरादस्मादल्पीयांस्येव रत्नानीह यथाशक्ति समुच्चितानि । आयुर्वेदस्य प्रत्येकस्मिन्नङ्गे किं किं कुत्र कुत्र लभ्यते इति मार्गदर्शनधियाऽधिकविषयसमुच्चिचीषया च केवलं सूक्तान्येवोपयुक्तान्यत्र सङ्गृहीतानि । विस्तरभिया न प्रत्येकस्मिन् विषये सूक्ष्मविचारः कृतः । सूक्तान्यपि बहूनि परित्यक्तानि । आथर्वणायुर्वेदस्य निखिलविषयविवेचनाय तु पृथगेव पुस्तकमपेक्ष्यते । आयुर्वेदापेक्षया भिन्नेषु **"पञ्चवेदान् निरममीत सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदम्"** इति गोपथब्राह्मणोक्तेषु पञ्चसूपवेदेष्वपि महानायुर्वेदविषयः प्राप्येत, यदि कथञ्चिदन्वेषणेनोपवेदास्त उपलभ्येरन् । गवादिपशूनां चिकित्सनाय त्वथर्ववेद एव बहूनि सूक्तानि प्राप्यन्ते । सर्वथा लघुकेऽस्मिन्निबन्धे स्थानाभावमीक्षमाणः **"येऽथर्वाणस्तद् भेषजम्, यद्भेषजं तदमृतम्, यदमृतं तद्ब्रह्म ।"** इति गोपथश्रुत्युक्तस्य ब्रह्मणो विज्ञानाय वैद्यबन्धूनामन्त्रयन् विरमामि मुधा विस्तरात् ।

**"उदायुरुद् बलमुत् कृतमुत् कृत्यामुन्मनीषामुदिन्द्रियम् आयुष्कृदायुष्पत्नी स्वधावन्तौ गोपा मे स्तं गोपायतं मा । आत्मसदौ मे स्तं मा मा हिंसिष्टम् ॥"**

अथ० १५२ सू० ८ । इति ॥



# "आयुर्वेदस्याथर्ववेदे मूलम्"

## अथवा

# वेदेष्वायुर्वेदशास्त्रम् ।

(लेखकः—पं० श्री प्रियरत्न आर्षः गवेषणानिधिः)



अस्ति खलु वेदेषु सर्वासां विद्यानां सर्वेषां च विज्ञानानां मूलम् । आयुर्वेदस्यापि विद्याविषयत्वात्तस्य मूलेनावश्यं वेदेषु भवितव्यम् । तदेवं वेदानां महत्त्वमायुर्वेदस्य च तन्मूलकत्वात्प्रामाण्यं प्रसिद्ध्येदिति हेतोरत्र कतिपयैर्मन्त्रैर्नैगम आयुर्वेदनिबन्धो निबध्यते—

शरीरनिदानचिकित्साख्यमायुर्वेदस्य मुख्यं स्थानत्रयम् । तदिदं वेदमूलकमित्यत्र संक्षिप्य निदर्शयिष्यामः । तत्र पूर्वम्

**शरीरस्थानम्—**

"द्रप्सश्चस्कन्द पृथिवीमनु द्यांश्च योनिमनु यश्च पूर्वः ।
समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः।"

(अथ० १८।४।२८)

अर्थः—(द्रप्सः पृथिवीं द्यांश्चानु—इमञ्च योनिमनु चस्कन्द) दृप्यति मुह्यतीति द्रप्सः संसारे मुह्यमानो जीवः, तथा चोक्तम् "अनीशया शोचति मुह्यमानः" (मुण्ड० ३।१।२) मोहनार्थाद् दृपधातोः सः प्रत्ययः । स च जीवो द्यावापृथिवीभ्यां सह तयोरुत्पत्तिसमकालमेवेति, इमं योनिं मनुष्यादिं योनिमनु शरीरम्प्रति चस्कन्द स्कन्दति गच्छति (यश्च पूर्वः) यश्च स पुरातनः शाश्वतिकः (समानं योनिमनु सञ्चरन्तं द्रप्सं सप्त होत्रा अनुजुहोमि) समानं कर्मप्रमाणं कर्मानुसारं यथायोग्यं योनिमनु शरीरम्प्रति सञ्चरन्तं सम्यग्गन्तारं द्रप्सं जीवं सप्त होत्रा अनु सप्तसंख्याकानि सुषुम्नागतचक्राण्याभ्यन्तराङ्गानि प्रतिजुहोमि प्रयच्छामि, अहमीश्वर इति शेषः "अङ्गानि नाव होत्राः" (गो० उ० । ६ । ६) "सप्त इमे लोका येषु चरन्ति प्राणाः" (मुण्ड० १ । १)

तात्पर्यम्—आरम्भसृष्टौ द्यावापृथिव्योरुत्पत्तिसमकालमेव जीवोत्पत्तिरपि जायते । स च जीवो नित्यस्वरूपः सन् पूर्वजन्मकृतस्वकर्मानुसारं मनुष्यादियोनिं प्राप्नोति । तत्र च प्रथमं सर्वयोनिषु समानमाश्रयस्थानं सुषुम्नागताङ्गसप्तकमभ्येति ।

तत्र चैवंविधे शरीरे—

"शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते
अभि चक्षते रयिम् ।
ये पृणन्ति प्र च यच्छन्ति सर्वदा ते
दुह्रते दक्षिणां सप्तमातरम् ॥"

(अथ० १८।४।२९)

(नृचक्षसः शतधारं वायुं स्वर्विदमर्कं रयिमभिचक्षते) नृचक्षसः शरीरदेवा इन्द्रियाणीति यावत् ।

"देवा नृचक्षसः" ( का० ८ । ४ । २ । ५ ) शतधारमसंख्यधारायुतमसंख्यनाडीप्रवाहयुक्तं वायुं वातं स्वर्विदं तेजोविदमूष्मनिमित्तमग्नितत्त्वं-पित्तमित्यर्थः। "अग्निर्वा अर्कः" (का० १० । ६ । २ । ५ ) रयिमुदकं पुष्टिदं श्लेष्मतत्त्वम् "अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ( ऋ० १ । १ । ३ ) इत्युक्तं च । अभिचक्षतेऽभिपश्यन्ति-अनुभवन्ति-स्वीकुर्वन्ति । ( ये सर्वदा पृणन्ति प्रयच्छन्ति च ) ये वातादय आन्तरिकपदार्थाः सर्वदा शरीरं पृणन्ति—प्रकृतिभूताः पालयन्ति, प्रयच्छन्ति च-विकृताः सन्तः प्रशाम्यन्ति च। 'यम उपरमे भ्वादिः' (ते सप्तमातरं दक्षिणां दुह्रते) त एव वातादयः सप्तमातरं सप्त मातारो निर्मातारो यस्यास्तां दक्षिणां कर्मफलभोगरूपां तनुं दुह्रते प्रपूरयन्ति सम्पादयन्ति ।

तात्पर्यम्—शरीरे वाततत्त्वं जीवनस्य बाह्याभ्यन्तराणां च सर्वक्रियाणामाधारः पित्तं शरीरोष्मा भूत्वा रसादिधातून्—प्राप्नोति परिणमयति च । कफश्च शरीरे धातूनुपचिनोति सङ्गृह्णाति च, अत एव शरीरस्य-व्यक्तिभावघनत्वपरिपुष्टीनां हेतुः सम्पद्यते, तथाकृत्वैवैषां वातादीनां मूलतत्त्वानां हस्तादिभिः कर्मेन्द्रियैः श्रोत्रादिभिर्ज्ञानेन्द्रियैश्च साकमनिवार्यसम्बन्धोऽस्ति । अत एव ते प्रकृतिभूताः सन्तः शुक्रादिसप्तधातुमयमिदं शरीरं पालयन्ति, विकृताश्च दुःखयन्ति घ्नन्ति चेत्याशयो मन्त्रस्य । एवं वातपित्तकफानां नामानि कार्याणि च वेदानुसारत एवायुर्वेदशास्त्रेषु मतानि विवर्णितानि च । वेदे वाय्वर्करयिनामभिरायुर्वेदे वाय्वर्कसोमनामभिर्वातपित्तकफतत्त्वानि वर्णितानि सन्ति । रयिसोमयोरेव नामभेदस्तौ चैकार्थाविति समानत्वम् । तदत्रायुर्वेदः प्रदर्श्यते—

"विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥" (सुश्रुते)

"वायुस्तन्त्रयन्त्रधरः प्राणोदानसमानव्यानापानात्मा प्रवर्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः सर्वेन्द्रियाणामुद्योजकः" ॥

अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति, तद्यथा पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः ॥

सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति, तद्यथा दार्ढ्यं शैथिल्यमुपचयं कार्श्यम् ॥" ( चरकस्य सूत्रस्थाने । २२ )

"वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ।
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च ॥"

"ते व्यापिनोऽपि................" ( अष्टाङ्गहृदयस्य सूत्रस्थाने १ । ८ । ९ )

(ख) वातपित्तकफप्रतिपादनानन्तरं प्राणक्रमोऽपि निदर्श्यते—

"प्राणः सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्दिमाविशन् मनीषया ॥" (अथ० १८।४।५८ )

अर्थः-(प्राण इन्द्रस्य मनीषया हार्दिमाविशन्) प्राणवायुरिन्द्रस्य जीवात्मनो मनीषया चेतनया प्रेरितः सन् हार्दिं हृत्कमलमाविशन्नाविष्टः सन् ( सिन्धूनां कलशाँ अचिक्रदत् ) सिन्धूनां स्यन्दमानानां रक्तवाहिनीनां नदीरूपाणां नाडीनां कलशान् रक्तप्रवेशनिकासोद्भवकलनशब्दवतो रक्ताशयानचिक्रदत्पुनः पुनः कम्पयति 'क्रद वैक्लव्ये। वैकल्ये चेत्यन्ये' भ्वादिः' " तद्यदेतैरिदं

सर्वं सितं बद्धं तस्मात्सिन्धवः" ( जै० उ० । १ । २९ । ६ ) "प्राणो वै सिन्धुश्छन्दः" ( श० ८ । ५ । २ । ४ )।

अपरञ्च—

"प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा
सख्युर्न प्रमिनाति सङ्गिरः ।
मर्य इव योषाः समर्षसे सोमः कलशे
शतयामना पथा ॥" ( अथ० १८।४।६० )

अर्थः-(इन्द्रस्य निष्कृतिं वै-इन्दुः प्रैति) इन्द्रस्य जीवस्य निष्कृतिं वै प्रतिष्ठापनं प्रति, इन्दुर्जीवनोदकं रक्तं प्रैति, प्रकर्षेण गच्छति "इन्दुरुदकनाम" (नि० १।१२) (सखा सख्युर्न प्रमिनाति सङ्गिरः) यथा कश्चन सखा निजसख्युः सङ्गिरः संवादाननुज्ञाश्च प्रमिनाति प्रमाणयति—अनुसरति, वा ( मर्य इव योषाः ) यथा मनुष्यो भार्याः समभ्येति, एवम् ( सोमः कलशे शतयामना पथा समर्षसे ) सोमो रसो रक्तमिति यावत् । कलशे रक्ताशये शतयामना शतं यामानो यातव्यस्थानानि यस्मिन् तादृशेन पथा समभ्येति ।

मन्त्रद्वयस्यायमाशयः—यज्जीवात्मनश्चेतनशक्त्या प्राणो हृदये प्रविष्टः सन् शरीरान्तर्वर्तिनीनां नाडीनां रक्ताशयान् पुनः पुनश्चालयति तत्र पूर्वः पूर्वो रक्ताशयः परे परे रक्ताशयेऽसंख्यसूक्ष्मतन्तुमार्गेण रक्तं प्रेरयति पूर्वतश्च सङ्गृह्णातीति व्यापारः परस्परं मित्राणां संवादप्रेषणमिवानुज्ञापालनमिव वा । सैषा रक्तस्य गतप्रत्यागतप्रवृत्तिरेव जीवस्य जीवनकारणमिति सिद्ध्यति ।

( ग ) नाडीप्रभेदा अपि प्रदर्श्यन्ते—

"एतास्ते असौ धेनवः कामदुघा भवन्तु। एनीः श्येनीः सरूपा विरूपास्तिलवत्सा उपतिष्ठन्तु त्वात्र ॥"
( अथ० १८ । ४ । ३३ )

अर्थः-(असौ त एता धेनवः कामदुघा भवन्तु) असौ हे जीव ! एता धेनवो धेनुरूपा धमन्यः शिराः कामदुघा आनुकूल्यसम्पादिका भवन्तु । धेनुशब्दोऽत्र धमनीवाचकः । उपलक्षितं च धेनुधमन्योर्नैगमं पर्यायत्वं वाङ्नामसु' "श्लोकः । धाराः । इलाः । गौः ।…… । धमनीः । नाडीः ।…… धेनुः ।…… देकुरेति सप्तपञ्चाशद्वाङ्नामानि" ( नि० १।११ ) यास्केन चोक्तं स्नायुवाचकोऽपि गौर्भवति । "अथापि स्नाव च श्लेष्मा च—"गोभिः सन्नद्धा पतति प्रसूता" इतीषुस्तुतौ ' ( निरुक्ते । २ । ६ ) ( अत्र एनीः श्येनीः सरूपा विरूपास्तिलवत्सास्त्वोपतिष्ठन्तु ) अत्र शरीरे एनीररुणा वातवहाः शिराः, श्येनीः श्वेता गौर्यः कफवहाः शिराः, विरूपा नीलाः पित्तवहाः शिराः, सरूपा रोहिण्यो रक्तवहाः शिराः, ता एताः सर्वास्तिलवत्सा ग्रन्थिवत्सास्त्वामुपाश्रयन्तु ।

अत्र मन्त्रे शिराणां चातुर्विध्यं सलक्षणं प्रदर्शितं तथैव चायुर्वेदशास्त्रे मन्यन्ते—

"तत्रारुणा वातवहाः पूर्यन्ते वायुना शिराः ।
पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात्
असृग्वहास्तु रोहिण्यः शिरा नात्युष्णशीतलाः ॥"
( सुश्रुतस्य शरीरस्थाने । ७ । २० )

( घ ) अङ्गानां परिसंख्यानमपि मन्त्रेषूपलभ्यते—

"अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥१॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनुक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते ॥२॥
हृदयात्ते परिक्लोम्नो हलीक्ष्णात् पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते विवृहामसि ॥३॥
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि ।
यक्ष्मं कुक्षिभ्यां प्लाशेर्नाभ्या विवृहामि ते ॥४॥
उरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं भसद्यं श्रोणिभ्यां भासदं भंससो विवृहामि ते।५
अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः ।
यक्ष्मं पाणिभ्यामङ्गुलिभ्यो नखेभ्यो विवृहामि ते ६
अङ्गे अङ्गे लोम्नि लोम्नि यस्ते पर्वणि पर्वणि ।
यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीवर्हेण विष्वञ्चं
विवृहामि ते ७ (अथ० २ । ३३ । १—७)

"मेहनाद्वनङ्करणाद्...." (ऋ० १०।१६३।५)

इति च विशेष ऋग्वेदे । एवमत्र मन्त्रेषु पञ्चाशदङ्गानि परिगण्यन्ते, तानि च रोगस्थानानीत्यपि वर्ण्यते । इत्थमेवायुर्वेदेष्वपि प्रतिनिर्दिश्यन्ते ।

तदिदं वातपित्तकफप्राणशिराङ्गविज्ञानं वेदेषु वर्तमानं सत् शारीरस्थानस्यायुर्वेदान्तर्गतस्य मूलमस्तीति स्पष्टं भवति ।

निदानस्थानम्—

"मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशायो अस्य ।
यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्
सचतां पर्वतांश्च ॥"
( अथ० १ । १२ । ३ )

अयमाशयो मन्त्रस्य यद् हे चिकित्सक ! त्वमेतं रोगिणं शिरोग्रहाद्रोगादथ पर्वपीडकात् कासान्मोचय । अपि तु योऽन्यः कश्चन वातजः पित्तजः श्लेष्मजो वा रोगो भवेत् तं चास्माद्रोगिणः सकाशाद् वनस्पत्यादिविधानैर्नानापर्वतनिवासनैश्च दूरीकुरु ।

मन्त्रेऽस्मिन् वातपित्तश्लेष्माणो रोगस्य हेतव इत्युक्तं भवति । तत्र वातजा इति तु स्पष्टम्, शुष्मः पित्तजः, अभ्रजाः श्लेष्मजः । इत्थमेव सायणेनापि व्याख्यातम् " शुष्मः शोषकः पित्तविकारजनित अभ्रजाः श्लेष्मरोगः " पूर्वार्द्धे च यत् कासग्रहणं तद् वातादिभिर्हेतुभिः साकं रोगोऽपि रोगहेतुरिति मतं सूचितकल्पं भवति । लोके चोक्तिरेषा " फिसादका मूल हाँसी रोगका मूल खाँसी " अपरञ्च—

"यदि शोको यदि वाभिशोको यदि राज्ञो
वरुणस्यासि पुत्रः ।
हूडुर्नामासि हरितस्य देव स नः संविद्वान्
परिवृङ्धि तक्मन् ॥" ( अथ० १।२५।३)

तात्पर्यम्—हे रोग ! त्वं यदीर्ष्याक्रोधादिजनितं राजसं दुःखमथ चेत् कामहर्षादिजनितं तामसं दुःखं किंवा पूर्वजन्मकृतपापकर्मफलरूपं दुःखं गर्भतोऽस्माभिः साकं समुत्पन्नमसि त्वमेवं सर्वविधोऽप्यवश्यं हरितवर्णताया रक्तशून्यतायाः समुत्पादकः । अत एव शरीरपीडक ! त्वमस्मान् मोचय ।

अत्र मन्त्रे शोकाभिशोकवरुणपुत्रनामभी रोगोऽभिहितस्तत्र शोकाभिशोकौ तु क्रमशो रजस्तमोभ्यां समुत्पन्नौ भवतः । ईर्ष्याद्वेषक्रोधादिरजोगुणेन शोकः, कामरागहर्षादितमोगुणेनाभिशोको मोहः । वेदेऽन्यत्रेमावेव मानसरोगौ वर्णितौ—"तत्र को मोहः कः

शोक एकत्वमनुपश्यतः" (यजु०४० ) वरुणपुत्रश्च भवति रोगः । तदित्थम् "वरुणो वा एतं गृह्णाति यः पाप्मना गृहीतो भवति" (श०१२।७।२।१७) पापकारिणं जनं दण्डयितुं वरुणदेवो वरयिता जन्मदाता परमात्मा निगृह्णाति जीवजन्मना साकमेव गर्भे तं पापकर्मफलस्वरूपं रोगमुत्पादयति तस्मात् स रोगो वरुणपुत्र इति सम्पद्यते। अयमेव वेदेषु चायुर्वेदेषु क्षेत्रियः पापरोगो वा प्रोच्यते ।

इत्थमयं निदानसङ्ग्रहो वेदेषूपलभ्यमान आयुर्वेदशास्त्रेषूपवर्ण्यते—

"अतस्त्रिविधविकल्पा व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्याः । द्विविधाश्चापरे राजसास्तामसाश्च" ( चरकस्य निदानस्थाने । १ । ४ )

(ख) निदानविशेषाश्च सन्ति—

"अन्वान्त्र्यं शीर्षण्यमथो पार्ष्णेयं क्रिमीन्।
अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि ॥"
( अथ० २ । ३१ । ४ )

"यो अक्ष्यौ परिसर्पति यो नासे परिसर्पति ।
दतां यो मध्ये गच्छति तं क्रिमिं जम्भयामसि ॥"
( अथ० ५ । २३ । ३ )

क्रिमयोऽपि रोगहेतव इत्यत्र सूचितं भवति ।

"यदि कर्तं पतित्वा संशश्रे यदि वाश्मा प्रहृतो जघान
ऋभू रथस्येवाङ्गानि सन्दधत् परुषा परुः ॥"
( अथ । ४ । १२ । ७ )

शस्त्राद्याघातोऽत्रागन्तुकं कारणं रोगस्य प्रदर्शितम् ।

"विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि ॥"
" ,, ,, ,, निर्ऋत्याः पुत्रोऽसि"
" ,, ,, ,, अभूत्याः पुत्रोऽसि ॥"
" ,, ,, ,, निर्भूत्याः पुत्रोऽसि ॥"
" ,, ,, ,, पराभूत्याः पुत्रोऽसि ॥"
( अथ० १६।५।२।४-६ )

अत्र मन्त्रेषु स्वप्नस्य रात्रौ निद्रानाशस्य दिने वा स्वप्नसदृशस्य मानसरोगस्य "ग्राही ग्रहणी, निर्ऋतिः पापवासना, अभूतिर्दरिद्रता, निर्भूतिरतिशयसम्पत्तिः सम्पत्तिनाशो वा, पराभूतिः पराजयता" इति पञ्चकारणानि दर्शितानि ।

(ग) रोगलक्षणानि—

नमः शीताय तक्मने नमो रूराय शोचिषे कृणोमि ।
यो अन्येद्युरुभयेद्युरभ्येति तृतीयकाय नमोऽस्तु
तक्मने ॥" ( अथ० १ । २५ । ४ )

अत्र वातपित्तकफज्वराणां तथाऽन्येद्युष्कादीनां विषमज्वराणां च लक्षणानि प्रोक्तानि सन्ति । तत्र शीतायेति शीतज्वरः कफज्वरः, रूरायेति कम्पज्वरः क्षोभज्वरो वातज्वरः, शोचिष इति शोषज्वरो ज्वलनज्वरः पित्तज्वरो विषमाश्च ज्वराः लक्षणान्विता वर्णिताः सन्ति । कफज्वरे शीतस्य प्राधान्यम्, तस्मात् "शीताय" इति प्रतिपादनमुचितम् । वातज्वरे कम्पनं क्षोभनं वा भवति तस्मात् "रूराय" इति कथनं समीचीनम्। 'रुङ् गतिरेषणयोः' । एवञ्चान्यत्र वेदे रूरज्वरस्य लक्षणमुपलभ्यते—"यस्त्वां शीतोऽथो रूरः सह कासा वेपयः " ( अ० ५ । २२ । १० )। पित्तज्वरे ज्वलनं दाहो भवति तस्मात्—"शोचिषे" इति

वर्णनमुचितम् । "शोचिरिति ज्वलतो नामधेयम्" (नि० १ । १७ ) ।

कफाधिक्येन कोष्ठाग्निरार्द्रेन्धनयोगेन पाकाग्निरिव मन्दो भूत्वा पक्तव्यं रसधातुं पात्रस्थभोजनमिवापक्वं कृत्वा रक्तेन साकं संयोजयति तेन शीतज्वरस्योत्पत्तिर्भवति । स एव पित्तबाहुल्येन कोष्ठाग्निर्घृतादिद्रवेन्धनयोगेन पाकाग्निरिव धूम्रमयो भूत्वा पक्तव्यं रसधातुं पात्रस्थभोजनमिवापक्वं कृत्वा रक्तेन सार्द्धं सम्मिश्रयति तेन ज्वलनज्वरस्य दाहज्वरस्य पित्तज्वरस्य प्रवृत्तिर्भवति । पुनः स वाताधिक्येन कोष्ठाग्निर्वातवेगताडनेन पाकाग्निरिव विचलितो भूत्वा पक्तव्यं रसधातुं पात्रस्थभोजनमिवापक्वं कृत्वा रक्तेन सह सङ्गमयति तेन कम्पज्वरः क्षोभज्वरो वातज्वरः सञ्जायते । इत्थं विचारप्रबन्धेन रोगनिदर्शनं विज्ञेयम् । मन्त्रेषु बहुत्र कासयक्ष्महरिमकुष्ठपलितशोपादीनां रोगाणां वर्णनं समुपलभ्यते तत्तत्स्थलेषु तद् द्रष्टव्यम् ।

## चिकित्सास्थानम्—

ओषध्यश्मजङ्गमजलरश्मिहोममन्त्रसम्मोहनोपचारशल्यभेदैर्दशविधं चिकित्सितं वेदेषूपलभ्यते ।

तत्रौषधिचिकित्सनम्—

"नक्तं जातान्योषधे रामे कृष्णे असिक्नि ।
इदं रजनि रजय किलासं पलितं च यत् ॥"
( अथ० १ । २१ । १ )

अत्र मन्त्रे भृङ्गराजेन्द्रवारुणीनीलिकाहरिद्राभिः किलासकुष्ठस्य पलितस्य च चिकित्सनं कार्यमित्युक्तं भवति ।

"यो हरिमा ज्यायान् योऽङ्गभेदो विसल्पकः ।
सर्वं ते यक्ष्मं ममङ्गेभ्यो वहिर्निर्हन्त्वाञ्जनम् ॥"
( अथ० १९ । ४४ । २ )

अत्र च हरिमादिरोगाणामाञ्जनेन चिकित्सा विहिता ।

"प्रस्तृणतीः स्तम्बिनीरेकशुङ्गाः प्रतन्वतीरावदामि
अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते
वीरुधो वैश्वदेवीरुग्राः पुरुषजीवनीः ॥
यद् वः सहः सहमाना वीर्यं यच्च वो बलम् ।
तेने अमस्माद्यक्ष्मात् पुरुषं मुञ्चतौषधीरथो
कृणोमि भेषजम् ॥" ( अथ० ८।७।४-५)

उक्तमन्त्रेषु यक्ष्मचिकित्सार्थमोषधिगणा वर्णिताः सन्ति ।

इत्योषधिचिकित्सानिदर्शनम् ।

( ख ) अश्मचिकित्सनम्—

"चक्षुषा ते चक्षुर्हन्मि विषेण हन्मि ते विषम् ।
अहे म्रियस्व मा जीवीः प्रत्यगभ्येतु त्वा विषम् ॥"
( अथ० ५।१३।४ )

अत्र सर्पविषनिवारणायाश्मविषेण चिकित्सा प्रदर्शितास्ति ।

( ग ) जङ्गमचिकित्सनम्—

"हरिणस्य रघुष्यदोऽधिशीर्षणि भेषजम् ।
स क्षेत्रियं विषाणया विषूचीनमनीनशत् ॥"
( अथ० ३ । ७ । १ )

मृदुगतिवतो हरिणस्य द्वादशशृङ्गशाखस्य शृङ्गेण विषूची रोगचिकित्सा कार्येति प्रदर्श्यते ।

घ ) जलचिकित्सनम्—

"आप इद् वा उ भेषजीरापो अमीवचातनीः ।
आपो विश्वस्य भेषजीस्तास्त्वा मुञ्चन्तु क्षेत्रियात् ।"
( अ० ३ । ७ । ५ )

अनेन मन्त्रेण जलावगाहनादिप्रयोगैः द्वेत्रियरोग-नाशनं जलचिकित्सनमुक्तं भवति ।

( ङ ) रश्मिचिकित्सनम्—

"उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥"
( ऋ० १ । ५० । ११ )

अत्र प्रातःकालिका औत्तरायणिकाश्च रश्मयो हृद्रोगस्य हरिम्णश्च निवारकाः सन्तीति वर्णितम् । अपरञ्च—

" उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् "
( अथ० ५ । २३ । ६ )

अत्र क्रिमिरोगापनयनाय सूर्यरश्मय उपयुक्ताः सन्तीति दर्श्यते ।

( च ) होमचिकित्सनम्—

" न तं यक्ष्मा रुन्धते नैनं शपथो अश्नुते ।
यं भेषजस्य गुल्गुलोः सुरभिर्गन्धो अश्नुते ॥"
( अथ० १९ । ३८ । १ )

"सहस्राक्षेण शतवीर्येण शतायुषा हविषा हार्षमेनम्
इन्द्रो यथैनं शरदो नयात्यति विश्वस्य दुरितस्य
पारम् ॥" ( अथ० ३ । ११ । ३ )

पूर्वमन्त्रे गुग्गुलुहोमसेवनेन यक्ष्मशपथयोश्चिकि-त्सनं प्रतिपाद्यते । उत्तरमन्त्रे विविधद्रव्याणां होमेन सर्वरोगप्रशमनं विहितम् ।

( छ ) मन्त्रचिकित्सनम्—

"ददिर्हि मह्यं वरुणो दिवः कविर्वचोभिरुग्रैर्निरिणामि ते विषम् ।
खातमखातमुत सक्तमग्रभमिरेव धन्वनि जजास ते विषम् ॥" ( अथ० ५ । १३ । १ )

भवन्ति हि केचन मिथ्यारोगास्तेषां चिकित्सा नौषध्यादिभिः सम्भवति, प्रत्युत प्रलम्भनेन फलसाधक-वचनेनैव चिकित्सनं कर्तुं शक्यते, तदिदं मन्त्रचिकित्सनं भवति ।

( ज ) सम्मोहनचिकित्सनम्—

Mesmrism and Hypnotism—

" हस्ताभ्यां दशशाखाभ्यां जिह्वावाचः पुरुगवी ।
अनामयित्नुभ्यां हस्ताभ्यां ताभ्यां त्वाभिमृशामसि॥
( अथ० ४ । १३ । ७ )

"अङ्गभेदो अङ्गज्वरो यश्च ते हृदामयः ।
यक्ष्म श्येन इव प्रापप्तद् वाचः साढः परस्तराम् ॥"
( अथ० ५ । ३० । ९ )

मन्त्रद्वये हस्तस्पर्शनेन वाचा च रोगिण उपरि प्रभावं पातयित्वा रोगः शमनीय इति सम्मोहनप्रकारः प्रदर्शितः ।

( झ ) उपचारचिकित्सनम्—

"आवतस्त आवतः परावतस्त आवतः ।
इहैव भव मानुगा मा पूर्वाननुगाः पितॄनसुं
बध्नामि ते दृढम् ॥"

तात्पर्यम —हे रोगिन् ! ये तव समीपसम्बन्धि-नस्तेऽत्र समीपं सन्ति, ये च दूरसम्बन्धिनस्तेऽपि निकटं सन्ति, तान् सर्वान् निजसम्बन्धिनस्त्वं परिचिनुहि । त्वमत्रैव वर्तस्व स्वमानसवृत्त्याऽत्रत्यानेव विचारानुनु-भव, अन्यत्र मनसा न गच्छ पूर्वान् मृतान् निजपितृ-पितामहादीन् जनकादीन् न स्मर । न भयं कार्षीः

तव प्राणमहं ते परिचारको दृढं बध्नामि । इत्येवं पारिवारिकजनेन परिचारकेण रुग्णस्योपचारो विधेयः ।

( च ) शल्यचिकित्सनम्—

"उत त्वा हार्षं पञ्चशलादथो दशशलादुत ।
अथो यमस्य पड्वीशाद् विश्वस्माद्देवकिल्विषात् ।"

अत्र शल्यचिकित्सनं निदर्श्यते ।

"रोहण्यसि रोहण्यस्थ्नश्छिन्नस्य रोहणी ।
रोहयेदमरुधति ॥"

"मज्जा मज्ज्ञा सन्धीयतां चर्मणा चर्म रोहतु ।
असकृत्ते अस्थि रोहतु मांसं मांसेन रोहतु ॥"

( अथ० । ४ । १२ । १, ४ )

अत्र व्रणरोहणास्थिसन्धाने वर्णिते स्तः ।

"यस्याञ्जन प्रसर्पस्यङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं विबाधस उग्रो मध्यमशीरिव ॥"

( अथ० ४ । ९ । ४ )

'प्रसर्पसि प्रविश्य अन्तः सिरामुखे व्याप्नोषीतिसायण'

अत्र सूचीवेधचिकित्सा प्रतिभासिता भवति ।

२—पशुचिकित्सा—

"अपक्रीताः सहीयसी वीरुधो या अभिष्टुताः ।
त्रायन्तामस्मिन् ग्रामे गामश्वं पुरुषं पशुम् ॥"

( अथ० ८।७।११ )

नैघण्टुकप्रकरणमपि वेदेषु बहुधोपलभ्यते गौरवान्नात्र वर्ण्यते । आयुर्वेदाद् भिन्नाश्च युद्धास्त्रप्रयोगविषया अपि वेदेषु वनस्पत्यादिभिः साधनीया आदिष्टाः सन्ति । अस्तु, स एष निबन्धो मयात्रैवालङ्क्रियते विपश्चित्सु च सनम्रत्वमुपहारेण समर्प्यते ।



# ॥ त्रिदोषतत्त्वविचारः ॥

(कविराजश्रीहाराणचन्द्रचक्रवर्तिमहाभागाः, कलकत्ता)

आयुर्वेद इदमामनन्ति-विकृतास्त्रयो दोषाः शरीरमतिपातयन्ति नानाविधान् व्याधीनुत्पाद्य । वदन्ति चात्रेयान्तेवासिनः—"यथाहि शकुनिः सर्वं दिशः परिपतन् स्वां छायां नातिवर्तते, तथा सर्वे एव निजा विकारा नान्यत्र वातपित्तकफेभ्यो निवर्तन्ते, अविकृतास्तु पुनर्धारयन्ति च शरीरमिदं स्वास्थ्यानुवर्तनेनेति" । तथा च त्रयो दोषा इत्युपक्रम्य "विकृताऽविकृता देहं घ्नन्ति, ते वर्तयन्ति च" इति । वर्तयन्ति-विसर्गादानविक्षेपैर्धारयन्तीत्यर्थः । यदाह "विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा । धारयन्ति जगद्देहं कफपित्तानिलास्तथा" इति ।

ते च दोषा वातपित्तश्लेष्माणः । तेषु वात एव प्रवर्तकः । उक्तं हि—"योगवाहः परं वायुः संयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्तश्शीतकृत्सोमसंश्रयात्" इति ।

स च वायू रूक्षादिगुणो विपरीतगुणोपशमनः । तथा चाहुः—"रूक्षश्शीतो लघुस्सूक्ष्मश्चलोऽथ विशदः खरः । विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति" इति । एवमेव पित्तश्लेष्माणावपि स्वगुणाभिवर्द्धनौ विपरीतगुणोपशमनौ बोद्धव्यौ । "सामान्यं वृद्धिकारणं ह्रासहेतुर्विशेषश्च" इति न्यायः । उक्तञ्च—"सस्नेहमुष्णं तीक्ष्णं च द्रव्यमम्लं सरं कटु । विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति" । तथा "गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः । श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः" । इदमत्राम्नायते हि—"दोषाः प्रवृद्धाःस्वं लिङ्गं दर्शयन्ति यथाबलम् । क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्वते" इति । तदिदमामनन्ति-"क्षीणा वर्द्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्याः" इति । तानि च वर्द्धनह्रासनक्षपणानि—"सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम् । ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु" इत्यनुशासनानुसारेण कार्य्याणीति साम्प्रतमुक्तम्-"विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यतीत्यादिः" । अत्र विपरीतगुणैरुपशमनोपदेशात् समानगुणैरभिवृद्धिरर्थादाक्षिप्यते । इदानीन्तु पाश्चात्यभाषाप्रचारप्रकर्षेण समं संस्कृतचर्चानिकर्षाद् विजातीयराजानुवर्तिभिर्वरिष्ठैराढ्यैराढ्यतमैश्चातितरां चिकित्साविद्याया अधरोत्तरीकृतत्वाद्यातीवामलमनिर्वचनीयं युक्तिगर्भं चिकित्साशास्त्रमिदं सर्वथानालोचितं बभूवेति । स्फीतालोकमध्यवर्तिनं घटमिव स्वास्थ्यास्वास्थ्यमूलत्वेनोपलब्धमतीव विकस्वरं दोषत्रितयं ये तु 'अपार्थकम्' इत्याख्यापयन्ति, ते तु स्वेषामेवापार्थकत्वं ख्यापयन्तीत्यवधेयम् । अत एव ब्रूमः-"वसति दिगम्बरनगरे रजकश्चतुरोऽपि किं कुरुते" इति लौकिकानामाभाणकं साम्प्रतमेवेति ।

---

# वैद्यश्रीयादवाचार्यमहोदयाः ।

लेखकः—आयुर्वेदाचार्यकन्हैयालालशर्मा, बम्बई ।

श्रीमतां जन्माष्टत्रिंशाधिकैकोनविंशतिशततमे वैक्रमाब्दे सौराष्ट्र ( काटियावाड )-मण्डलान्तर्गते सुदामापुर्युपाख्ये पोरबन्दरनगरे पुष्करणाख्यब्राह्मणजातौ राजवैद्यपं० त्रिविक्रमजीशर्मणां गृहेऽभूत् । एतेषां पितृपितामहप्रपितामहादयोऽपि भिषग्वृत्त्यैव निर्वाहमकार्षुः । एतेषां प्रपितामहा गोवर्द्धनशर्माणः कच्छदेशान्तर्गतलखपतनगरतः पूर्वसिताः पोरबन्दरनगरं समागताः प्राप्तराजाश्रयास्तत्रैव निवासं कृतवन्तः । श्रीयादवाचार्यैरुपनयनात् प्रभृत्येव संस्कृतभाषाया अध्ययने कृतो भूयान् परिश्रमः । पण्डितवर्याणां घेलारामथुरादासव्यासमहोदयानां, पं० खीमजीबालजीवासुमहोदयानां तथा पण्डितवर्याणां जीवनरामलल्लुभाईशास्त्रिमहोदयानां च समीपेऽधीतं व्याकरणकाव्यतर्कादिशास्त्रम् ।

ततः पितृचरणानां तथा राजस्थानीयानां पण्डितवर्याणां गौरीशंकरमहोदयानाञ्च सकाशादधीतं वैद्यकशास्त्रम् । प्रयागवास्तव्यानां यावनवैद्यके प्रगाढपण्डितानां हकीमश्रीरामनारायणजीमहोदयानां सकाशादधीता यावनभिषग्विद्याऽपि । जन्मभाषा स्वाचार्यमहोदयानां गौर्जर्येव । परं महाराष्ट्रीहिन्दीवङ्गभाषादिष्वपि वर्तते सम्यक् परिचयः । श्रीशशिभूषणसेनविरचितं कर्मक्षेत्राख्यं पुस्तकं वङ्गभाषातो गुर्जरभाषायामनूद्य प्रकटीकृतं तैः । विलुप्तप्रचाराणामायुर्वेदीयग्रन्थानां प्रचारकरणमेव विद्यते आचार्यमहोदयानां जीवनस्य परमोद्देशः । तदर्थं तैः नानादेशीयेभ्यो भिषग्वर्येभ्यः पुस्तकानि बहूनि हस्तलिखितान्यायुर्वेदीयग्रन्थरत्नानि समानीय संशोधितानि प्रकाशितानि सम्पादितानि च । तेष्वो मधुकोशव्याख्यासंवलितं माधवनिदानम्, श्रीडल्हणाचार्यविरचितनिबन्धसंग्रहव्याख्यासमन्विता सुश्रुतसंहिता, शिवदाससेनकृतव्याख्यासमन्वितः श्रीचक्रपाणिदत्तकृतो द्रव्यगुणसंग्रहः, चरकसंहिता मूलमात्रा, श्रीचक्रपाणिदत्तविरचितटीकासमन्विता चरकसंहिता चेति पञ्चग्रन्थाः महता यत्नेन संपाद्य संशोध्य मुद्रणार्थं प्रदत्ताः मुम्बापुरीस्थसुप्रसिद्धनिर्णयसागरयन्त्रालयाधिपतिभ्यः । रावलोपाह्वश्रीशार्ङ्गधरविरचिता त्रिशती, श्रीवोपदेवविरचितव्याख्यासंवलितः श्रीकेशवविरचितः सिद्धमन्त्रनिघण्टुः, तथा श्रीनारायणविरचितो वातरक्तवादिनिर्णयश्चेति ग्रन्थत्रयं मुद्रणार्थं प्रदत्तम् श्रीज्येष्ठारामसुकुन्दजीपणियामहोदयेभ्यः । तथा श्रीकल्याणमल्लविरचितोऽनङ्गरङ्गः, श्रीवीरभद्रदेवविरचितः कन्दर्पचूडामणिः,

तथा कविशेखरज्योतिरीशविरचितः पञ्चसायकश्चेति त्रयो ग्रन्थाः गुजरातीन्यूजप्रिन्टिंगप्रेस, इति प्रसिद्धमुद्रणालयाधिपतिभ्यो मणिलालइच्छारामदेशाई इत्येतेभ्यः प्रदत्ताः ।

स्वर्गवासिनां रसायनाचार्याणां पं० त्र्यम्बकगुरुनाथकालेमहोदयानां प्रोत्साहनेन विलुप्तप्रायाणामायुर्वेदग्रन्थानां प्रकाशनार्थं प्रचारितायुर्वेदीयग्रन्थमालानाममासिकपत्रिका । तस्यां प्रकटीकृता इमे ग्रन्थाः, श्रीगोविन्दभगवत्पादाचार्यविरचितं रसहृदयतन्त्रं श्रीचतुर्भुजविरचितमुग्धावबोधिनीव्याख्यासहितम् । श्रीक्षेमशर्मविरचितं क्षेमकुतूहलम्, श्रीयशोधरविरचितो रसप्रकाशसुधाकरः । श्रीशोढलविरचितो गदनिग्रहः । श्रीमाधवोपाध्यायविरचित आयुर्वेदप्रकाशः । श्रीगोविन्दाचार्यविरचितो रससारः । श्रीचामुण्डविरचिता रससंकेतकलिका, श्रीभोजमहाराजविरचितो राजमार्तण्डः, श्रीरावणकृता नाडीपरीक्षा, श्रीकालीदासविरचिता वैद्यमनोरमा, धाराकल्पः, श्रीमहादेवविर[illegible] श्री[illegible]न्दुकृता रसपद्धतिः, श्रीसुरेश्वरविरचितं लोहसर्वस्वम्, तथा श्रीचूडामणिविरचिता र[illegible]कामधेनुश्चेति षोडश ग्रन्थाः । सर्वेषां स्वसम्पादितानां ग्रन्थानां स्वयमेव संशोधनं विधाय स्वव्ययेन तान् मुद्रापयित्वा प्रकाशनं दुःशकमिति मत्वा येन केनापि प्रकारेण भवत्वेषां प्रचार इति मनसि निधाय बहवो रसग्रन्थाः स्वीयपरमसुहृद्भ्यो वैद्यवर्येभ्यः पं० हरिप्रपन्नशर्मभ्यः प्रदत्ता रसयोगसागरार्थम् । तथा वसवराजविरचितं वसवराजीयं तन्त्रं तथा वैद्यचिन्तामणिश्चेति ग्रन्थद्वयं प्रदत्तं स्वीयपरमसुहृद्भ्यो वैद्यभूषणपं०गोवर्द्धनशर्मछांगानी इत्येतेभ्यः । ततो वसवराजीयतन्त्रं संशोध्य मुद्रापयित्वा प्रकटीकृतं श्रीगोवर्द्धनशर्मभिषग्वरैः । वैद्यचिन्तामणिश्च मुद्राप्यते साम्प्रतम् । काकचण्डीश्वरकल्पतन्त्रं रसाध्यायश्चेति ग्रन्थत्रयं मुद्रणार्थं प्रदत्तं वाराणसीस्थसुप्रसिद्धचौखम्बासंस्कृतसिरीजेत्याख्यग्रन्थावलीप्रकाशकेभ्यः श्रीजयकृष्णदासगुप्तमहाशयेभ्यः । श्रीसोमदेवविरचितो रसेन्दुचूडामणिश्च मुद्रणार्थं प्रदत्तो लाहौरनगरस्थेभ्यः पञ्जाबसंस्कृतपुस्तकालयाध्यक्षेभ्यो मोतीलालबनारसीदासमहोदयेभ्यः ।

सम्प्रति नेपालमहाराजानां गुरुपदं समलङ्कुर्वद्भिरतिप्रबलगोरखादक्षिणबाहुमान्यवरसी० आई० ई० इत्याद्यनेकपदवीविभूषितैः पण्डितवर्यैः श्रीहेमराजशर्ममहोदयैः सम्पादितं तेषामेव परमकृपया लब्धं भगवता कश्यपेन प्रोक्तं महर्षिणा वृद्धजीवनकेन विरचितं महर्षिणा वात्स्येन प्रतिसंस्कृतं वृद्धं जीवकाख्यं कौमारभृत्यतन्त्रं संशोध्य मुद्रणार्थं क्रियते यत्नः ।

यात्रार्थं समागता आचार्यमहोदया अभिनन्दनपत्रप्रदानादिना बहु सम्मानिताः कानपुर-कलकत्ता-लाहौर-अमृतसर-पटना-वाराणस्यादिस्थैर्वैद्यमहोदयैः ।

तेषां विद्यां कार्यपटुत्वं च समवलोक्य काशीविश्वविद्यालयस्यायुर्वेदमहाविद्यालये प्रधानस्थाने नियोजिताः परममनीषिपण्डितवर्यैः श्रीमदनमोहनमालवीयमहोदयैः ।

[illegible]नां मणि[illegible]कित्सया नीरुजः सम्पद्यन्ते धनिन इव निर्धना अपि । आचार्यमहोद-

दयेभ्यः समधीत्यायुर्वेदमभ्यस्य च कर्म चिकित्सायां यशो लभन्ते नानादेशवासिनो बहवोऽन्तेवासिनः । तथापि मारवाड़देशीयाः कियन्तो वैद्याः सन्त्येषां शिष्यकोटौ सर्वेष्वेव ग्रामेषु प्रायो ये वैद्या मिलन्ति, ते यादवसम्प्रदायवन्त एव लक्ष्यन्ते । आचार्यमहोदयानां महतीमायुर्वेदसेवां समवलोक्य मथुरानगर्य्यां चतुर्थेनि० भा०वैद्यसम्मेलने "आयुर्वेदमार्तण्ड" इति पदव्या अलङ्कृतास्ते वैद्यमहाभागैः । हरिद्वारक्षेत्रे पञ्चदशवैद्यसम्मेलने ग्वालियरनगरे द्वाविंशतितमे-वैद्यसम्मेलने सम्मेलनसभापतिपदे नियुक्ता निखिलभारतवर्षीयैर्वैद्यमहोदयैः ।

एतेषामिदमनुकरणीयं वृत्तं यत्समागता विद्वांस एभिस्सम्मानिता अवश्यम्भवन्ति । भगवतः कृपया शरीरसम्मानविद्याविभवदारपुत्रादिसुखसम्पन्नाश्चैते शान्त्या जनताजनार्दनस्य नितरां नित्यं सेवां कुर्वन्तो मुम्बय्यामेव कालं यापयन्ति । एषां पुत्रद्वयं वर्तते, तयोः प्रथमो वैद्यः श्रीदुलेरायशर्माभ्यस्तायुर्वेदविद्यः परमयोग्योऽस्ति । आशास्ति पितरमनुकरिष्यत्ययम् । संक्षिप्ततयेदमेव वक्तव्यमस्ति यद् यादवजीमहाभागाः स्वबलेनैवेमां सर्वविभूतिमेकत्रीकुर्वन्तस्तथा परमां परमां प्रतिष्ठामागतवन्तः सर्वविधां यद्यपि, तथापि परमशान्ताः सम्मिलनकाले श्रुता यथा तथा परमां महत्तामवलम्बयन्तो न परिलक्ष्यन्ते ।

समस्तभारतेन सम्मानितानामपि द्विधा संघीभूय समस्तभारतीयवैद्यप्रवरैः सम्मानितानां पूज्यपादानां गुरुवराणां श्रीमतां श्रीयादवजीमहाभागानां वृत्तं सर्वथा लेखनेऽशक्तो वराकोऽहम् । भगवन्तं पौनःपुन्येन प्रार्थये यदिमे बहुकालपर्यन्तं चिरायुर्लब्ध्वा लोकस्यानामयं कुर्वन्तु ।



# चिकित्सकचूडामणिः
## श्रीश्यामलालजीमहोदयः

( ले० पण्डितपुरुषोत्तमशर्मा चतुर्वेदः साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च )

श्रीस्वामिमहाभागानामभिन्नहृदयस्य सुहृदः श्रीहरिसद्भक्तशिरोभूषणस्य जयपुरीयदीनजनताजीवातोः पारम्परिकराजवैद्यस्य चिकित्सकचूडामणेः श्रीश्यामलालजीमहाभागस्य जीवनवृत्तं यदि नायुर्वेदाङ्के निविशेत, नात्र संशयलेशोऽपि, यदस्य सुषमा शैथिल्यमापद्येत ।

स एष महाभागो जयपुरादनतिदूरवर्तिनि जयपुरराजकीयप्रधानसामन्तराजधान्यां चौमूनगरे पञ्चत्रिंशत्युत्तरैकोनविंशतिशततमे विक्रमवत्सरे सहस्ये मास्यसितषष्ठ्यां शनिवासरे निखिलजनमनोरञ्जनीं जनिमुपलेभे । ततोऽष्टवर्ष एव च जयपुरीयराजवैद्यानां चिकित्साकर्मणि सुप्रसिद्धयशसां तात्कालिकजयपुरनरपतिना समस्तसामन्तसमूहेन च संमानितानामानन्दीलालजीमहोदयानां 'ज्येष्ठे सर्वगुणैः कनीयसि वयोमात्रेण' त्युक्तिं चरितार्थयतोऽनुजन्मनः सुगृहीतनामधेयस्य श्रीसुखलालजीमहाभागस्य दत्तकसूनुतामुपगतः । किन्तु दुर्दैववशादल्प एव वयसि दिवंगते तस्मिन्नानन्दीलालजीमहाभागैरेवायं पालितः पोषितः शिक्षितः कार्यक्षेत्रे प्रवेशितश्च ।

अर्थलिप्सायामदैन्यम् , अध्ययने धियः कुशाग्रियता, सद्य एव पृष्टस्य प्रतिवचनं चेत्यादिभिरव्यभिचारिभिर्लिङ्गैर्बाल्य एवास्य मेधावित्वं भाग्यशालित्वं चान्वमीयतानुभविभिः । अन्तेवासिभावेऽप्यमासीद् गुरुजनस्य निरतिशयं कृपाभाजनम् । कैशोर एव च भट्टश्रीकृष्णराममहाभागानामन्तेवासिषु प्रथमतामुपगत्यायुर्वेदशास्त्रं यथाविधि समधिगतवान् ।

आनुवंशिकत्वाच्चास्य चिकित्साकर्मणि नितरां नैपुण्यमासीत् । न चास्य केवलमायुर्वेदीयचिकित्सापद्धतावेव तदासीत्, किन्तु यावन्यामस्यामप्यासीदप्रतिमं पाटवम् । नानाविधानामनुभूतयोगानामयं निधिरिवासीत् । सर्वजनोपकारकान् स्वल्पमूल्यलभ्यान् योगानेष तथा प्रयोजयति यथा वैद्यानां यवनवैद्यानां च चकितमिव भवति चेतः । अरिष्टज्ञाने चास्य परमं प्रावीण्यमासीत् । भूतपूर्वस्य जयपुरनरपतेः श्रीमाधवसिंहमहाराजस्यायमनितरसाधारणैःस्वगुणैः परमप्रेमास्पदतामयासीत् । वर्त्तमानस्य कृष्णगढनरपतेः श्रीयज्ञनारायणसिंहमहाराजस्य मातुरारोग्यमनेन संपादितम् , आसीच्च तस्य संमाननीयो गृहचिकित्सकोऽप्ययम । समये समये स एष महाभागः सत्काकारयत्, सदकरोच्चैनम्, प्राकाशयच्चास्य देहावसाने स्वस्य हार्दिकशोकमस्य पुत्रेषु प्रहिते स्वकीये पत्रे । अलवरराज्यान्तर्गतजावलीसंस्थानाधिपतिरलवरराजस्य भूतपूर्वः प्रधानमन्त्री च क्षत्रियकुलभूषणं श्रीदुर्जनसिंहजीमहोदयोऽस्य गुणेष्वतीवानुरक्त

आसीत्। आसीच्चानयोरन्योन्यमसाधारणं सौहार्दम्। अस्य वैकुण्ठवासावसरे राजवरेण तेन न केवलं शोकप्रकाशकं पत्रमेव पुत्रेषु प्रहितम्, किन्तु स्वयमपि सदने समागत्य सान्त्वयामास सर्वान् संबन्धिनः।

दूर-दूरदेशेष्वप्यासीदस्य महती प्रसिद्धिः। धनिकैरामयाविभिराहूतस्तत्र तत्र प्रायादपि। सर्वस्मिन्नपि भारते विश्रुतयशसः सौजन्यजन्मभूमेरसाधारणकमलाविलासवसतेर्जबलपुरवास्तव्यस्य राजोपपदभाजः श्रेष्ठिवर्यश्रीगोकुलदासमहाभागस्याऽयं कुटुम्बिजनेभ्योऽप्यधिकसंमानित आसीत्। सत्स्वपि परश्शतेष्वाङ्गलभिषक्षु कृपाकटाक्षलेशमपेक्षमाणोऽप्ययमेवासीत् तस्य निरतिशयश्रद्धाभाजनम्। आसीच्च भगवत्कृपया प्रायः सर्वदैव महाभयङ्करेष्वपि व्याधिष्वेतेन चिकित्स्यमानेषु साफल्यम्।

सामन्तसंघे, उच्चपदस्थितेषु कर्मचारिषु चास्य सुमहानादर आसीत्, ते हि यथाऽस्मिन् विश्वसन्ति न तथान्यस्मिन् कस्मिंश्चिदपि। जयपुरीयदीनजनतायास्त्वयमाश्रय एवासीत्, सर्वानपि भिषजो विहाय सैषैनं श्रयते, उत्प्रेक्षते च तस्य वैकुण्ठवाससमये स्वात्मानमाश्रयशून्यमिव। चिकित्साकर्मणि सर्वदा तत्परोऽप्ययमस्यां विंश्यां शताब्द्यामप्यार्षपद्धतिमनुरुन्धानो नासीद्विशेषतो लोभलालसावशगः। सर्वलोकहितमवेक्षमाणेनानेन धन्वन्तर्यौषधालयस्थापनायां सर्वतोऽधिकं परिश्रान्तम्, सर्वविधं साफल्यं चाधिगतमनितरसाधारणेन स्वानुभावेन। स्थापत्यमर्मज्ञस्यास्य भवननिर्माणकलायां सुमहाननुराग आसीत्। सर्वविधदोषविहीनता, उदारता, कार्यतत्परता, सौम्यता सरलता चेत्यादिभिर्गुणैरयमासीत् सर्वजनमनोहरः। एकवारमपि संगतो जनोऽस्य सहृदयतामय्या व्यवहृत्या सुमधुरया व्याहृत्या चाकृष्टो मन्त्रमुग्ध इव यावज्जीवमस्मिन्नन्वरज्यत।

अस्य चिकित्साकर्म संमानयता निखिलभारतवर्षीयायुर्वेदसंमेलनेनास्मै 'चिकित्सकचूडामणिः' इत्युपाधिरुपाह्रियत।

श्रीमद्भागवतस्यायं मार्मिको रसज्ञः, भगवद्भक्तानामग्रणीः, वैष्णववरेण्यः, स्वधर्मे सुदृढबद्धश्रद्धश्चासीत्। चिकित्साकर्मणा परिहृतावकाशोऽप्ययं यत्र-यत्र भगवत्कथा यत्र-यत्र च सनातनधर्मस्य चर्चा, तत्र-तत्र सर्वतः प्रथमं समुपस्थितोऽदृश्यत। एतस्य कतिचन गुणाः संक्षिप्य 'उपवनप्रशस्तौ' मयैवमुपश्लोकिताः—

'(१)एतस्य सत्यसुहृदा सहृदा सदा स—
तत्कार्येषु दर्शितसमग्रसमुद्यमेन।
भैषज्यभर्जितरुजा जयपत्तनीय—
भूपालवंशभिषजा भगवत्परेण॥
सर्वत्र विश्रुतचिकित्सकवर्यचूडा—
मण्याह्वयेन मदमानविवर्जितेन।

---

१—श्रीलक्ष्मीरामस्वामिनः।

श्रीश्यामलालसुधिया  चिरचिन्तनीयं
साहाय्यमत्र विहितं विमलान्तरेण ।'

सोऽयं महाभागो जयपुरीयां दीनजनतां सहस्रधारैरश्रुभिरात्मनो वियोगासहिष्णुतां व्यञ्जयन्तीं विसृज्याष्टाशीत्युत्तरैकोनविंशतिशततमे विक्रमवत्सरे सहस्यशुक्लचतुर्दश्यां वैकुण्ठवाससुखानुभवाय भुवमुदस्थासीत् ।

महाभागोऽयं स्वस्य देहावसानसमये पुत्रत्रयं पौत्रपञ्चकं च व्यसृजत् । पुत्रेष्वस्य वयसा गुणगणैश्च सर्वप्रथमोऽस्माकमव्याजमित्रं भिषगाचार्यः श्रीनन्दकिशोरशर्मा विद्यते, यः श्रीस्वामिमहाभागानां स्थाने पाठशालायामायुर्वेदप्रधानाध्यापकपदमधितिष्ठति, सारल्येन, सर्वजनोपकारितया चानन्यसाधारणतामावहन् जयपुरीयजनतायां सामन्तेषु च निजगौरवोचितं संमानमुपलभते । कनिष्ठश्च श्रीयुगलकिशोरशर्मा एम्. ए. महाशयो जयपुरराज्यान्तर्वर्त्तिसंस्कृतपाठशालानां निरीक्षकतां ( Supervisor ) भजते । तदनयोर्महाभागयोरभ्युदयमाशासाना विफलं विस्तारमनाद्रियमाणा विरमामः ।

## श्रीस्वामिनां परमसुहृदः



चिकित्सकचूडामणिस्वर्गीयराजवैद्यश्रीश्यामलाल-
वैद्यमहाभागाः, जयपुरम्



स्व० पं० आयुर्वेदविद्यानिधिः राजवैद्य-कविवरभट्ट
श्रीगङ्गाधरशास्त्री, जयपुरम्

❀ श्रीहरिः ❀

# श्रीगङ्गाधरभट्टः ।

( ले० पण्डितपुरुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च )

श्रीस्वामिमहाभागानां प्रधानविद्यागुरोः श्रीश्रीकृष्णरामभट्टमहाभागस्यैकक: पुत्रः पवित्रचरित्रचणः प्रशंसनीयसद्गुणगणः समधिगतसर्वजनानुरागः श्रीगङ्गाधरभट्टमहाभागः समभूत् ।

महाभागोऽयं द्वात्रिंशदुत्तरैकोनविंशतिशततमे विक्रमवत्सरे माघकृष्णाष्टम्यां निजजननीजनकसुखखनिं जनिं लेभे । शैशव एवाऽयमध्ययने प्रवृत्तः स्वपितृचरणेभ्य आयुर्वेदं तेभ्यस्तेभ्यो विद्वत्तल्लजेभ्यश्च न्यायसाहित्यव्याकृत्यादिकमधिजगे, लेभे च निखिलेष्वप्येषु विषयेषु विपश्चिदपश्चिमचमत्कारिणीमभिस्पृहणीयपाण्डित्यसंपत्तिं व्युत्पत्तिम् । कवित्वशक्तिरस्य सहृदयहृदयहारिण्यासीत् । चिकित्सायामयमतिनिपुणोऽपि समये-समये भयङ्करव्याधिविनिवर्त्तने प्रत्यक्षीकृतप्रभावोऽपि निरपेक्षतया निश्चिन्ततया च नासीद्धनतत्परः । स्वभावेनायं सर्वसुहृत् स्पष्टवक्ता शुद्धहृदयश्चासीत् । शिवभक्तशिरोमणिरयं भङ्गाभक्तो बभूवाभियोगप्रियश्च । शास्त्रार्थेष्वस्य दुर्धर्षता जयपुरीयपण्डितसमाजेन बहुशो न न साक्षात्कृता । रामानुजसंप्रदायपरमाचार्यैः प्रतिवादिभयङ्करमठाधीश्वरैः श्रीमदनन्ताचार्यस्वामिभिः सहास्य जयपुरे शास्त्रार्थसंरम्भारम्भो बभूव विदुषामपि विस्मयोत्पादने हेतुः । अखिलभारतवर्षीयायुर्वेदसंमेलनेनास्य वैदुष्येण संतुष्यास्मै 'आयुर्वेदविद्यानिधि'रित्युपाधिरर्पितः । स्वपितृचरणप्रारब्धस्य कच्छवंशमहाकाव्यस्य शेषांशः समपूर्यतैनेन । एतद्विरचितेषु परश्शतेषु मुक्तकपद्येषु कानिचन संप्रत्यपि सन्ति सुधीजनकण्ठभूषणायमानानि । तेषु द्वित्राणि पद्यानीहोद्दिधीर्षामो येनैतदीयं काव्यकौशलं सहृदयैः प्रत्यक्षीक्रियेत ।

तत्र प्रथमतो यमकचमत्कृतिदर्शनाय जयपुरराजगुरोर्गोलवाश्रमाचार्यस्य बहुविद्यानिधेर्मल्लविद्यायामप्यप्रतिमल्लस्य श्रीहरिवल्लभमहाभागस्य वर्णनमाकर्ण्यताम्—

मल्लविद्याविदा येन दायेन कृतकीर्त्तिना ।
पाल्यन्ते बद्धकौपीनाः कौ पीना मल्लतल्लजाः ॥

अथार्थत्रयनिदर्शनपरः श्लेषोऽप्यवलोक्यताम्—

जनताभविकैकभाजनं कृतिनं चन्द्रमसं तथाऽऽगमम् ।
स्वपदस्य रसेन निर्भरं सकलङ्कोऽपि जनो न पश्यति ॥

भूतपूर्वजयपुरपुरन्दरस्य तदानीं वर्त्तमानस्य श्रीमाधवसिंहमहाराजस्य प्रत्यन्तदेशे परोक्षं धर्म-रक्षणमुपवर्णयत् प्रसादगुणपूर्णमप्येकं पद्यं निशाम्यताम्—

दुष्काले क्षुभितां प्रजामवितवान्, प्रत्यन्तदेशं व्रजन्
धर्मं यश्च ररक्ष, यस्य यशसां पूरेण पूर्णं जगत् ।
श्रीमान् धर्मधुरन्धरः स च धराधीशाग्रणीर्माधवः
कल्पान्तं ( ? ) कुलदेवतावदुदयाद्रेः शृङ्गमारोहतु ॥

सोऽयं कविकुलरत्नं विद्वदग्रणीर्वैद्यविद्याविशारदश्चात्यल्प एव वयसि चतुःसप्तत्युत्तरैकोनविंशे विक्रमवत्सरे कैलासवाससुखमनुभवितुं त्वरितो बभूवेति निवेदयतां नः शतधा विदीर्यते हृदयम् ।

संप्रत्यस्य तनुजन्मा श्रीनरहरिशास्त्री जयपुरराजकीयसंस्कृतपाठशालायामायुर्वेदमध्यापयति संतति-सुखं चानुभवतीति किमतिविस्तरेण ।

---

# वातादित्रिदोषविज्ञानम्

( लेखकः—वैद्यभूषणश्रीपुरुषोत्तमशास्त्री हिर्लेकर,
अमरावती )

१—वातादयः त्रिदोषा नाम—

शरीरघटकानां सूक्ष्माणामन्तर्निष्ठाः शक्तिस्वरूपाः पदार्थास्त्रयो वायुः, पित्तम्, कफश्चेति दोषाः।

२—वातादीनां दोषाणां प्रधानं कर्म—

शरीरघटकान्तर्वर्तिनस्ते वातादयः अपरिसङ्ख्येयघटकसमुदायस्वरूपस्य शरीरस्य उत्पत्तिविनाशस्वरूपस्य वृद्धिक्षयरूपस्य वा जीवनव्यापारस्य सम्पादकाः प्रमुखाः।

३—जीवनव्यापारे किं वा कर्म प्रधानम्—

जीवनव्यापारस्य सम्पादनाय संयोगः, विभागः, विक्षेपश्च इति कर्मत्रितयमवश्यम्।

४—वातादयस्तु क्रियाकराः—

संयोगविभागवियोगकर्तारः स्वकर्मसम्पादनगुणसमुदायस्वरूपा वातपित्तश्लेष्माणस्त्रयः।

५—वातादयः शक्तिस्वरूपा उत द्रव्यरूपाः—

शरीरद्रव्येष्ववस्थिताश्चैते शक्तिस्वरूपा अपि न केवला शक्तिः, किं तु सूक्ष्मतरद्रव्याश्रितशक्तिरूपाः। शक्त्युत्कर्षसम्पन्नं द्रव्यं शक्तिः, स्वल्पतरशक्तियुतं च द्रव्यं द्रव्यमिति व्यवहारसौकर्याय स्वीकृता संज्ञा, द्रव्याश्रयहीनायाश्च शक्तेरुपलब्धिरपि न स्यात्, अतश्च वातादयो दोषाः शक्तिस्वरूपं द्रव्यं पदार्था वा इत्युपपद्यते।

६—वातादयो दोषाः किं दृश्यस्वरूपा उत अनुमेयाः—

परमसूक्ष्मेषु शारीरघटकेष्ववस्थितास्तदपेक्षयापि सूक्ष्माः-इत्युक्तेः कथं ते दृष्टिगोचरा भवेयुः? कार्यानुमेया एव वातादयः पदार्थाः इत्यर्थादेवोपपन्नम्।

सर्वेषु शारीरघटकेषु तत्सूक्ष्मांशसमाश्रिताः शक्त्युत्कर्षस्वरूपा उत्पत्तिविनाशात्मकस्य वृद्धिक्षयात्मकस्य वा जीवनव्यापारस्य साधकानां संयोगविभागविक्षेपाणां कर्तारः शारीराः पदार्थास्त्रयो वातपित्तश्लेष्माणः कथिताः सन्ति दोषाः आयुर्वेदशास्त्रे। पोषकाणां सङ्ग्रहः, समानासमानयोः सारकिट्टयोश्च विभागः, सङ्ग्रहार्थमाकर्षणं वियोगसमुत्सुकानां तथा उत्सर्जनीयानां च वियोजनार्थमपकर्षणमित्युभयस्वरूपा गतिश्चलनं वा-इत्येताभिः क्रियाभिः शरीरस्य जीवनाख्यं कर्म सम्पादयन्ति-इत्यतः संयोजकः, विभाजकः, विक्षेपकः इत्येवार्थसूचकैरभिधानैः श्लेष्मा, पित्तम्, वायुरिति दोषाः शरीरोत्पत्तिवृद्धिकारणत्वेन तथाविकृतास्त एव विकारजातस्योत्पादकाः शरीरविनाशकराश्च-इत्यायुर्वेदीयैरुपवर्णितम्।

यथा—

तैरेवाव्यापन्नैः शरीरमिदं धार्यते।
त एव व्यापन्नाः प्रलयहेतवः॥ इति।

वातादयः कर्मकर्तारः सर्वशरीराधाराः प्रमुखाः सन्तः केवलं दूषणस्वभावदर्शिन्या दोषसंज्ञया कथं वा व्यापयितव्याः- इत्याशङ्कायाम्—

शरीराधाराः सर्वक्रियाकराश्चैते वाताद्या एव विकृताः सन्तो विविधान्विकारानुत्पादयन्तीत्यतो व्याधिविज्ञाने के वा विकारोत्पादकाः शरीरं दूषयन्तीत्यस्य प्रश्नस्योत्तरम् 'वातादयः' इत्येषां दोषसंज्ञा चिकित्सायां वातादिसाम्योत्पादने सावधानतासूचनार्थमेव ।

दोषसंज्ञेयं न च वा धात्वर्थानुसारेणोपयुक्ता किन्तु संज्ञार्थेनैव । संज्ञार्थो नाम सङ्केतार्थः "अन्यशास्त्रासाधारणी संज्ञा" इति संज्ञालक्षणम् । अतो दोषसंज्ञयोपदिष्टा वातादयः सर्वदा दूषणस्वभावा एव इत्याशङ्कानिरासः ।

ननु देहधारणकर्मकर्तारो वातादयः कथं वा धातुसंज्ञया न वाच्याः ?

धारणाद्धातवः इति धातुशब्दनिरुक्तिः, धारणं यथा कर्मरूपेण तथा द्रव्यरूपेणाधिष्ठानेनापि । शरीरे द्रव्यरूपाः स्थूला दृश्याश्च रसरक्तादयः पदार्थाः, तेऽपि आधाररूपाद्धारणाद्धातवः। सामान्यया धातुसंज्ञया वातादीनां रसादीनां वा ग्रहणमनिश्चितम्, संदेहापनोदनपूर्वं व्यवहाराय संकेतार्थाः संज्ञाश्चावश्यक्यः सन्ति। शरीरस्य दृश्यस्वरूपं रसरक्तादयः, तेषामुत्पत्तिः, तेषामेव वर्धनं क्षपणं विनाशो विकृतिश्च, विविधा विकारा अपि रसादिषु व्यक्ततां यान्ति, विकारान्तरेषु रसरक्तादीन्दूषितान् दृष्ट्वा के दूषयितारः इत्यस्य उत्तरं वाताद्याः इति । यतो वातादीनामेव शरीरे क्रियाकारित्वम्। विमृश्यैतद् अधिष्ठानस्वरूपद्रव्यवाचकधातुसंज्ञया भिन्ना दोषसंज्ञा वातादीनामसंदिग्धव्यवहारसंपादनार्थमुपयोजिता । कर्तृत्वसामर्थ्यसूचकया संज्ञयाऽनया रसरक्तादिषु दुष्टेष्वपि दोषाणां धातुदूषकाणां साम्यं संपादनीयम्, संजाते दोषसाम्ये रसरक्तादीनां धातूनामपि साम्यं साधयति–इत्यभिप्रायविशदीकरणाय वातादयो दोषसंज्ञया अभिहिताः, अतोऽनेनाभिप्रायेण रसरक्तादयो धातवो दूष्याश्च, तथा वातादयो दोषाः इति संज्ञाभेद उपदिष्टः ।

दोषधातुमलेषु को वा स्वरूपभेदः..........

"दोषधातुमलमूलं हि शरीर" मिति शारीराः पदार्थास्त्रयः समासेन परिगणिताः । विविधावयवसमुदायं शरीरमखिलं दोषधातुमलस्वरूपम् । शरीरस्य समवायिकारणत्वेन अवस्थिताः सर्वे सूक्ष्मघटकाः सदा उत्पत्तिं विनाशं च अनुभूयमाना जीवन्ति । अतश्च तेषां नित्यमवस्थात्रितयं स्यात् । उत्पत्तिः, स्थितिः, क्षयश्च, उत्पाद्यमानावस्थायामुत्पादनसामर्थ्यसंपन्नाः, हीयमानावस्थायां हीयमानसामर्थ्याः, मध्यमावस्थायां च स्थीयमानावस्थाः–एवमवस्थात्रये शारीराः पदार्थाः सर्वदा वर्तन्ते। उत्पादनसमर्थास्ते सामर्थ्योत्कर्षसंपन्नाः, हीयमानावस्थाश्च हीनसामर्थ्याः, मध्यमावस्थावस्थिताश्च सामर्थ्योत्कर्षरूपान् हीनसामर्थ्यरूपांश्च धारयन्त्याश्रयरूपाः । अतस्ते धारणादाश्रयरूपाद्धातवो रसरक्तादयः, हीनसामर्थ्याश्च मलाः, उत्पादनसामर्थ्ययुक्ता अपि वातादयो विकृताः सन्तो रसरक्तादीन्धातून्दूषयन्तीत्यतो दोषशब्दवाच्याः–इति व्यवहारसौकर्यार्थमयं संज्ञानिर्णयः । तत्त्वतस्तु.........

दृश्याः स्थूलद्रव्यरूपा रसरक्तादयः धातवः (१)

रसरक्तादीनामेव धातूनां हीनसामर्थ्यास्तदाश्रयाश्चांशाः मलाः (२)

धातूनां रसरक्तादीनामुत्पादनादिक्रियाकारिणः सामर्थ्यसंपन्नाः धात्वंशसमाश्रिताः परमसूक्ष्मांशाः दोषाः । (३)

शारीराणां पदार्थानां धातूनां धातुघटकानां वा.....

१ सामर्थ्योत्कर्षसंपन्नः सामर्थ्यस्वरूपो वा भागो दोषाख्यः।

२ ....सामर्थ्ययुक्तः सामर्थ्याश्रयो वा धातुः।

३ हीनसामर्थ्यः स्थूलो धात्वाश्रितो भागः मलः। इति

दोषो धातुर्मलश्चैवं शरीरघटकास्त्रिधा।
विभज्यन्ते त्रयो दोषाः श्लेष्मपित्तानिलास्त्रिधा॥१॥
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः।
सप्तसंख्याः शकृन्मूत्रस्वेदाख्याः स्युस्त्रयो मलाः॥२॥
दोषाः शक्तिस्वरूपास्ते सूक्ष्मधात्वंशमाश्रिताः।
हीनशक्तिद्रव्यरूपा मला धात्वाश्रिता मताः॥३॥

---

## अथ त्रिदोषविज्ञानम्।

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा॥ १ ॥
नर्ते देहः कफादस्ति न पित्तान्न च मारुतात्।
शोणितादपि वा नित्यं देह एतैस्तु धार्यते॥१॥
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः।
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च॥१॥

"वातपित्तश्लेष्माण एव देहसंभवहेतवः, तैरेवाऽव्यापन्नैः शरीरमिदं धार्यते"। इत्यादिभिर्वाक्यैरायुर्वेदप्रधानप्रथिततन्त्रेषु वातपित्तानिलानां दोषाणां त्रयाणां प्राधान्यमुपवर्णितं दृश्यते, सर्वस्वस्थातुरहितं शरीरस्य वातादिदोषत्रयानुसारेण विवेचितमवलोक्य के नाम एते वातपित्तश्लेष्माणो दोषाख्यः, किं वा स्वरूपमेतेषाम्, कथं वा स्वस्थस्य सर्वक्रियाकरणत्वमेतेषु, कथं वा विकृतास्ते विविधान्विकारानुत्पादयन्ति, इत्येतच्चिन्तनीयः स्याद्विषयो जिज्ञासूनाम्।

शरीरं नाम चेतनाधिष्ठानभूतानां भूतानां विकारसमुदायात्मकमिति। पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि प्रसिद्धानि, तेषां स्थूलत्वम्, द्रवत्वम्, उष्णत्वम्, सूक्ष्मत्वम्, सुषिरत्वं चेति भूतानां गुणाः क्रमेण लक्षणानि वा। चेतनं चेतना वा नाम सर्वेषां भूतानां भूतविकाराणां च प्रेरिका स्यात्। सृष्टानामपरिसंख्येयानां पदार्थानां विशिष्टनामरूपोपलक्षितानां वैविध्येपि स्थूलत्वादिपञ्चधात्रविभागः सामान्य एव। पञ्चभूतानि निखिलसृष्टपदार्थानामुपादानकारणम्, पञ्चभूतेष्वाकाशः केवलमवकाशस्वरूपः, अनन्तावकाशस्वरूपेऽस्मिन्नाकाशे पृथिव्यप्तेजोवायूनां चतुर्णां परमाणवः परस्परं संघीभावमापन्नाः परिमाणभेदाद्रचनावस्थानभेदाच्च विविधस्वरूपाः पदार्थाः संजायन्ते, सृष्टपदार्थेषु विविधेषु भूतांशानां रचनापरिमाणभेदे सत्यपि संघीभावसामान्यं वर्तते, न च विना संयोगेन पदार्थस्य उत्पत्तिः, अत एवाख्यातम्, "तत्र संयोगापेक्षी लोकशब्दः, लोकस्तिष्ठति संयोगात् तत्र सर्वं प्रतिष्ठितमिति।"

सामान्यनियमानुसारतः शरीरमपि संयोगसंभवम्, संभूताः पञ्चभूतविकारांशाः शरीरोत्पत्तिकराः, धातवो रसरक्तादयः शरीरस्य पदार्थाः सप्तसंख्याकास्तेऽपि पञ्चभूतांशैराहारगतैः संयोगमापन्ना एव वृद्धिमायान्ति।

रसरक्तमांसमेदोऽस्थिमज्जाशुक्राणीति शारीराः पदार्थाः सप्त घनद्रवोभयात्मकस्वरूपाः, शिरःशाखादयस्तथा आमपक्वाशयादयश्च अवयवाश्चानेके शरीरस्य तेषु स्वरूपावस्थानभिन्नत्वे सत्यपि उत्पत्तिविनाशस्वरूपं वृद्धिक्षयरूपं वा कर्म सामान्यमेव सर्वेषु दृश्यते।

शरीरस्यावयवाः सर्वे परमाणुस्वरूपा अपि वृद्धि-

क्षयात्मकमुत्पत्तिविनाशात्मकं वा व्यापारमनुवर्तमाना एव जीवन्ति। उत्पत्तिविनाशयोः वृद्धिक्षययोर्वा सातत्यं जीवनं नाम। जीवमानावस्थावस्थितानामवयवानां जीवानां च, सर्वसृष्टपदार्थव्यापकोयं नियमः।

शरीरे मध्यभागावस्थितेषु अवयवेषु विविधस्य षड्रसस्याहारस्य पचनं भवति, विपाचिताच्चाहाराद्रसः संजायते नाम्नाऽहाररस इति। पाञ्चभौतिकसामान्यादाहाररसे रसरक्तादीनां पदार्थानां शारीराणां धात्वपरपर्यायेणोपवर्णितानां सर्वेषामवयवानां च पोषकाः परमाणवो विद्यन्ते, तैश्च रसरक्तद्वारतः सर्वशरीरान्तर्गतस्थूलसूक्ष्मभागप्रविष्टैः सर्वे स्थूलसूक्ष्माः शरीरावयवाः परिपुष्टा भवन्ति संवृद्धाश्चोपलक्ष्यन्ते, स्वाभाविकेन कर्मणा तथा धात्वन्तरस्वरूपपरिणामेन क्षीणाश्च जायन्ते। एवं क्षीणानामुपबृंहणं, ह्रासनं चोपबृंहितानामित्येतयोर्वर्धनक्षपणयोः सातत्यमेव जीवितमिति नाम्ना भण्यते।

उत्पत्तिविनाशात्मको वृद्धिक्षयात्मको वा जीवनव्यापारोऽयं पोषकाणामणूनां संग्रहात्तथा हीनवीर्याणां शरीरघटकाणूनां वियोजनात्संभवति, अतो जीवितव्यव्यवहारे सर्वासु शारीरक्रियासु संयोगो वियोगश्चेति क्रियाद्वयं प्रधानतममिति। शारीरेष्वखिलेषु स्थूलसूक्ष्मेषु घटकेष्ववस्थितेन संयोगसामर्थ्येन बाह्यादाहाररसात् पोषकांशाः संगृह्यन्ते धातुवर्धनकराः तैः सारूप्यमुपागतैर्धातुघटकानामभिवृद्धिर्भवति, अतश्च संग्रहादनन्तरं संगृहीतानां सात्मीकरणं पचनं वा अवश्यमित्यर्थादवगम्यते। विसदृशानपहाय सधर्मणां सात्मीकरणं पचनं नाम। पचनस्याभावे संगृहीताः सहवासिनो भवन्ति न ते सारूप्यमुपयान्ति, न च वा स्वरूपवृद्धिर्भवति, शारीरपदार्थानां संवर्धने यथा पचनमवश्यं तथा ह्रासावस्थायामपि। संवृद्धाः शारीराः पदार्थाः सर्वे वृद्धेरनन्तरं उत्तरधातुत्वगमनायोत्सुकाः पूर्वस्वरूपं विहाय उत्तरधातुरूपेण उत्क्रामन्ति। एवं "रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्जतः शुक्रसंभवः" इति क्रमेण रसादीनां धातूनामुत्क्रान्तिरुपवर्णिता। उत्क्रान्ताश्च चरमां शुक्रावस्थामधिगच्छन्ति।

यथोक्तम् "एवं मासेन रसः शुक्रीभवति" इति।

उत्तरावस्थागमनमिदं धातूनां साकल्येन युगपद्वा न स्यात् किंतु क्रमात्केनचिदंशेन च। उत्क्रान्तिसमुत्सुकास्तु धात्वंशाः पूर्वधाताववस्थातुं नोत्सहन्ते वियोगाकाङ्क्षिणश्च भवन्ति। एवंविधानां पूर्वापरविभक्तीकरणमवश्यं तच्च धात्वन्तरस्थितेन पचनसामर्थ्येन पृथक्करणसामर्थ्येन वा भवति। पूर्वधातुवियुक्तानां घटकानां केचनांशाः उत्तरधात्वपेक्षया हीनसत्वाः तेषां ससत्वैः पृथक्करणमपि पचनसामर्थ्येनानेन भवति। एवं संगृहीतानां सात्मीकरणे तथा वियोगसमुत्सुकानां विभक्तीकरणे च पचनाख्यं कर्मावश्यमिति सुगमं सुधियाम्।

पोषकाणां वृद्धिकराणामुत्पादनसाधनानां वा संग्रहः संयोगो वा, संगृहीतानां सात्मीकरणे तथा उत्तरधातुगमनाकाङ्क्षिणां, हीनसत्वानामपि च विभक्तीकरणं, पृथक्करणं पचनं वा, विभक्तानां च वियोजनमुत्सर्गनं विक्षेपणं वा इति इमानि कर्माणि त्रीणि सर्वशरीरव्यापित्वेन प्रवर्तमानानि शारीराणां सर्वासां क्रियाणां सामान्यानि प्रधानतमानि चेति। त्रयाणां कर्मणामेतेषां कर्तारस्त्रयो देहेऽखिले संग्राहकः संयोजको वा, विभाजकः पाचको वा, तथा वियोजक उत्सर्गको वा इति कर्मणां त्रयाणां कर्तारः केचन आवश्यका इति निर्विवादमेव।

एतदेव कर्मत्रयं प्रधानतमं जीवनव्यापारस्येति विनिर्धार्य तत्कर्मकराश्चेति त्रयः श्लेष्मपित्तानिलनामधेयाः सर्वशरीरगताः सर्वक्रियाकराः शरीरस्याधारा इति आयुर्वेदतन्त्रेषु उपवर्णिताः। श्लेषणात् श्लेष्मा, पचनात् पित्तं, गतेश्चलनाच्च वायुः, एवमेते त्रयो दोषाः श्लेष्मपित्तवातनामधेयास्तत्स्वरूपाः शरीरस्येति सिद्धान्त आयुर्वेदस्य शारीरक्रियाविज्ञानदर्शको याथार्थ्येनेति को वा संदेहः।

संयोजनाख्यं च विभाजनाख्यं
वियोजनाख्यं त्रिविधं हि कर्म।
संपाद्यते यैर्गुणसङ्घरूपैः[1]
श्लेष्मा च पित्तं च समीरणः क्रमात् ॥१॥

एतेषां श्लेष्मपित्तानिलानां स्वरूपमायुर्वेदोपवर्णितमपि कर्मसंपादनायालं भवेयुस्ते यथा तथैव दृश्यते। यथा—

'स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः' श्लेष्मगुणेष्वेतेषु शीतत्वं स्निग्धत्वमिति गुणद्वयं सर्वातिशायित्वेनावस्थितं स्यात् यतः श्लेष्मणः संयोगकर्मणः प्रवर्तकं शीतत्वम्। गतेराकर्षकस्वरूपायाः प्रवर्तको गुणः शीतत्वं नाम। न्यायोपदिष्टेषु भूतानां पृथिव्यादीनां गुणेषु शीतत्वमपामाख्यातम्। "शीतस्पर्शवत्य आपः" इति। स्पर्शस्तु वायोः "रूपरहितः स्पर्शवान्वायु" रिति न्यायतन्त्रेषु। अनेन "शीतत्वमेव केवलमपां, न स्पर्शः, यतः स्पर्शस्तु वायोराख्यातः। स्पर्शो नाम चलन" मिति व्यवहारसुलभोऽर्थः। न चैवं स्पष्टतया व्याख्यातं दृश्यते न्यायतन्त्रेषु अपि तु कर्मव्याख्याने "उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि" कर्मणः पञ्चविधस्य कर्ता वायुः विमृश्यैतत्स्पर्शो नाम चलनमित्युपपद्यते। पञ्चविधे कर्मणि चलनस्य सामान्यमेव। अपि तु गतिभेदादेव कर्मभेदः संपद्यते। यथा—उत्क्षेपणमपकर्षणं च कर्मद्वयं गतेरपकर्षरूपायाः संपद्यते, आकर्षणमपक्षेपणं च गतेराकर्षकस्वरूपायाः कर्मद्वयं, केवलं गमनमिति स्थानवियोगः तदेव च केवलस्य वायोः कर्म। आकर्षणमपकर्षणं च अपां तेजसश्च संयोगाद् भवति क्रमात्, अत आख्यातमायुर्वेदे—

योगवाहः परं वायुः संयोगादुभयार्थकृत्।
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंयुतः॥ इति।

"शीतस्पर्शवत्य आपः" "उष्णस्पर्शवत्तेजः" इति न्यायप्रतिपादितमनुवर्तते। अयमायुर्वेदीयसिद्धान्तः भूमेरधिष्ठानभूतायाः परमाणवः केचित्संहतीभावमापन्नाः स्पष्टस्वरूपेण मूर्तत्वेन दृश्यन्ते पदार्था इति। संहतानां च वियोगाद्विनाशः पदार्थानामिति द्रव्यमखिलं क्ष्मामधिष्ठाय जायते इत्याख्यातमासीत्। सृष्टेरधिष्ठानं भूरापो योनिः त्रीणि भूतानीतराणि प्रत्ययाः इति वर्णनात् पृथिव्यंशभूयिष्ठाः सर्वे पदार्था इत्यधिगम्यते। पार्थिवाः परमाणवः परस्परं संयुज्यन्ते—संहतीभावमायान्ति तदा पदार्थस्योत्पत्तिः, यदा च वियुज्यन्ते तदा विनाशः, शरीरस्योत्पत्तिविनाशावप्येवमेव संयोगवियोगनिमित्तौ। शरीरं, विग्रहः, संहननमिति नामानि शरीरस्य संयोगवियोगजावुत्पत्तिविनाशौ सूचयन्ति।

पदार्थस्य नामरूपोपलक्षितस्य दृश्यत्वं मूर्तत्वं पृथिव्याः। यथोक्तं चरकसंहितायां "पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्च" इति। तथा संयोगविभागविषये....."षड्धातुसमुदायो हि सामान्यतः सर्वे-

[1] गुणसमुदायो द्रव्यमिति सिद्धान्तात्—

लोकशब्दः, षड्धातुविभागो वियोगः स जीवापगमः स प्राणनिरोधः स भङ्गः" इति ।

स्थिराः पार्थिवाः अणवः ते गतिस्वरूपेण वायुना विचाल्यन्ते । संयोगान् मूर्तत्वं वियोगाच्च मूर्तत्वविनाशः । गन्धवत्याः पृथिव्याः परमाणूनां वहनादेव वायोर्गन्धवाह इति नाम । वायोर्गतिश्चलनं वा यदा स्यादाकर्षकं तदा पार्थिवाः परमाणवः संहतीभावमापन्नाः पदार्थत्वं प्राप्नुवन्ति । आकर्षकत्वे निमित्तं गुणः शीतः । ततः संश्लेषणकर्मणः श्लेष्मणः शीतत्वं प्रधानं श्लेषणकर्मप्रवृत्तिकरं चेत्यभिहितम् । शीतत्वेन समाकृष्टाः परस्परं संहताः एकरूपत्वं प्राप्ताः परमाणवो मूर्तत्वमायान्ति । समाकृष्टानां संहतीभावस्य निमित्तं स्नेहो गुणः सामर्थ्यं वा ।

स्नेहः संहतीभावस्य साधनं "चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः" इति न्यायनिपुणैर्व्याख्यातम् । स्नेहवान् स्नेहगुणसंपन्नो वा श्लेष्मा, अत आयुर्वेदे स्निग्धः श्लेष्मा इति वर्णितम् । श्लेषणस्य संहतीभावस्य वा शीतत्वमारम्भकं स्निग्धत्वं च पूर्णताकरमिति शीतस्निग्धौ प्रधानौ श्लेष्मगुणेषु । स्निग्धत्वेन संहतीभावमापन्ने परमाणूनां समुदाये सापेक्षतया गुरुत्वं सहजमेव । संहत्याऽवस्थाने चञ्चलत्वस्यापि अभाव एव । अतश्च स्थिरत्वं मन्दत्वं च स्वाभाविकम् । परस्परं पूर्णत्वेनानुप्रविष्टाः परमाणवः समदेशवर्तिनो न निम्नोन्नता इति श्लक्ष्णत्वमप्संयुतानां किंचित् द्रवावस्थावस्थितानां परस्परानुप्रवेशसंभवः, अनेनैवाभिप्रायेण द्रव्योत्पत्तिवर्णने "अंबुयोनि" इत्याख्यातं द्रव्यम् । किंचिदार्द्रावस्थायां मृत्स्नत्वस्य संभवः, एवमेते आयुर्वेदोपवर्णिताः श्लेष्मगुणाः स्निग्धशीतादयः श्लेषणसामर्थ्याधिष्ठानरूपस्य द्रव्यस्य तत्कर्मसाधनायावश्यकाः स्वाभाविकाः सन्ति । अवबोधसुगममेतद्धीमतामिति ।

पृथक्करणाख्यस्य विभागात्मकस्य पचनाख्यस्य वा कर्मणः संपादकं पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवमित्युपवर्णितं भवति । पित्तगुणेष्वेतेषु प्रधानं स्यादुष्णत्वम् । श्लेषणस्य प्रवर्तकं यथा शीतत्वं तथा विश्लेषणस्य प्रवर्तकमुष्णत्वं स्यात् । "उष्णत्वमिति संघीभावविरोधिनः समुदायविरोधिनो वा भावस्योत्पादको गुणः" ततश्चानन्तरं पृथग्भावः, अतोऽभिहितं पित्तगुणेषु प्राधान्यमुष्णत्वस्येति । उष्णत्वस्यैव तीव्रतरं स्वरूपं तीक्ष्णत्वम् , उष्णत्वतीक्ष्णत्वाभ्यां समुदायत्वमसहमानाः केचनाणवः वियोजनारम्भे द्रुतत्वमुपयान्ति । "स्यन्दमानासमवायिकारणत्वं द्रवत्व"मिति न्यायविदः ।

वियोगोन्मुखानामणूनां प्रागसहिष्णुत्वं ततः स्यन्दनं पश्चाद्वियोगः इति क्रमेण वियोगो विनाशो ह्रासो वा भवति समुदायस्वरूपस्य मूर्तस्य पदार्थस्य । द्रवं तु सरं स्यादित्युपलक्षणीयं सुगमम् । शिथिलसंघावस्थायां स्यन्दगमनावस्थायां वा श्लिष्टसंघातापेक्षया लघुत्वं, स्यन्दमानावस्थायां न संयोगः न च वा वियोगः पूर्णत्वेन, इत्येवंविधायां मध्यमावस्थायां ईषत्स्नेहवत्वमुपपद्यते । विस्रत्वमित्यामगन्धित्वम् । गन्धानुमेयं प्रत्यक्षमिति पृथक्करणसामर्थ्यसंपन्नस्य पचनात्मकस्य वा पित्तस्य गुणाश्चैते याथार्थ्येनोपवर्णिताः सन्ति ।

वायोर्गतिस्वरूपस्य.........

"तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः" इत्यायुर्वेदतन्त्रेष्वभिभाषिताः सन्ति गुणाः । षट्संख्याकेष्वेतेषु चलत्वं रूक्षत्वं चेति गुणौ प्रधानतमौ स्तः, संयोगे वियोगे वा चलत्वं कारणं गुणः, अभावे

चलनस्य गतेर्वा आकर्षणमपकर्षणं च परमाणूनां संयोगवियोगकारकं न स्यात्। संघीभावमापन्नाः परस्परसंश्लिष्टाश्च परमाणवो यावत्स्नेहभावसंपन्नाः, तावद्वियोजनस्य अभाव एव। यदा च स्नेहरहितास्ते रूक्षा भवेयुः, तदा गतिस्वरूपेण वायुना वियुज्यन्ते। वियोजनकार्यस्य साफल्याय प्रथमं स्नेहस्य अभावो रूक्षतायाश्च संभव आवश्यकः, अतश्च वियोगाख्ये कर्मणि चलत्ववद्रौक्ष्यस्यापि प्राधान्यं गुणस्य। स्नेहरहिताः परस्परमसंसृष्टाः पृथग्भूताः परमाणवः समुदितापेक्षया लघवः संख्याबाहुल्यादिति लघुत्वम्। असंश्लिष्टत्वेन विषमस्थानावस्थितानां खरत्वं स्पर्शानुमेयम्। असंहत्या सूक्ष्मत्वात् सूक्ष्मत्वं च एतेषु। शीतत्वं तु वायोर्विशेषतश्चिन्तनीयं स्यात्—यतो न्यायविद्भिः "रूपरहितः स्पर्शवान् वायुः" इति वायोरनुष्णाशीतत्वं वर्णितम्। न्यायोपवर्णितो वायुरयं केवलो वायुः, आयुर्वेदोपवर्णितस्तु नैवम्। स च शीतानुविद्धो नाम अनुविद्धः। वर्णनेनैवंविधेन शारीराणां क्रियाणां स्वरूपदिग्दर्शनं कृतम्। शारीरेषु घटकेषु सदा संयोगो वियोगश्च भवतः, संयोगवियोगावेव मूलं जीवनव्यापारस्याखिलस्य इति। संयोगवियोगाभ्यामेताभ्यां युगपदेव वृद्धिरेकतः, क्षयश्चापरतः, एकत उत्पादनम्, विनाशश्चेतरतः-इति सातत्यं स्याज्जीवमानशरीरे। अत एव च शारीराणूनां संयोगवियोगाख्ये कर्मणी परस्परापेक्षिणी स्याताम्, यथा मूर्तस्वरूपादेकस्मादपाकृष्टाः केचनाणवः परस्मिन्नाकृष्यन्ते, मूर्तभावं च परस्वरूपमुपयान्ति। शारीरावयवाः सर्वे सूक्ष्मानुसूक्ष्माः परस्परानुविद्धाः परस्परावलम्बिनो भवन्ति, पूर्णतया पृथग्भावो नैतेषामायुर्मर्यादीकृत्य। वायोरुत्क्षेपणापक्षेपणादीनि कर्माण्युपवर्णितानि, तेषु गमनाख्यमेव तत्त्वतो गतिः, गतिर्नाम स्थानवियोगः, आकर्षणापकर्षणादिषु गतिवत्स्थानवियोगो न भवति। संजाते स्थानवियोगे कथं वा आकर्षणमपकर्षणमुत्क्षेपणमपक्षेपणं वा भवति। आकर्षणादीनि कर्माणि न केवलेन गतिस्वरूपेण वायुना संपाद्यन्ते, किं तु अनुविद्धेनेति कर्मविभागविमर्शादनुमीयते। शरीरे शारीराणां घटकानां गतिरप्याकर्षणापकर्षणस्वरूपा एव। आकर्षणापकर्षणाभ्यामेव धातूनां संयोगवियोगौ भवतः। मलानां शरीराद् बहिरुत्सर्जने तु गमनं गमनस्वरूपं केवलम्, यतो मलाश्चैते पुनर्नाकृष्यन्ते यस्मिन्कस्मिन्वा शरीरदेशे। धातूनामुत्पादने विनाशे च संयोगवियोगनिमित्ते आकर्षणापकर्षणाख्ये कर्मणी, ते च शीतानुविद्धेन वायुना भवत इति आयुर्वेदतन्त्रेष्वाख्यातमासीद्, 'वायुः शीतः' इति।

...............अनेनैवाभिप्रायेण श्रीचरकाचार्यैराख्यातम् "सर्वशरीरधातुव्यूहकरः संधानकरः शरीरस्य वायुरिति"

एवमेते वातगुणा रूक्षादयः शारीराणां क्रियाणां संपादकाः सार्थत्वेनाभिहिताः-इत्यवधारणीयं शारीरविदाम्।

शारीराणां पदार्थानां धातूनां धातुघटकानां वा नित्योत्पत्तिविनाशवृद्धिक्षयोत्क्रान्त्यपक्रान्तिस्वरूपस्य जीवनव्यापारस्य कर्तारश्चैते श्लेष्मपित्तानिलाः संयोगवियोगविभागाख्यानि जीवनव्यापारस्यावश्यकानि कर्माणि संपादयन्तीत्यायुर्वेदशास्त्रे श्लेष्मपित्तानिलाः पदार्थास्त्रयो दोषाः प्रधानतमा इति व्याख्याताः। उत्पत्तिविनाशसातत्यस्वरूपे जीवनाख्ये कर्मणि शरीरस्यापरिसंख्येयपरमाणुसमुदायस्वरूपस्य संयोजनं विभाजनं वियोजनं चेति कर्मणस्त्रिविधस्य कर्तारश्चैते त्रयो दोषास्तु तत्तत्कर्मसूचकैरन्वर्थकैरभिधानैरुपदिष्टाः-श्लेष्मा पित्तं वायुरिति। स्वरूपं च कर्मसंपादनानुरोधेनानुवर्णितम्। यथाः............

१ संधिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृत् श्लेष्मा पञ्चधा प्रविभक्तः उदककर्मणा अनुग्रहं करोति ।

२ रागपक्त्योष्मतेजोमेधोष्मकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्मणा अनुग्रहं करोति ।

३ प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति ।

"विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ १ ॥"

इत्येतैर्वाक्यैः श्लेष्मपित्तानिलानां संयोगः, विभागः, विक्षेपश्च-इत्येतानि कर्माणि क्रमात् शरीरोपकारकाण्याख्यातानि ।

एवं श्लेष्मपित्तानिलानां दोषाणां तत्त्वतः निखिलशरीरव्यापित्वेनावस्थितानां रचनाद्रव्यगुणकर्मभेदाद् विभिन्नेष्ववयवान्तरेषु कर्माणि विविधानि । अपि तु संयोगविभागविक्षेपाः साधारणा एव सर्वेषु, सर्वासां क्रियाणामन्तर्भाव एतेषु ।

इदमत्रावधारणीयं दोषविज्ञाने—

१—सर्वेषां सृष्टपदार्थानां शरीरावयवानां च विभिन्नत्वेपि सामान्यमुपादानं पञ्च भूतानि, षष्ठं चेतनं च ।

२—शरीरे अवयवान्तरभेदाद् विभिन्नेपि क्रियारूपे शारीरघटकेषु निखिलेषु उत्पत्तिविनाशसातत्यस्वरूपं जीवनाख्यं कर्म सामान्यम् ।

३—कर्मणश्चैतस्य संयोगविभागविक्षेपस्वरूपं त्रैविध्यम्, तदपि सामान्यम् ।

४—ततश्च संयोगकर्ता, विभागकर्ता, विक्षेपकर्ता च इति कर्मकर्तारस्त्रयः पदार्थाश्चाप्यवश्यं सर्वशरीरगताः ।

५—एत एव च श्लेष्मा पित्तं वायुरिति नामधेयैरन्वर्थकैराख्याता आयुर्वेदविद्भिः शारीरतत्त्वविवेचने यथार्थत्वेनेति ।

श्लेष्मपित्तानिलाख्यानां त्रिदोषाणां समासतः ।
आयुर्वेदोपदिष्टानां विज्ञाने दिगियं भवेत् ॥ १ ॥



# त्रिदोष-विज्ञानम्

(लेखकः—श्रीमदुपेन्द्रनाथदासमहाभागः)



सत्त्वाद्यैः प्राक् त्रिभिरिह यया सृज्यते विश्वमेतद्
वाताद्यैश्च त्रिभिरपि पुनः सृज्यते जीवजातम् ।
तेषां द्वेधापरिणतिवशात्पाल्यते नाश्यते तत्
सर्वेषां तां प्रकृतिजननीं नौति सत्यामुपेन्द्रः ॥

समुपलभ्यमानचरकसुश्रुतसंहितयोराख्यायिकांशपाठादवगम्यते-त्रेतायुगप्रारम्भादेव मनुष्याणां कथञ्चिदधार्मिकत्वादाहारविहारविधिविलङ्घनाच्च विविधविकारोत्पत्तिरभूत् । सुश्रुतसंहितालेखको भगवान् सुश्रुतस्तु विश्वामित्रात्मजः क्षत्रियश्चेति प्रसिद्धम् । भगवद्रामचन्द्रस्योद्ध्र्वतनपुरुषमहाराजहरिश्चन्द्रसमयेऽपि विश्वामित्रस्य ब्राह्मणत्वमासीत्, ततस्तु भगवता सुश्रुतेन

ततोऽपि प्राग्जातेन भवितव्यम्। भगवतो भरद्वाजस्य सम्प्रदायस्तु ततोऽपि प्राचीन इति सतां सिद्धान्तः। एतेनायुर्वेदस्येहागतस्य बहुलक्षवर्षमितः समयो व्यतीत इति प्रतीयते। यद्यप्यायुर्वेदस्यैवंविधप्राचीनत्वे सन्देहवतामतीवार्वाचीनत्ववादिनां बहवः प्रमाणाभासाः श्रूयन्ते, तथापि नायं तेषां खण्डनावसर इति तत्प्रयासं विहायैवमुच्यते—यन्मर्त्यलोकेऽयमेवायुर्वेदः प्रथमं चिकित्साशास्त्रमिति नात्र कस्यचिदपि विरोधो विद्यते। तत्र प्राचीनार्वाचीनायुर्वेदतन्त्रयोरालोचनादवगम्यते-यद्रसादिसंख्यानिरूपणाद्यवान्तरमतभेदे सत्यपि वातपित्तकफाभिधानदोषत्रयादेवाविकृताच्छरीरधारणं विकृताच्च रोगोत्पत्तिरिति सिद्धान्ते कस्यचिदप्याचार्यस्य मतविरोधो नास्ति। तत्र भगवता सुश्रुताचार्येण रक्तस्यापि दोषत्वमङ्गीकृतमिति केषाञ्चिद्विद्वन्मन्यानां प्रलापस्तु वातपित्तश्लेष्माण एव शरीरसम्भवहेतव इत्यादि तत्रत्यलेखदर्शनाद् दोषभेदविकल्पाध्यायदर्शनाच्च सम्यगपास्यते। वातजादिवद्रक्तजार्शो विद्रध्यादिलिङ्गदर्शनाद् यदि रक्तस्य दोषत्वमङ्गीक्रियते, तदा मेदोजगलगण्डग्रन्थ्यादिलिङ्गदर्शनाच्छुक्राश्मरीमूत्रवृद्धिप्रभृतिलिङ्गदर्शनाच्च तेषामपि दोषत्वं प्रसज्येत। अतो दृश्यते-वातपित्तकफा एवाविकृताः शरीरोत्पत्तिस्थितिविनाशहेतव इति सर्वायुर्वेदसिद्धान्तः। सर्वदेशप्रसिद्धानां विभिन्नचिकित्सातन्त्राणामायुर्वेद एव मूलं प्राचीनतमश्चेति परीक्षकैरैतिहासिकैश्च प्रमाणीकृतम्। तत्र यूनानदेशप्रसिद्धचिकित्सातन्त्रेऽपि वातपित्तकफानां दोषत्वमङ्गीकृत्य रक्तस्यापि दोषत्वमङ्गीकृतम्, तन्न मन्यते। यथा सुश्रुते केषाञ्चिद्रोगाणां पित्तजरोगसमानलक्षणत्वेऽपि दूष्यप्रधानस्य रक्तस्यैव तत्र शोधनीयत्वादिदर्शनाच्चिकित्सासूत्रज्ञानोपयोगिरोगज्ञानार्थं तेषां रक्तजसंज्ञायामङ्गीकृतायां केषाञ्चिद्रक्तस्य दोषत्वाङ्गीकारः, तथैतेषामपि यूनानदेशीयविदुषां मतमिति तेषां मतेऽपि सर्वे रोगा यथा वातादिजा भवन्ति, न तथा सर्वे रोगा रक्तजा भवितुमर्हन्ति। तस्मादापाततो दृश्यमानेऽपि कथञ्चिद्वैषम्ये न वस्तुवैषम्यमस्ति। केचनाधुनिकसभ्यास्तन्त्रकाराः स्वस्वकल्पनाबलेन नवां नवां चिकित्साप्रणालीमाविष्कृत्य वातादीनां प्राधान्यं नाङ्गीकुर्वन्ति, तत्तत्तन्त्राध्यायिनो नावलोकितायुर्वेदाः केचन विदेशीया एतद्देशीयाश्च न केवलं वातादीनामस्वीकारसाहसिकाः, किन्त्वमितज्ञानविज्ञानविधौताज्ञतामलान् जगदुपकारार्थप्रचारितायुर्वेदविज्ञानान् महर्षीनपि भ्रान्तानुक्त्वा स्वकीयज्ञानगौरवाभिमानिनो भवन्तीति त्रिदोषविचारावसरः सम्प्राप्तः। तत्राविकृतानां वातादीनां शरीरधारकत्वम्, विकृतानां च रोगोत्पादकत्वमित्यायुर्वेदसिद्धान्ते प्रथमं विचार्यमेषां शरीरधारकत्वमस्ति नवेति। तत्र शरीरोत्पत्तिवर्णने भगवान् सुश्रुत आह—

(१) "स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति, ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतम्" इत्यत्र पुरुषशरीराच्छुक्रनिर्गमे वायोस्तेजोरूपस्य च पित्तस्य प्रयोजनम्।

(२) द्वितीये "शीतोष्मानिलैरभिपच्यमानानां महाभूतानां संघातो घनः संजायते"। अत्र घनत्वाय दोषत्रयाणामुपयोगित्वम्।

(३) असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः।
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति॥
ततोऽस्यान्त्राणि जायन्ते गुदं बस्तिश्च देहिनः।
उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्।
कफशोणितमांसानां सारो जिह्वा प्रजायते॥
यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्।
अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥

"मांसासृक्कफमेदःप्रसादाद् वृषणौ" "शोणितकफप्रसादजं हृदयम्" इत्यादौ तत्तदवयवोत्पत्तौ दोषत्रयाणामुपयोगिता दृश्यतेऽतो दोषत्रयानङ्गीकारे एषामुत्पत्तिर्नसम्भवतीति। यद्यप्येषामुत्पत्तौ स्वभावप्रेरितरक्तादीनामेव कारणत्वाङ्गीकारेऽपि कथञ्चित्समाधानं भवितुमर्हति (अस्माभिस्तन्न स्वीक्रियते, यत् स्वभावो न रक्तं प्रेरयति, किन्तु वायुरेवेति) तथापि वातादिप्रकृतीनामुत्पत्तिर्न संभवत्येव। सुश्रुते प्रकृतिकारणमेवमभिहितं यथा—"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः प्रकृतिर्जायते तेन"।

वातप्रकृतिलक्षणं यथा-जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्यनार्यो गान्धर्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति—

**अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी**
**द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति**
**सम्भ्रमेण सुप्तः॥**
**अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः।**
**किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष पुरुषः॥**

पित्तप्रकृतिलक्षणं यथा—स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रजिह्वौष्ठपाणिपादतलनखनयनो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति।

**मेधावी निपुणमतिर्विगृह्य वक्ता**
**तेजस्वी समितिषु दुर्निवारवीर्यः।**
**सुप्तः सन् कनकपलाशकर्णिकारान्**
**सम्पश्येदपि च हुताशविद्युदुल्काः। इत्यादि।**

कफप्रकृतिलक्षणं यथा-दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवाँश्चिरग्राही दृढवैरश्च भवति—

**शुक्लाक्षः स्थिरकुटिलातिनीलकेशो**
**लक्ष्मीवान् जलदमृदङ्गसिंहघोषः।**
**सुप्तः सन् सकमलहंसचक्रवाकान्**
**सम्पश्येदपि च जलाशयान् मनोज्ञान्॥ इत्यादि॥**

एवं द्विदोषलक्षणलक्षितो द्वन्द्वप्रकृतिकस्त्रिदोषलक्षणलक्षितश्च सन्निपातप्रकृतिक उच्यते। एवंरीत्या सर्वेषामेव मनुजानां प्रकृतिविचारः सम्भवति। प्रकृतिज्ञानमन्तरेण ज्वरादिरोगाणां साध्यत्वादिनिश्चयो न सम्भवति, न वा चिकित्सासूत्रविज्ञानम्। कथमिति चेत्-पित्तप्रकृतेः पित्तज्वरः कष्टसाध्यः, सुखसाध्यश्चेतरेषाम्, एवमन्यत्रापि। तथा कफप्रकृतिकस्य मनुजस्य संजाते मलेरियाख्यज्वरे यदौषधं यया रीत्या कार्यकरं भवति, न तदेव तयैव रीत्या पित्तप्रकृतिकस्यापीति सर्वचिकित्सकैरनुभूतं सत्यम्।

ये त्वविज्ञातप्रकृतिका अवज्ञातप्रकृतिकाश्च भिषजो वातपित्तप्रकृतावपि रूक्षोष्णं भेषजं योजयन्ति, ते त्वातुरं कीदृक् क्लेशयन्तीति नाविज्ञातं केषांचिदपि। अधुना वातादीनां प्रत्येकशः कथंचिद् वर्णनं क्रियते—

**वायुः**—तत्र "वा गतिगन्धनयोः" इत्यस्माद् धातोर्वायुरिति रूपम्। यद्यपि निरुक्तिमात्राद् गतिशीलो गतिकारको वा वायुरिति गम्यते, तथापि सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्चेत्यनुशासनाद् गतिप्राप्तिज्ञानकारको वायुरित्यर्थो लभ्यते। सर्वेषामेव प्राणिनां शरीरे गतिः प्राप्तिर्ज्ञानञ्च संजायते इति प्रत्यक्षसिद्धमेव। वातनाड्य एव (Nerves) गत्यादीनां कारणमित्याधुनिकमतम्। नाडीनां सूत्रमात्रत्वात्तदवस्थितो वायुरेव गत्यादीनां कारणमिति प्राचीनमतम्। तत्र यदि नाडीनामेव कारणत्वं वैज्ञानिकं मतं स्यात्, तदा विद्युद्वार्तावहताप्रस-

त्राणामपि वार्तावाहकत्वं कथं न कथ्यते, यदि वार्तावाहकविद्युतोऽवलम्बनमात्रत्वात् सूत्राणां कारणत्वम्, वार्तावहने तु विद्युदेव कारणमिति सत्यम्, तदा नाड्योऽपि गत्यादिकारणस्य वायोराश्रयत्वेन कारणम्, गत्यादिकारणं तु वायुरेवेति प्राचीनमेव मतं सत्यमवगम्यते। चरके वातकलाकलीये वायोः स्वरूपगुणादीनां यथा वर्णनं दृश्यते, तदेव किञ्चिद् विवृत्य लिख्यते।

### १ वायुस्तन्त्रयन्त्रधरः।

तन्त्र्यन्ते–नियम्यन्ते स्वरयन्त्रहृद्यन्त्रादीन्यैच्छिकानैच्छिकयन्त्राण्यनेनेति तन्त्राणि-वातसूत्राणि, यन्त्राणि तु रक्तशोधनान्नपरिपचनादिविशिष्टकार्यकराणि हृदामाशयादीनि, धरति-स्वकार्यसमर्थं जनयतीति तदर्थः। यावत् प्राणादयो वक्ष्यमाणा वायवस्तत्र तत्रावस्थिताः सन्तो हृदादीन्यनैच्छिकानि स्वरयन्त्रादीन्यैच्छिकानि च यन्त्राणि तच्चालकानि वातसूत्राणि च यथायथं चालयन्ति, तावदेव तेषां स्वकार्यक्षमत्वं दृश्यते। निर्गते तु प्राणादिवायौ सर्वेषामेव तेषां प्रस्तरवज्जडत्वं सम्पद्यते इत्यपि प्रत्यक्षमेव। ये त्वविज्ञातवाता अवज्ञातवाताश्च वैज्ञानिका हृदादीनां स्वभावचालितत्वं मन्यन्ते, तेषां मते सत्सु हृदादिषु तेषां क्रियानिवृत्तिर्न सम्भवति, स्वभावस्यानपायित्वात्। तस्माद् हृदादिक्रिया न स्वाभाविकी किन्तु वायुकृता इति सत्यम्।

'प्राणोदानसमानव्यानापानात्मा'—एक एव वायुर्विभिन्नेषु शरीरप्रदेशेष्ववस्थितो विभिन्नं कार्यं कुर्वन् विभिन्नां संज्ञां लभते। यदुक्तम्—

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे च व्यानः सर्वशरीरगः"॥ इति।

तत्र प्राणवायुः—

योऽनिलो रक्तसंचारी स प्राणो नामदेहधृक्।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चैवावलम्बते॥

आभ्यन्तरीभिः क्रियाभिः शरीराभ्यन्तरे तीव्रमेकं विषं सम्पद्यते, तदल्पेनैव कालेन मनुजं शमनभवनातिथिं कर्तुं समर्थम्, किन्तु विधिविधानात्तद्रक्तेन संयुज्यते। विषयुक्तं तद्रक्तं कृष्णं सत् शिराचालितं हृदयमागच्छति, ततः फुप्फुसीयाधमनीद्वारा फुप्फुसावागच्छति। श्वासमार्गेण फुप्फुसागताद् वायोर्नभोऽमृतमोविसर्जनाख्यं गृहीत्वा स्वकीयञ्च विषं प्रश्वासद्वारेण बहिर्विक्षिप्य रक्तं शुद्धं संजायते। ततः फुप्फुसीयाशिराद्वारा पुनर्हृदयमागत्य ततो महाधमनीद्वारेण निर्गत्य धमनीकेशिकाभिः सर्वशरीरं व्याप्नोति, तस्मादेवास्माद्दशः प्राणितीति। सत्यां खलु श्वासद्वारेण रक्तसंचारक्रियायां न कदाचित् कस्यचिन्मृत्युः सम्भवति, श्वासरोधाच्च मृत्युरिति प्रत्यक्षे सत्ये नास्ति विवादः। किन्तु क्रियाऽसौ प्राणवायुजन्या हृदयादिजन्या वेति सन्देहेऽन्वयव्यतिरेकदर्शनात् प्राणवायुरेवात्र कारणं निश्चीयते। तस्मादेव प्राणवायुर्देहधृगपि कथ्यते। तद्रहितस्य देहस्य पूतित्वमाशु दर्शनात्। स प्राणवायुर्वातसूत्रद्वारा पेशीः संचालयन्नन्नपानीयादिकमामाशयं प्रापयति। अत्राप्यन्नस्यान्तःप्रवेशक्रियायां प्राण एव कर्ता, सूत्रपेश्यादयस्तु लौहकारस्यायोघनादिवत्साधनमात्रमन्वयव्यतिरेकदर्शनादवगम्यते। स प्राण एवान्यानुदानादिप्राणानप्यवलम्बते-स्वकार्यक्षमान् कृत्वा धारयति, तेषामपि प्राणेन सहान्वयव्यतिरेकदर्शनात्।

प्राणवायुसमायुक्तः प्राणीति परिकथ्यते।
प्राणहीनो मृतो लोके जडो वा परिगण्यते॥
प्राणवायुविहीनोऽपि यदि वैज्ञानिको भवेत्।
जडस्तु कीदृशो नूनं तदपि परिचिन्त्यताम्॥

रक्तसंचारीत्यत्र वक्रसंचारीति पाठेऽपि मुखनासादिद्वारेण श्वासप्रश्वासादिरूपेण संचरणशीलो वायु

रक्तपरिभ्रमणादिक्रियाद्वारा शरीरं धारयन् प्राणवायुः कथ्यत इति तुल्य एवार्थः। एतस्यैव प्राणवायोः प्रकोपात् कासश्वासादयो रोगा जायन्ते प्राणिनां सदेति प्रत्यक्षमेव।

### उदानवायुः—

उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः।
तेन भाषितगीतादिविशेषोऽपि प्रवर्तते॥
ऊर्ध्वजत्रुगतान् रोगान् करोति कुपितश्च सः।

उदगयनादुदानसंज्ञावगन्तव्या। उदानवायुपरिचालितवातसूत्रप्रेरितस्वरयन्त्रादितो भाषितगीतादिः प्रवर्तते। अत्राप्यन्वयव्यतिरेकदर्शनादुदानवायुरेव भाषितादिप्रवृत्तिक्रियायाः कर्ता, वातसूत्रस्वरयन्त्रादयस्तु पूर्ववत्साधनमात्रमित्यवगन्तव्यम्। अस्य प्रकोपादूर्ध्वजत्रुगताः शालाक्यतन्त्रवर्णिता मुखनेत्रादिजा रोगा जायन्त इति।

### समानवायुः—

आमपक्वाशयचरः समानोऽग्निसहायवान्
अन्नं पचति तज्जांश्च विकारान् विविनक्ति सः।
गुल्माग्निसादातीसारान् कुपितश्च करोति सः॥

चर्वणकाले लालारसेन सम्मिलितमन्नद्रव्यमामाशयग्रहणीपक्वाशयादियन्त्राणां विशिष्टक्रियया तत्तद्यन्त्रनिःसृतेन रसेन च तथा विपरिणमते, यथा पोषकद्रव्यमुदके शर्करावद्विलीयान्तः प्रविशति रसवाहिनीद्वारा। शिष्टं हि मलं क्रमशो मलाशयं गच्छति, एवं रसमलविभाग एव परिपाकक्रियोच्यते। अत्रापि दृश्यते तत्तद्यन्त्रेषु क्रियोत्पादनादन्नस्य परिपेषणम्, अन्नस्य जरणाय तत्तद्यन्त्राद्रसनिःसारणम्, रसवाहिनीद्वारा रसस्यान्तःप्रेरणमधोनयनं च मलानाम्, -एतत्सर्वमेव समानवायुकार्यमन्वयव्यतिरेकदर्शनादवगम्यते। अयं प्रकुपितः पाचकयन्त्राणां विकृतिं जनयति, ततो गुल्मातिसारादयो रोगा भवन्तीति।

### व्यानवायुः—

सर्वदेहचरो व्यानो रससंवहनोद्यतः।
स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि।
क्रुद्धश्च कुरुते रोगान् प्रायश्च सर्वदेहगान्॥

सर्वशरीरचारी व्यानवायुर्भुक्तद्रव्यादात्मीकृतं रक्तेन सह मिलितं सर्वधातुपोषकमन्नरसं स्थूलसूक्ष्मेषु शरीरावयवेषु प्रापणाय वहति। यद्यप्यायुर्वेदे रसरक्तयोः पृथक् संचारो नास्ति, तत्र प्राणवायुर्यदि रक्तसंचारकारणम्, रससंचारकारणमपि स एवावगम्यते। तथापि हृत्फुफ्फुसादिविशिष्टयन्त्राणां संचालनाद्रसरक्तयोः संचालनक्रियाया जननं प्राणकार्यम्। तयोः सर्वशरीरे गतिस्तु व्यानकार्यमित्यवधेयम्। अत एव स्वेदासृजोर्निःसरणमपि व्यानकार्यमेव। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदाच्चेष्टात्मकं पञ्चविधं कर्मापि व्यानवायोरेवान्वयव्यतिरेकदर्शनादवगम्यते। कुपितोऽयं प्रायः सर्वशरीरगतानाक्षेपकपक्षाघातकम्पादीन् रोगान् जनयतीति।

### अपानवायुः—

पक्वाशयस्थोऽपानस्तु काले कर्षति चाप्यधः
वातमूत्रपुरीषाणि शुक्रगर्भार्तवानि च।
क्रुद्धश्च कुरुते रोगान् घोरान् बस्तिगुदाश्रयान्॥

पक्वाशयशुक्रमूत्रगर्भाद्याशयसंस्थितो यो वायुरेषामङ्गानां धारणं करोति, तथा यथाकालमेषां यन्त्राणामुत्तेजनामुत्पाद्याधोमार्गेण निःसरतां निःसारणं सम्पादयति-स एवापानो वायुः। अस्य प्रकोपाद्बस्तिगुदाद्याश्रिता बहवो भयानका रोगा जायन्ते।

"प्रवर्तकश्चेष्टानामुच्चावचानाम्"

वातोत्तेजितनाडीचालितपेशीनां संकोचादिवशादुत्पद्यमानानां सर्वासामेवोच्चावचानां क्रियाणां वायुरेव कर्तेत्यन्वयव्यतिरेकादवगम्यते ।

" नियन्ता प्रणेता च मनसः "

मनसो नियमनं प्रेरणञ्च विषयसन्निकृष्टेष्विन्द्रियेषु सूक्ष्मस्य वायोरेव कार्यम् । ये तु प्रत्यक्षायोग्यत्वात् सूक्ष्मवातादौ सन्दिग्धास्तेषां मनस्यपि तथैव सन्देहः, तथाप्यप्रत्यक्षत्वादेषां निर्मनस्कानां निरात्मकानां नास्तिकानां संदेहापनोदनाय महर्षिचरकेणाभिहितम्—

लक्षणं मनसो ज्ञानस्याभावो भाव एव च ।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे, न वर्तते
वैवृत्यान्मनसो ज्ञानं, सान्निध्यात्तच्च वर्तते ॥

मनसोऽस्तित्वं सर्वैरेवानुभूयते, केवलं प्रत्यक्षपरा मनसः स्वरूपज्ञाने विमूढाः किमपि वर्णयितुं न शक्नुवन्तीति ।

'सर्वेन्द्रियाणामुद्द्योतकः सर्वेन्द्रियार्थानामभिवोढा'

चक्षुरादीनां ज्ञानेन्द्रियाणां वागादीनाञ्च कर्मेन्द्रियाणां स्वकार्यक्षमत्वसम्पादनम् , तथेन्द्रियसन्निकृष्टमर्थजातमादाय ज्ञानकेन्द्रद्वारेण तस्य चैतन्यायतनप्रापणम् , एवमनिलसूत्राणामुत्तेजनद्वारेण तत्तत्स्थूलेन्द्रियघटकपेशीनामुत्तेजनामुत्पाद्य कर्मेन्द्रियैः कर्मसंपादनम् ,-एतत्सर्वं वायुकार्यमेव । ये त्वविज्ञातवाता इन्द्रियसन्निकृष्टानामर्थानां संवादो ज्ञानकेन्द्रं गच्छतीति भाषन्ते, ते संवादस्य संवादे सर्वथाऽनभिज्ञा एव । लौकिकः खलु संवादः क्वचिद् लिपिरूपः, क्वचित् शब्दरूपः, क्वचिच्च स्पन्दनरूपो दृश्यते । इह त्वितरयोरसम्भवात् स्पन्दनरूपः संवादोऽपि वायुजन्य एवावगन्तव्यः । पेशीसंचालनजनितानामपि हस्तादिकार्याणां वायुरेव कर्तेति प्रागेव प्रतिपादितमिति ।

" सर्वशरीरधातुव्यूहकरः "

शरीरेऽस्मिन् विभिन्नशक्तिका विभिन्नगुणाश्च रसादयः सप्त धातवो विद्यन्ते । यथा द्रोणाचार्येण चक्रव्यूहाकारेण स्थापिता सेना भीमपराक्रममपि भीमं विमुखमकार्षीत्, तथा वायुनैव संव्यूहिताः साधारणशक्तिसम्पन्नाः सप्त धातवः परस्परस्य तथा साहायकमाचरन्ति, यथा शरीरमिदमातपवाताभिघातादिसहनसमर्थं संजायते । वाय्वतिरिक्तानां सर्वेषामेव पङ्गुत्वाद्वायुर्यं यत्र स्थापयति स तत्रैव तिष्ठतीति वेदितव्यम् । यदुक्तम्-

पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥ इति ॥

"सन्धानकरः शरीरस्य प्रवर्तको वा"

अवयवयोर्मिलनं सन्धानम्, तत्तु कफकार्यम् , किन्तु सर्वेषामेव शरीरावयवानां पोषकपदार्थेन संयोगरूपं संधानं वायुरेव जनयति । रक्तमेव सर्वत्र परिभ्रमत्तत्तदवयवानां पोषकमंशं ददातीत्याधुनिकमतेऽपि रक्तस्य परिभ्रमणं वायुजन्यमेवेति प्राक् प्रतिपादितम् । तथा न रक्तं सर्वेषां पोषकम्, तस्यापि रसजन्यत्वात्, किन्तु रक्तेन मिलितो रस एव कृत्स्नं शरीरमहरहस्तर्पयति, वर्धयति, धारयति, जीवयति चेति सुश्रुतमतमेव सत्यमिति ।

"प्रकृतिःशब्दस्पर्शयोः"

शब्दतन्मात्रसहकृतात् स्पर्शतन्मात्रात्स्थूलो वायुरुत्पद्यते, तस्मात्स्पर्शप्रधानेऽपि वायौ शब्दोऽप्युपलभ्यते । आकाशे संजातः शब्दो वाय्वाश्रित एव प्रसरतीति मन्तव्यम् ।

"श्रोत्रस्पर्शनयोर्मूलम्"

इन्द्रियाणामिन्द्रियाधिष्ठानानां वा चक्षुरादीनामुपादानानि पञ्च महाभूतानि। तत्रापि श्रोत्रस्याकाशं स्पर्श-

नस्य वायुरिति सत्यपि सिद्धान्ते श्रोत्रस्यापि वायुः कथं मूलमिति विचार्यते। आकाशस्य व्यापकत्वात्तत्राभिघातासम्भवात् शब्दोत्पत्तिरेव न संभवति, मूर्तयोरभिघाताच्छब्दोत्पत्तिस्तयोरभिघातस्तु आकाशाख्ये शून्यस्थाने संजायते। तस्मादाकाशं शब्दसमवायिकारणम्, तत्रोत्पन्नं शब्दं वायुरेव वहति, ततः श्रोतुः कर्णपर्यन्तं गच्छति शब्दः। एवमाकाशजे श्रवणेन्द्रिये वाग्वाद्यभिघातजातं शब्दमपि वायुरेव वहतीति कृत्वाकाशजस्यापि श्रोत्रस्य वायुरपि कथंचिन्मूलमवगन्तव्यम्। स्पर्शनेन्द्रियस्य तु वायुरेव मूलम्, तस्मात् स्पर्शनं वायोरात्मीयं गुणं स्पर्शमेव ग्राहयति। यदुक्तम्—

इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः॥

### हर्षोत्साहयोर्योनिः—

यासां खलु वातनाडीनामुत्तेजनावशाद्धर्षोत्साहौ जायेते, तासामुत्तेजनमपि वायोरेव भवतीति हर्षोत्साहयोर्मूलकारणं वायुरेव।

### समीरणोऽग्नेः—

समुदितानां पाचकरसानामग्निसंज्ञायुर्वेदतन्त्राभ्युपगता। तत्र पाचकरसानां निःसरणमामाशयादीनां संकोचादिक्रिया च वातजन्येति वायुरेव प्रेरकोऽग्नेरिति बोध्यम्।

### दोषसंशोषणः—

जलं वाष्पतां नीत्वा वायुरेव शोषयति सर्वम्। तत्र वायौ यथा यथा जलस्य न्यूनता तथा तथाऽसावधिकः शोषक इति वार्षिकवायुहेमन्तवायुतुलनयाऽवगम्यते। यद्यपि तापोऽपि वाष्पीभवने कारणम्, तथापि वायोरपि कारणत्वं स्वीकार्यमेव।

### क्षेप्ता बहिर्मलानाम्—

वातोत्तेजितसूत्रचालितपेशीनां मलक्षेपकत्वे वायोरेव कर्तृत्वमन्वयव्यतिरेकादवगन्तव्यमिति प्रागेव प्रतिपादितम्। तत्रापानोऽधोमार्गेण, उदान ऊर्ध्वमार्गेण, व्यानस्तु स्वेदादिद्वारा शारीरमलं बहिर्नयतीति।

### स्थूलाणुस्रोतसां भेत्ता—

वायुरेव तत्तद्द्रव्यमनुप्रविश्य तत्र स्रोतांसि जनयतीति चतुरस्ररोटिकादौ (डबलरोटी) प्रत्यक्षमेव। सुश्रुतेऽप्युक्तम्—

'यथाहिमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्
तथा—ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः।
ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांस्यपि यथा तथा॥इति॥

### कर्ता गर्भाकृतीनाम्।

यथा सजलमर्दितां समितामादाय यथेच्छामाकृतिं जनयति जनस्तथा गर्भाशयप्रेषणादेव मृदुशुक्रशोणिताभ्यां विभिन्नाकारो भ्रूणो जायते। तत्रापि प्रेषणजनको वायुरेव कारणमिति।

### आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः—

उपरि वर्णितादवगम्यते—यावत्प्राणादिवायुः स्वकार्यं संपादयति तावत् कस्य चिन्मृत्युर्न सम्भवति, किन्तु प्राणादिवायूनां स्वकार्यावसानमेव मृत्युरिति सर्वेषां प्रत्यक्षमेवातः सत्यैव कस्यचित् कल्पना—

वायुरेव महाभूत इति केचित्प्रचक्षते
आयुरेव स भूतानामिति मन्यामहे वयम्।

वा+आयुरिति विकल्पार्थं वाशब्दं विहायायुरिति संज्ञाकरणं न्याय्यमासीदिति तदर्थः।

## पित्तम्

पित्तोपादानम्—'सर्वं खलु पाञ्चभौतिक'मिति चरकवचनात्सर्वेषामेव स्थूलपदार्थानां पाञ्चभौतिकत्वमित्यायुर्वेदसिद्धान्तः। अनेकं भूतं न कस्यचिदुपादान-

मिति न्यायनयः। तेषामयमाशयः—पृथिवीपरमाणुभ्यामारब्धे द्व्यणुके परमाणुतो विशिष्टो गन्धो जायते द्विपरमाणुजातत्वात्। किन्तु पृथिवीजलपरमाणुभ्यामारब्धे द्व्यणुके परमाणुगन्धतो विशिष्टो गन्धो नोत्पद्यते। एवमुत्तरत्र, विशिष्टगन्धानुत्पत्तेः। परमाणुगन्धस्य च प्रत्यक्षायोग्यत्वाद् भूतद्वयारब्धे स्थूलगन्धादीनामुत्पत्तिर्न सम्भवति। तस्मात् स्थूलानामेकमेवोपादानमन्यानि तु निमित्तानीति। वयन्तु पश्यामो नीरक्षीरादिस्थूलद्रव्यादेकस्यापि भूतस्यापगमे द्रव्यस्वरूपमेव विनश्यति। निमित्तविनाशान्न द्रव्यनाशः, किन्तूपादाननाशादेव, तस्मात् पञ्चैवोपादानानि। सजातीयाभ्यां परमाणुभ्यां द्व्यणुकस्य सजातीयैरेव तैस्त्रसरेणोस्ततो विजातीयैरेव त्रसरेणुभिः स्थूलानामुत्पत्तिरिति मते नास्ति कश्चिद्दोष इति ध्येयम्। 'तप सन्तापे' इत्यस्माद्धातोः पित्तपदसिद्धिः, 'पित्तमाग्नेयम्' 'अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति' इत्यादिराप्तवाक्यादवगम्यते—पाञ्चभौतिकेऽपि पित्तेऽग्नेरेवाधिक्यम्। केवलोऽग्निः शरीरं न दहेदिति तत्रावश्यकं जलमपि विद्यते। तेन पित्तेऽग्निजलयोराधिक्यमितराणि तु भूतान्यानुषङ्गिकाणि सन्तीति ज्ञेयम्। केनचित् कारणेनाणविकस्पन्दनस्य प्राबल्याद् द्रव्यमात्रे काचिच्छक्तिरभिव्यज्यते। सैकैव शक्तिः कदाचिद् गतिरूपेण कदाचिदालोकरूपेण कदाचिच्च विद्युद्रूपेणाभिव्यक्तावलोक्यते। आणविकस्पन्दनवशादुष्णं द्रव्यं क्रमेणोष्णतरमुज्ज्वलं सद्दाहमाप्नोति नातो द्रव्यान्तरमग्निरित्याधुनिकवैज्ञानिकमतम्। वयन्तु पश्यामस्तापालोकयोर्गुणत्वात् तदधिकरणं किञ्चिद् द्रव्यमपि स्वीकार्यमेव। अन्यथा तयोर्गतिरेव प्रत्यक्षदृष्टा व्याहन्येत। ईथराख्यकल्पितद्रव्यादपि नेष्टसिद्धिः—यतो येन खलु मार्गेण तत् कल्पितं द्रव्यं गच्छति न तेन मार्गेणालोको गन्तुं समर्थ इति प्रत्यक्षसिद्धम्। तस्मात्तेजोऽग्निरिति पृथग् द्रव्यं सिध्यति। तस्य गुरुत्वं नास्तीति न भेतव्यम्। गुरुत्वस्यापेक्षिकत्वाद्यदा वायुमण्डलस्यैककत्वमासीत्तदा यल्लघु मन्यते तदिदानीं हाईड्रोजेनाख्यस्यैककत्वे गुरु सञ्जातम्, एवं तेजसोऽपि ततो लघुतरापेक्षया गुरुत्वमस्तीति ध्येयम्।

**पित्तस्वरूपम्**—'सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु' चरकेणोक्तम्। सुश्रुते तु पित्तं रूक्षमभिहितम्। तत्राग्नेयस्य पित्तस्य रौक्ष्यं नायुक्तम्, किन्तु तदुपादाने आवश्यकजलसद्भावाज्जलस्य च स्नेहोपादानत्वात् पित्तं वायुवन्न रूक्षम्, किन्तु कथंचित् स्नेहयुक्तम्, अतः स्निग्धमित्यनभिधाय सस्नेहमुक्तं चरकेणेति ज्ञेयम्।

**पित्तभेदः**—स्थानकर्मभेदात्तत् पित्तमपि पाचकरञ्जकसाधकालोचकभ्राजकभेदात्पञ्चधा भिद्यते।

**पाचकपित्तम्**—यत् खलु पित्तं भुक्तं तथा पचति यथा रसमलयोर्विभागः सम्पद्यते, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा। एतत् खलु पाचकपित्तं लालारसे आमाशयग्रहणीक्षुद्रान्त्राग्न्याशययकृदादिनिःसृते च पाचकरसे विद्यमानं सच्चतुर्विधमन्नपानं पचति विवेचयति च दोषरसमूत्रपुरीषाणि। स तत्रस्थ एव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति। शरीरपोषकाणां पित्तपोषकाणां च द्रव्याणामाहारादाहरणयोग्यतासम्पादनमेतस्यैव कार्यमतो देहस्यान्येषां पित्तस्थानानां चेदमेव पोषणरूपमनुग्रहं करोति। यथोपार्जकः पुरुषस्तदाश्रिताननुगृह्णाति तद्वदवगन्तव्यम्।

**रञ्जकपित्तम्**—भुक्तद्रव्यादात्मीकृतोऽन्नरसो रसवाहिनीद्वारा क्रमेण हृदयमेत्य हृदयाच्चतुर्विंशतिं धमनीरनुप्रपद्य कृत्स्नं शरीरमहरहस्तर्पयति, वर्धयति, धारयति, यापयति, जीवयति चादृष्टहेतुकेन कर्मणा।

यदाधुनिकै रक्तपरिभ्रमणं कथ्यते तदेव चरकेण—

व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।
युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥

इतिवचनेन रसपरिभ्रमणमभिहितम्। यतो भुक्तादूस एव निर्गच्छति, न तु रक्तम् । ततो रस एव सर्वेषां पोषक इति प्राक् प्रतिपादितम् । स खलु रसः शरीरे भ्रमन् स्वाग्निना पच्यमानस्त्रिधा विभज्यते । तत्र स्थूलो भागो रसमेव पोषयति, मलभागात् कफः सञ्जायते, सूक्ष्मो भागो यकृत्प्लीहस्थितेन रञ्जकपित्तेन रञ्जितो रक्तवर्णः सञ्जायते । तदेव रक्तमतो दृश्यते । रक्तधातो रक्तत्वं रञ्जकपित्तादेव जायत इति ।

साधकपित्तम्—अन्तरात्मनः श्रेष्ठतमायतने हृदये सत्त्वगुणात्मकं यत्पित्तमवस्थितं सद् विषयविज्ञाने साहायकमाचरति स्वकीयेनोष्मणा च हृदयं स्वकार्यक्षमं करोति तत्साधकं पित्तम् । यदुक्तं सुश्रुतेन— "यत् पित्तं हृदयसाधकोऽग्निरिति संज्ञा सोऽभिप्रार्थितमनोरथसाधनकृदुक्ता" इति ।

आलोचकपित्तम्—इन्द्रियपञ्चकेषु तेजसो विशेषगुणं रूपमेव चक्षुर्गृह्णाति। येन केन प्रकारेणाप्यायितबलमपि चक्षुरन्यं रसादिकं विषयं न विषयीकरोति। तस्मादवगम्यते—पाञ्चभौतिकेऽपि चक्षुषि तेजसः प्राधान्यमिति तत्तेज एवालोचकपित्तरूपेण नयनयोरवस्थितं रूपालोचनादालोचकसंज्ञां लभते । यदुक्तं चरकेण-तत्र यद्यदात्मकमिन्द्रियं तत्तदात्मकमेव विषयमनुधावति तत्स्वभावाद्विभुत्वाच्च । 'चक्षुस्तेजोमयम्' 'तेजो जलाश्रितं बाह्यम्' इत्यादिशास्त्रवाक्यमपि नयनयोरालोचकपित्तसद्भावं ज्ञापयति ।

भ्राजकपित्तम्—यथा पाचकं पित्तं भुक्तमौषधं तथा पचति यथावश्यकानावश्यकयोर्विभागः संजायते एवं त्वचि स्थितं पित्तमपि लेपादिरूपेण प्रयुक्तमौषधं तथैव पचति । तत एव लेपादिः स्वकार्यं कर्तुं शक्नोति । पदार्थविद्याया नियमोऽयं यत्—यद् द्रव्यं यावत्परिमितमालोकमन्तर्गृह्णाति तत्तावन्मलिनमवलोक्यते यथाधिकमालोकं विक्षिपति तदुज्ज्वलमालोक्यते । तेजसः सर्वालोकविक्षेपित्वात् त्वगवस्थितं तेजःस्वरूपं पित्तमेव वर्णमुज्ज्वलं करोति । एतदेव पित्तं भ्राजकत्वाद् भ्राजकसंज्ञां लभते ।

अग्निपित्तयोर्भेदोऽभेदो वा—प्रागुल्लिखितं यत् समुदितपाचकरसानामग्निसंज्ञेति तत्र किञ्चिज्जलमवस्थितं सद् भुक्तमन्नं क्लेदयति, कश्चिदाग्नेयो भागो भुक्तमन्नं जरयति, ततोऽवगम्यते इतरभूतसहकृताभ्यामग्निजलाभ्यामारब्धे पित्ते यदाग्नेयो भागो विवर्धते तदा मात्राधिकं गुरुमप्यन्नं जरयंस्तीक्ष्णाग्निसंज्ञां लभते । यदा च तत्र विवर्धते जलीयो भागस्तदाग्नेर्मन्दत्वमेव सम्पद्यते । तस्मान्न पित्ताद्भिन्नोऽग्निर्न वाऽभिन्न इति विज्ञेयम् ।

श्लेष्मा—

वायुना समुद्दीप्तमाग्नेयं पित्तं शरीरं न दहेदिति तयोर्नियामकरूपेण किंचित्सौम्यमपि द्रव्यमपेक्षते, तथा वायोर्विश्लेषकत्वात्पित्तस्य तत्सहायत्वात् किंचित् संश्लेषकद्रव्यमन्तरेण शरीरनिर्माणं न संभवतीति शरीरेऽस्मिन् सौम्यः संश्लेषकश्च पदार्थः श्लेष्मसंज्ञां लभते । 'श्लिष आलिङ्गने' इत्यस्माद्धातोः श्लेष्मेतिरूपम् । तत्रालिङ्गनं संयोगविशेषः । स खलु संयोगो न केवलमस्थ्नां पेशीनां वा किन्तु स्थूलात् स्थूलतरं सूक्ष्माच्च सूक्ष्मतरं शरीरावयवं श्लेष्मैव परस्परं युनक्ति । यथा गतिकारको वायुर्यथा च तापोत्पादकं पित्तं तथैव संश्लेषकः श्लेष्मा सर्वं शरीरं व्याप्नोति । श्लेष्मस्वरूपं चरकेणोक्तं यथा— "स्थैर्यशैत्यगौरवस्नेहमाधुर्यपैच्छिल्यमार्त्स्नानि श्लेष्मण

आत्मरूपाणि। पृथ्वीजलादिकं द्रव्यं सौम्यं हि परिकथ्यते। सौम्यस्य श्लेष्मण उपादानेऽपि पृथिवीजलयोराधिक्यमवगन्तव्यम्। अत एव श्लेष्मणि चरकोक्ता गुणाः सर्वथा संगच्छन्ते। वायुतत्वप्रधानेन वायुना, तेजःप्रधानेन पित्तेन पृथिवीजलप्रधानेन श्लेष्मणा, अवकाशकारकेण चाकाशेन पाञ्चभौतिकमिदं शरीरमुत्पद्यते। इत्यतः सुश्रुतेनोक्तम् 'वातपित्तश्लेष्माण एव देहसम्भवहेतवः' इति। श्वैत्यशैत्यादिगुणवान् श्लेष्मा शरीरेऽपि तानेव निजान् गुणान् उत्पादयति। तत एव शरीरमुत्पद्यते, तिष्ठति च। वातादिवदसौ श्लेष्माऽपि स्थानकर्मभेदात् पञ्चधा भिद्यते। यथा—

क्लेदकः—आमाशयसंस्थितो यः श्लेष्मा भुक्तमन्नं पाकाय क्लेदयति, तथा स्वकीयेनौदकगुणेनान्नं भिन्नसंघातसुखजरं च जनयति, तथा भुक्तादन्नात् श्लेष्मपोषकमंशं पृथक्करणयोग्यं जनयति। सोऽन्नक्लेदनात् क्लेदकसंज्ञां लभते। पाचकपित्तवदयमपि शेषाणामात्मस्थानानामनुग्राहकः पोषकश्च। यदुक्तं सुश्रुतेन—

"तत्रामाशयः स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरो भवति।"

माधुर्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च।
आमाशये सम्भवति श्लेष्मा मधुरशीतलः।

स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणाऽनुग्रहं करोति। आमाशयस्थितोऽयं श्लेष्मा स्थूलदर्शिभिरपि द्रष्टुं शक्यते, तस्मादस्यापलापो न युज्यते।

अवलम्बकः— हृदयफुप्फुसादियन्त्राभ्यन्तरसंस्थितो यः श्लेष्मा स्वगुणेन तत्तदङ्गानां कार्यक्षमं जनयति, तथामाशयसमुत्पन्नः श्लेष्मा रक्तेन सह हृदयमेत्य यत्प्रभावाच्छुद्धः सन्नन्येषु कफस्थानेषु गत्वा तत्तत् स्थानमवलम्बते, स एव श्लेष्माऽवलम्बकसंज्ञां लभते। यदुक्तम्—

"उरःस्थः श्लेषकादिस्वकर्मणा कफधाम्नां च सर्वेषां यत् करोत्यवलम्बनम्। अतोऽवलम्बकः। अयमपि हृदयादियन्त्राभ्यन्तरे स्थूलदर्शिभिर्द्रष्टुं शक्यते ततो नास्यापलापः सम्भवतीति"।

बोधकः—यः खलु श्लेष्मा जलप्रधाने रसनेन्द्रिये संस्थितो रसनामार्द्रां करोति, रसनोपरिस्थितानां च द्रव्याणामार्द्रत्वमापाद्य तदीयरसग्रहणे साहाय्यमाचरति, रसबोधनादसौ बोधकः परिकथ्यते। श्लेष्मणि क्षीणे शुष्कजिह्वो रसं न जानातीति प्रत्यक्षमेव। रसस्य जलगुणत्वाज्जलीयं रसनं जलीयश्लेष्मसाहाय्येनैव जलीयं रसं गृह्णाति। यथा तैजसं चक्षुस्तैजसं रूपं तेजःस्वरूपालोकसाहाय्येनैव गृह्णातीति।

तर्पकः—सर्वेषामेवेन्द्रियाणां मूलकेन्द्रस्यास्तित्वं मस्तिष्काभ्यन्तरे प्रत्यक्षमेव दर्शकानाम्। तत्रावस्थितो यः श्लेष्मा न केवलं सौम्यैर्गुणैरिन्द्रियकेन्द्रं किन्तु मूलसिक्तजलं वृक्षस्य सर्वावयवमिव सर्वेन्द्रियाणि तर्पयति, स इन्द्रियतर्पणात्तर्पकः परिकथ्यते।

यदुक्तं सुश्रुतेन—"शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्येणानुग्रहं करोति। स्थूलदर्शिभिरपि मस्तिष्काभ्यन्तरे द्रष्टुं शक्यते। तस्मादस्यापलापो न सम्भवतीति"।

श्लेषकः—यः खलु श्लेष्मा स्थूलाणुसन्धिष्ववस्थितो न केवलं निर्यासवत् संयोगमात्रं जनयति, किन्तु चलसन्धिषु स्थितोऽयमक्षचक्रान्तर्निहितस्नेहवत् सन्धिघटकयोर्घर्षणमपि निवारयति। स एव सन्धिसंश्लेषणात् श्लेषक उच्यते। द्वयोर्मिलनं सन्धिरितिनियमान्न केवलमस्थ्नामेव सन्धिः, किन्तु सूक्ष्मात् सूक्ष्मतराणामप्यवयवानां कोषादिसंज्ञकानामयमेव संश्लेषकदिति ज्ञेयम्। जलीयोऽयं श्लेष्मा कथं संयोजयति?

जलस्य विश्लेषकत्वादिति न शङ्कनीयम्। अतिमात्रस्य जलस्य विश्लेषकत्वेऽपि यथोचितमात्रस्य जलस्य संश्लेषकत्वमिति प्रत्यक्षमेवेष्टकादिनिर्माणे सर्वेषामेव। गतितापसन्धीनां सर्वशरीरव्यापित्वात् तज्जनका वातपित्तश्लेष्माणोऽपि सर्वशरीरव्यापकाः इति ते व्यापिनोऽपीत्यादिना शास्त्रेषु निर्दिष्टाः। यथा-शीतांशुः सौम्यैः किरणैर्जागतिकं सर्वमाप्याययति, सहस्रांशुराददाति स्वकरैर्जागतिकरसम्, अनिलश्च विक्षेपशक्त्या तत्र तत्रावश्यकं द्रव्यं स्थापयति। ततो दृश्यते-एते त्रय एव स्वस्वकार्येषु अप्रमत्ता जगदिदं धारयन्ति, विकृताश्च जगति प्रलयमुत्पादयन्ति। तथैव वातपित्तश्लेष्माणोऽविकृताः स्वस्वकार्यैर्धारयन्ति शरीरमतस्त्रिधातव उच्यन्ते। विकृताश्चात एव सकलशरीरमेकदेशं वा शरीरस्य दूषयन्तीति त्रिदोषाः परिकथ्यन्ते। सुश्रुतेनाप्यभिहितम्—

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा॥ इत्यादि

अतः कथयितुं शक्यते—

"एभिर्युक्तिगणैर्मनुष्यवपुषो वातादयो धारकाः
सिद्धास्तद्विकृतौ शरीरविकृतिः सा युक्तियुक्ता परम्।
धार्याणां विकृतिर्विकारवशतो धर्तुर्यतः सम्भवेद्
धान्यानां विकृतौ शरीरपतनं जाते पतङ्गे तु किम्।"

इति।

प्रकृतिविज्ञानमन्तरेण विकृतिविज्ञानं न सम्भवतीति वातादीनां प्रकृतिज्ञानाय किञ्चिदभिहितम्। तस्मादेव प्रबन्धो दीर्घकायः सञ्जातस्तस्मादन्यदावश्यकमपि वर्णनीयं विहायैतेषां रोगसञ्जननक्रमः संक्षेपतोऽत्र वर्ण्यते। वातादीनां ये ये गुणा प्रागुल्लिखितास्तत्तद्गुणयुक्तानामाहारादीनामुपयोगाद्दोषाः स्वाशये सञ्चिता भवन्ति। यदुक्तम्-'सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।" इति एवं सञ्चिता दोषाः प्रकोपकारणमासाद्य प्रकुप्यन्ति। तत्र वातस्य प्रकोपहेतवो यथा—

व्यायामादपतर्पणात्प्रपतनाद् भङ्गात् क्षयाज्जागराद्
वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः।
रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्
वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च॥

पित्तस्य—

कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातप
स्त्रीसम्पर्कतिलातसीदधिसुराशुक्तारनालादिभिः।
भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां
मध्याह्ने च तथार्द्धरात्रिसमये पित्तं प्रकोपं व्रजेत्॥

कफस्य—

गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्य-
द्रवदधिदिननिद्राऽपूपसर्पिःप्रपूरैः।
तुहिनपतनकाले श्लेष्मणः संप्रकोपः
प्रभवति दिवसादौ भुक्तमात्रे वसन्ते॥

एकेनानेकेन कारणेन वा प्रकुपितो दोषः संक्षुब्धखर्जूररसवत् स्वाश्रये स्थातुमसमर्थोऽग्रे गन्तुमारभते। एतदग्रे गमनमेव प्रसरनाम्ना परिकथ्यते। एवं प्रसृतो दोषो दूष्यविशेषमाश्रित्य तिष्ठति चेत्तदेव स्थानसंश्रयः कथ्यते। दूष्यविशेषसमाश्रितश्च दोषो यथा यथा दूष्येण सह मिलितो भवति तथा तथा रोगं जनयति। दोषदूष्ययोर्विशिष्टमिलनमेव संप्राप्तिरुच्यते। एक एव दोषो यदि स्वकारणकुपित इतरौ कथञ्चित् कोपयित्वा कञ्चिद्व्याधिं जनयति, स व्याधिरेकदोषज उच्यते। स्वकारणकुपिताभ्यां दोषाभ्यां द्विदोषजः, स्वकारणकुपितैश्च त्रिभिर्दोषैस्त्रिदोषजो रोगो जायते। द्विदोषजत्रिदोषजयोः, संसर्गसन्निपातजसंज्ञायुर्वेदे प्रसिद्धा। केचिद्रोगा एकेनैव दोषेण भवितुमर्हन्ति, नेतराभ्यामतोऽनात्मजा न भवन्तीति कृत्वा तेनानात्मजाः कथ्यन्ते। वातेनाशीतिर्नखभेदादयः, पित्तेन चत्वारिंशद्धोषादयः, श्लेष्मणा

विंशतिस्तृप्तिप्रभृतयो नानात्मजा रोगा जायन्ते। ये तु ज्वरादयो रोगा एकेनानेकेन वा दोषेण भवितुमर्हन्ति ते साधारणाः परिकथ्यन्ते। अत्रापि प्रबन्धस्यातिदीर्घत्वभिया बहुवक्तव्यं विहाय रोगोत्पत्तौ दोषा एव कारणमन्यद्वेति विचार्यते।

दोषादेव प्रकुपिताद्रोगाणामुत्पत्तिरिति सिद्धान्ते नैतावत्कालपर्यन्तं कस्यचित् सन्देहोऽप्यासीत्। अधुना आधुनिकविज्ञानविचलितमतय केचिदनुपलब्धदोषस्वरूपाः केषुचिन्निर्दिष्टरोगेषु विभिन्नाकारप्रकारान् कीटाणून् दृष्ट्वा तेषामेव रोगकारणत्वख्यापनतत्पराः सञ्जाताः। तेषामयं सिद्धान्तः—केनचित् कारणेन शरीरमागताः कीटाणवो यदि स्वानुकूलां परिस्थितिमासादयन्ति, ततः पुष्टा जनितागणितसन्ततयो लब्धशरीरनाशसामर्थ्या रोगं जनयन्ति। किन्तु यदि शरीरप्रविष्टाः कीटाणवः स्वानुकूलां परिस्थितिं न लभन्ते, तत्रैव म्रियन्ते, बहिर्गच्छन्ति वेति नानाविधाभिः परीक्षाभिर्दृष्टमेतत्। केचित्पल्लवग्राहिविद्याकुलमतयो मन्यन्ते—सूक्ष्मदर्शकादियन्त्राणामभावादपरिचितकीटाणवः प्राचीना दोषकारणत्ववादिन आसन्नाधुनिकवैज्ञानिकैस्तेषां भ्रमो निराकृत इति। तत्र निपुणं विभाव्यमाने विज्ञायते—कीटाणूनामन्येषां वा केषाञ्चिद्दोषातिरिक्तानां सर्वरोगजनकत्वं न सम्भवतीति कीटाजन्यानां रोगाणामुत्पत्तये दोषास्तैरपि कीटाणुवादिभिर्वाच्याः। कीटाणुजन्येऽपि रोगे न तेषामेव मुख्यं कारणत्वम्। यतः शरीरागता अपि कीटाणवोऽनुकूलपरिस्थितिमन्तरेण रोगजननासमर्था इति तैरेव प्रमाणीकृतम्। अनुकूलपरिस्थितिजननं न कीटाणुकार्यमित्यपि ज्ञायत एव तस्माद्दोषनिरपेक्षाः कीटाणवो रोगजननासमर्था इत्यपि सिद्धमेव। एतदपि विचार्यमेव यद् यावत शरीरे वातविकृतिर्न भवति तावद्वेदनाकम्पादिरपि नैव भवितुमर्हति, एवं पित्तविकृतिमन्तरेण दाहो न जायते। न कफविकृतिमन्तरेण तृप्तितन्द्रादिरिति मैलेरियाख्यज्वरस्य केवलकीटाणुजन्यत्वे कस्यचित् शीतकम्पादिलक्षणः, कस्यचिद्दाहलक्षणः, कस्यचित्तृप्तितन्द्रादिलक्षणः, कस्यचिद्दाहपूर्वशीतान्तः, कस्यचिच्छीतपूर्वदाहान्तो ज्वरः कथं जायत इति नैव वक्तुं शक्यते। तस्मात्कीटाणुरपि दोषप्रकोपनपुरःसरमेव रोगकारणमिति सत्यमवगन्तव्यम्। कुत्र कीटाणूनामस्तित्वं कुत्र चाभाव इति कैरपि निश्चेतुं न शक्यते। प्रत्यक्षमेवावगम्यते—रात्रिजागरणादिस्वास्थ्यविघातककारणसेवनात् प्रतिश्यायादिरोगो जायते। तत्र रात्रौ जाग्रतामेव नासाभ्यन्तरे प्रविशति कीटाणुः नान्येषामिति न कश्चिदविकृतमतिर्वक्तुं शक्नोति। तस्मान्निदानपरिवर्जनमपि केवलकीटाणुविज्ञानान्न सम्भवति, चिकित्सार्थमपि कीटाणुनाशाय प्रयुक्तं विषौषधमल्पमधिकं वा रोगं रोगिणं च नाशयति। दोषलक्षणस्यातिव्यक्तत्वाद्दोषनिर्णयपुरःसरमौषधं प्रयुज्यमानं न तथा व्यापदमावहति, किन्तु कीटाणुनिर्णयस्यातिदुष्करत्वात् प्रायः कीटाणुनिर्णये भ्रान्त्वा विपरीतमौषधं प्रयुञ्जाना आतुरमतिपातयन्तीति प्रत्यक्षमेव परीक्षकाणाम्। दोषसम्बन्धमविचिन्त्य केवलकीटाणुनाशकभेषजप्रयोगादपि सर्वत्र सुफलं न भवतीति प्रत्यक्षमेव। अदृश्यानामपि कुष्ठजनककीटानां चरकसंहितायां विशेषवर्णनदर्शनात्। तथा—

प्रसङ्गाद् गात्रसंस्पर्शान्निःश्वासात्सहभोजनात्।
एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात्॥
कुष्ठज्वरश्च शोषश्च नेत्राभिष्यन्द एव च।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्॥

इति सुश्रुतसिद्धान्ते कीटाणुसम्बन्धमन्तरेण रोगाणां संक्रामकत्वासम्भवात्प्राचीनानां कीटाणुपरिज्ञानं

( शेषांशम् १४० स्य द्वितीयस्तम्भे द्रष्टव्यम् )

# त्रिदोष-विज्ञानम्

( ले०—पं० श्रीदुर्गादत्तशर्मा शास्त्री, आयुर्वेदशास्त्राचार्यः, वाराणसी )

यज्ज्ञानलवसंस्पर्शाद् वैद्या अद्यापि भारते ।
सुखं तन्वन्ति सोल्लासं तन्महः संप्रकाशताम् ॥

आयुर्वेदविज्ञानं हि वातपित्तश्लेष्ममूलम् । रोगारोग्ययोर्भेषजविज्ञानस्य च सर्वस्यैव तदनुवर्तमानत्वात्, चिकित्साधिष्ठानस्य च पञ्चमहाभूतशरीरिसमवायात्मकस्य पुरुषस्य तदधीनस्वभावत्वात् । सत्येवं हि खलु सर्वमेवायुर्वेदतत्त्वं वातपित्तकफेष्वेवावस्थितं भवति । त एते वातपित्तश्लेष्माण आयुर्वेदे "धातवो दोषा मलाः" इति संज्ञात्रयं लभन्ते । तद् यथा—

"वायुः पित्तं कफो दोषा धातवश्च मला मताः ।
शरीरदूषणाद् दोषा धातवो देहधारणात् ॥
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः ॥"

शार्ङ्गधरः ।

अथ किमेषां स्वरूपमिति शवादिविच्छेदनपूर्वकं शरीरतत्त्वमालोकयतां प्राकृतवैकृतशरीरविज्ञाने ( Anatomy and pathology ) दक्षतरत्वं संपादयतां नवीनविज्ञान—(Science) शैल्या चाणुवीक्षणयन्त्रादि—(Microscope) साहाय्येन सूक्ष्मातिसूक्ष्ममपि प्रत्यक्षीकुर्वतां नवनवोन्मेषाभिलाषिणां वैद्यविदुषां दृष्टिपथे नैव समायातम् । अत एव च किमेतदस्ति त्रिधात्वादिशब्दवाच्यं सर्वैरेवायुर्वेदाचार्यैरैकमत्येन प्रोक्तं बहुभिर्विज्ञानसाधनैर्महता यत्नेनाप्यनभिलक्षितं वातपित्तश्लेष्मात्मकं वस्तु ? यदेव रोगारोग्ययोर्मूलमिति विज्ञाप्यते, इति तेषां प्रश्नः समुदेति । अनधिगतवातपित्तश्लेष्मतत्त्वास्तु ते तद्विषये बहूनि विप्रतिवाक्यान्यप्यधिक्षिपन्ति । अतश्च विषयेऽस्मिन् यथामति किञ्चिन्निरूप्यते ।

"अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते, तस्मिन् क्रिया, सोऽधिष्ठानम् ।"

सुश्रुतः, सू० अ० १ ।

"पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमित्येत एव च षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते ।" च० शा० अ० ५ । इत्युक्तदिशा चिकित्साशास्त्रे भूतात्मा कर्मपुरुष एव चिकित्साधिकृत इति स्पष्टं विज्ञायते, तस्यैव भूतमयत्वेन चिकित्सोपयोगित्वात् । नित्यशुद्धबुद्धमुक्तस्वभावस्य सच्चिद्विज्ञानानन्दस्वरूपस्य पुरुषस्य त्वशनायापिपासाद्यतीतस्य सर्व-

---

( १३९ पृष्ठस्य शेषांशः )

नास्तीति कथमपि कथयितुं न शक्यते । सुविदितकीटाणवोऽपि महर्षयः पूर्वोल्लिखितादेव कारणात् कीटाणूनां मुख्यकारणत्वं नोचुरिति सम्भाव्यते ।

अन्वयव्यतिरेकदर्शनाद्दोषाणामेव मुख्यकारणत्वं कीटाणूनामन्येषां चासात्म्याहारविहारादीनां दोषप्रकोपत्वेन कारणत्वमिति सुव्यक्तमेवात्रावगम्यते । तस्मात्सत्यमेवाभिहितमायुर्वेदतन्त्रे—

सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ इति

वयमपि तदेव प्रतिपाद्य प्रबन्धमिममुपसंहरामः ।

दैकस्वरूपिणो वेदान्तवेद्यस्य विकृतेरभावादेव चिकित्सानुपयोगित्वं स्वतः सिद्धम्। स तु भूतात्मा पुरुषोऽयं लोकसंमितः।

"षड्धातुसमुदायो हि सामान्यतः सर्वलोकः"।

भूतानि तु—

"महाभूतानि खं वायुरग्निरापः क्षितिस्तथा"।

च० शा० १, २५।

इत्येवमुक्तानि पञ्च जगतो दृश्यमूलतत्त्वानि। भूतेभ्यः प्राक्तनानि भूतप्रकृतिभूतानि सत्त्वरजस्तमोलक्षणाया मूलप्रकृतेर्विकृतिभूतानि महदादीनि तु सूक्ष्मातिसूक्ष्मतरतमानि सृष्टिमूलतत्त्वानि न हि बाह्यसाधनैः स्थूलदृष्ट्या कथञ्चिदपि दृष्टिपथं यातुं शक्यानि, महर्षिभिर्दिव्यदृष्ट्यावलोकितान्यपि च तानि न हि चिकित्साशास्त्रे चिन्तनीयानि, भूतग्रामस्यैव पञ्चमहाभूतारब्धस्य चिकित्सोपकरणत्वात्। एतदेवाभिप्रेत्याह भगवान् सुश्रुतः—"वैद्यके तु—

"स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा।
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥
तन्मयान्येव भूतानि तद्गुणान्येव निर्दिशेत्।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजायत॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते।"

सु० शा० १, ११-१३।

तानि चैतानि भूतानि स्थूलसृष्टिसमारम्भे पञ्चतन्मात्रेभ्यो यथोक्तक्रमेणैवोत्पद्यन्ते। यदुक्तम्—

"तन्मात्रेभ्यो वियद्वायुवह्निवारिवसुन्धराः।
एतानि पञ्च जायन्ते महाभूतानि तत्क्रमात्॥" इति।

भा० पू० प्र० १, १११।

पञ्चतन्मात्राणि हि सूक्ष्मतमानि प्रकृतिभूतानि मूलतत्त्वानि। तानि च शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रं, च" इत्येवं निरूपितानि योगिजनैकवेद्यानि। स्थूलदर्शिभिस्तु कारणानुरूपं कार्यमिति कृत्वाऽनुमानप्रमाणतो वा आगमप्रमाणतो वा ज्ञेयानि भवन्ति। तेषु सर्गारम्भे प्रथमं शब्दतन्मात्राच्छब्दगुणकमाकाशं जायते, तस्य च स्पर्शमात्रे वायावनुप्रवेशाच्छब्दस्पर्शगुणो वायुर्जायते, तस्य द्विगुणस्य वायो रूपतन्मात्रे तेजस्यनुप्रवेशात्तेजस्त्रिगुणं भवति। अथ तच्छब्दस्पर्शरूपगुणं तेजो रसतन्मात्रमनुप्रविशति, तेनापश्चतुर्गुणा जायन्ते, ताश्च शब्दस्पर्शरूपरसगुणा आपो गन्धतन्मात्रं प्रविशन्ति, तेन शब्दस्पर्शरूपरसगन्धगुणा भूमिः प्रभवति।

तथा च मनुः—

"मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया।
आकाशं जायते तस्मात्तस्य शब्दगुणं विदुः॥
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः॥
वायोरपि विकुर्वाणाद् विरोचिष्णु तमोनुदम्।
ज्योतिरुत्पद्यते भास्वत् तद्रूपगुणमुच्यते॥
ज्योतिषश्च विकुर्वाणादापो रसगुणाः स्मृताः।
अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः॥"

१, ७५-७८।

तथा श्रुतिरपि—

"तस्माद् वा एतस्मादात्मन आकाशः संभूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः, स वा एष पुरुषोऽन्नरसमयः।"

तैत्तिरीयोपनिषद्। २। १।

न चायं भूतोत्पत्तिक्रमः केवलमागमप्रमाणसिद्धः, किन्तु सांप्रतिकैर्वैज्ञानिकैरपि स्वीकृतः। संप्रति विज्ञान-( Science ) द्वारा सुनिश्चितमेतत्—"एकेनैव मूलतत्त्वेन सर्वमेतत्सृष्टितत्त्वं समारब्धमिति"—तच्चाकाशमेव ( Ether ) संभवतीति। तथा च श्रुतिः—

"सर्वाणि ह वा इमानि भूतानि
आकाशादेव समुत्पद्यन्ते"
छान्दोग्योपनिषद् । १ । ९ । १ ।

आकाशाद् वायुः, वायोरग्निः—

वायोर्विषये वर्तमानविज्ञानस्याभिमतमिदम्- वायुमण्डले आकाशामृतम्, ( Oxygen ) दाहप्रतिबन्धकबाष्पम् ( Nitrogen ) जलीयबाष्पम्, पार्थिवाः परमाणव इत्येवमादीनि बहूनि सन्तीति। तेष्वपि विशेषतो भागाः ( ७८ प्रतिशतम् ) दाहप्रतिबन्धकबाष्पस्य, तथा ( २१ प्रतिशतम् ) आकाशामृतस्यैवेति। आकाशामृते चास्ति दहनक्रिया, ये केचन पदार्थाः साधारणतोऽदाह्यास्तेऽपि चाकाशामृतसंयोगाद् दहनोपयोगित्वमायान्ति। एवञ्च निश्चीयते यत्राकाशामृतम्, तत्रास्ति दहनक्रियेति। तथा चाकाशामृतेऽग्नितत्त्वमिति निर्विवादम्। अन्यथा दहनक्रियाया असम्भवात्। तच्च वायोः स्पन्दनजम्। वायुमण्डले दाहप्रतिबन्धकबाष्पं ( Nitregen ) त्वाकाशामृतस्थदहनशक्तिनियमनार्थमेवेति प्रतीयते, तन्मिश्रणेन च यथावश्यकमेव तदीयदहनशक्तेः प्रसरणं लोकनिर्वाहायेत्यवगम्यते। एवञ्चाग्नितत्त्वं वायुना सह नियतसंयुक्तमिति निश्चीयते। ततश्चाकाशसमुद्भूताद् वायोस्तेजस उत्पत्तिः संभवा।

स्मरणीयञ्चेदं विशेषतो यदिदानीम्-आकाशमेव ( Ether ) सर्वभूतमूलतत्त्वमिति भौतिकविज्ञानसम्मतः सिद्धान्तः। तथा च सुदूरवीक्षणयन्त्र-( Telescope ) साहाय्येन संप्रति परिज्ञाततत्त्वं ह्यद्यावधि बाष्परूपेऽवस्थितं वायुमयं तन्नक्षत्रपुञ्जमपि यन्नभसि त्रिभावर्यां व्यक्तं दृश्यमानमैरावतपथमिति ( आकाशगङ्गा वा) प्रोच्यते—आकाशादेव सम्भूतमिति प्रत्येतुं शक्यते। अतः परं चेदं वायुमयं नक्षत्रपुञ्जं कदाचिज्ज्वाज्वल्यमानं तेजोमण्डलमेव परिणतं स्याद् भास्करमण्डलवदित्यस्ति वैज्ञानिकानां मतम्। तेन 'चाकाशाद् वायुः' 'वायोरग्निः'—इति श्रुतिस्मृतिपरम्परासमागतः सिद्धान्तो भौतिकविज्ञानानुमतः संभवति।

अग्नेरापः, अद्भ्यः पृथिवी—

अस्ति चेदमपि वैज्ञानिकानां मतम्, "येयं भूमिः स्थूलतमा परिदृश्यते, नैषा सर्गादौ रूपेऽस्मिन्नवस्थितासीदिति। किन्त्वासीत्प्राक् प्रदीप्ताण्डमेकं (Nebula) नभसि द्रुततरगत्या बम्भ्रम्यमाणं यस्य च मध्यकायमापेक्षिकं सघनम्। ततश्च व्यतीतेऽसंख्यवर्षात्मके काले तज्ज्योतिर्घूर्ण्यमानमेवातिघनं बभूव, तदस्ति सूर्यमण्डलम्। तस्माच्च बम्भ्रम्यमाणाण्डात्पृथग्भूतं तरङ्गालोलितमत्युष्णतरलसमूहमेकम्। तस्मिन्नेव शैत्यमुपगते पयसि सन्तानिका-(मलाई)वत् स्थूलतमेयं पृथिवी समुद्गता। यच्चात्युष्णदशायां बाष्पमुद्गतं तज्जलसामा-

१ श्रुतिरपि निर्दिशति—

*'सोऽकामयत, भूय एव स्यात्प्रजायेयेति। स वायुनान्तरीक्षं समभवत्तत आण्डं समभवत्, तदभ्यमृशद् यशो बिभृहीति। ततोऽसावादित्योऽसृज्यत।'*
शतपथब्राह्मणम् १ । २ । ३

अत्र च सर्ववेदभाष्यकारः सायणः—

*" सोऽकामयतेत्यादेरयमर्थः—वाय्वन्तरीक्षयोर्मिथुनत्वेन सङ्गात्-एकम् ' अण्डम् ' उत्पन्नम्, तस्मादादित्यः।" इत्यादि।*

न्यमभवत् ।" एवञ्च वर्तमानभौतिकविज्ञानेन—'अग्नेरापः' 'अद्भ्यः पृथिवी'—इत्ययमपि सृष्टिक्रमोऽनुमन्यते ।

इत्थञ्च सर्गोऽयं निखिलः पञ्चभूतात्मको भवति । अस्य च सूक्ष्मतत्त्वानि पञ्चतन्मात्राणि, स्थूलतत्त्वानि तु पञ्चमहाभूतानि । तदारब्धं चेदं जगत्क्षुद्रबृहद् ब्रह्माण्डभेदेन द्विविधम् । यदिदं शरीरात्मकं जगत्तत्क्षुद्रब्रह्माण्डम् ( पिण्डं वा ) यच्च वाह्यं जगत्तद् बृहद् ब्रह्माण्डम् । तदुभयमेव पञ्चभूतात्मकमिति तयोः साम्याय यथा च लोके सर्वे एव भावविशेषाः पञ्चभूतात्मकास्तथा शरीरे धातवो दोषा मला रोगा भेषजक्रियाकलापश्च सर्वे एव पाञ्चभौतिकाः । एवमयं भूतात्मा पुरुषो लोकसंमितः । "तस्य पुरुषस्य पृथिवी मूर्तिरापः क्लेदस्तेजोऽभिसन्तापो वायुः प्राणो-वियच्छुषिराणि ब्रह्मान्तरात्मा ।" च० शा० ५. ६ ।

एषु चोक्तेषु पञ्चभूततत्त्वेषु—आकाशमप्रतिघातलक्षणं भूतान्तरक्रियानिरपेक्षमवकाशमात्रस्वभावम् । पृथिवी तु पूर्वभूतसमुदायकार्यरूपा, वायोः सञ्चालनक्रियया, तेजस औष्ण्येन, जलस्य च स्नेहनशक्त्या समावृता संघातमयी संपन्ना । समस्तपार्थिवानामुपादानभूतापि वाय्वादिवन्न तत्त्वान्तरोत्पादनसमर्थेति त्रीण्येव " वाय्वग्निजलतत्त्वानि " प्रधानतमानि । न हि जगति तादृशमेकमपि भूतविकारमनुपश्यामो यत्र वायोः क्रियाशक्तिः, अग्नेः पाचनशक्तिः, जलस्य च संघातशक्तिर्न व्याप्रियेत । नापि चैतद् विशेषतो वर्णनीयम्, यदेषां साम्यवैषम्येऽपि जगतः स्थितिविनाशनिमित्ते भवत इति ।

तान्येतानि जगन्मूलतत्त्वानि पञ्चमहाभूतशरीरिसमवायात्मके पुरुषे तथैव कारणतावच्छेदकत्वेनावस्थितानीति नात्र विप्रतिपत्तिलेशावसरः कोऽपि । तथा च देहाभ्यन्तर्गता हृदयान्त्रामाशययकृद्वृक्कफुफ्फुसस्नायुपेश्यादीनां तास्ता विविधाद्भुताः क्रियाः प्राकृतवाततत्त्वकृता एवेत्यसंशयं प्रतीयते । या च प्रत्यहं भुक्तान्नपानादिपचनक्रिया प्रवर्तमाना परिदृश्यते शरीरेषु न साग्नितत्त्वं विना कथञ्चिदपि भवितुमर्हेति तन्निर्विशङ्कं तत्रावबुध्यते । यच्च स्नेहनश्लेषणक्लेदनादिकर्म देहान्तर्गतं स्फुटमनुभूयते तज्जलतत्त्वं विहाय क संभाव्येतेति तदेव तत्र व्यक्ततमं विदिदितवेतव्यैरवगम्यते ।

तदेतद् वाय्वग्निजलात्मकं मूलतत्त्वत्रितयं शरीरेषु यथाक्रमं वातः पित्तं श्लेष्मेति संज्ञात्रयेण व्यवहृतम् । यदुक्तम्—"तत्र वायोरात्मैवात्मा, पित्तमाग्नेयम्, श्लेष्मा सौम्य इति ।" सु० सू० ४२, ५ । 'वा गतिगन्धनयोः' इत्यस्माद्—'हसि मृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्'—इत्यनेन तन्प्रत्यये वातः, 'तप सन्तापे' इत्यस्मात्कर्तरि क्तप्रत्यये संज्ञायां वर्णागमविपर्ययाभ्यां पृषोदरादित्वात् पित्तम्, 'श्लिष् आलिङ्गने'—इत्यस्मात् 'सर्वधातुभ्यो मनिन्'—इति मनिन् प्रत्यये गुणे च कृते श्लेष्मा,—इति रूपाणि भवन्ति । तथा च वातो गन्धनोपादानः स्वात्मलक्षणः, पित्तं सन्तापलक्षणम्, श्लेष्मा संश्लेषणादिकृत्सौम्य इति तेषां स्वलक्षणानि प्रदर्शितानि भवन्ति ।

त एते वातपित्तश्लेष्माणो देहेऽस्मिन् वाय्वर्कसोमस्थानीयाः । वायुर्हि वायव्यस्वभाववान् । सूर्यस्तैजसस्वभाववान् । सोमोऽप्याप्यस्वभाववान् । ते यथा कालस्वभावमार्गपरिगृहीता विक्षेपादानविसर्गादिभिः स्वस्वधर्मपरिग्रहैः कालर्तुरसदोषदेहनिर्वृत्तिप्रत्ययभूताः जगदिदं धारयन्ति, तथा शरीरं वातपित्तश्लेष्माणः । यथा चोक्तम्—

"विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।

धारयन्ति जगद् देहं कफपित्तानिलास्तथा ॥"
सु० सू० २१, ८।

तेषु चैतेषु — "प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति। रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा प्रविभक्तमग्निकर्मणानुग्रहं करोति। सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृच्छ्लेष्मा पञ्चधा प्रविभक्त उदककर्मणाऽनुग्रहं करोति।" सु० सू० १५, ४। तथा च—"वातपित्तश्लेष्माण एव देहसंभवहेतवः। तैरेवाव्यापन्नैरधोमध्योर्ध्वसंनिविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके।" सु० सू० २१, ३। इति स्पष्टं संगच्छते। तथा सुश्रुतशारीरे—"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु"— इत्यारभ्य वातादीनां प्रकृत्यारम्भकत्वं यदुक्तं तदपि संगच्छते।

यद्यप्येते खलु वातपित्तश्लेष्माणः सर्वस्मिन्नेव शरीरे परिव्याप्ताः—यदुक्तम्, "वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांस्ययनभूतानि।" च० वि० ५, ६। तथा "सर्वशरीरचरास्तु खलु वातपित्तश्लेष्माणः सर्वस्मिन् हि शरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति।" च० सू० २०, १०। इति। तथा च नैषां स्थानविशेषव्यवस्थितिः संभावनीया, तथापि यत्र यत्र देहांशे कर्मविशेषा ह्येषां परिदृश्यन्ते तत्र तत्र स्थूलबुद्धीनां बोधसौकर्ययोपचारात् सा प्रकल्पिता, तथा पञ्च पञ्च भेदा अपि। एवञ्च—

"अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः।
मधुरात् प्राक् कफो भावात् फेनभूत उदीर्यते ॥
परन्तु पच्यमानस्य विदग्धस्याम्लभावतः।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥
पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना।
परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः ॥"
च० चि० १५, ७-८।

इत्येवमुक्ते भुक्तमात्रे प्रकुपित एवामाशय-(Stomach) स्रुते मुखकुहरान्तःसृणिकाग्रन्थिचतुष्टय-(Salivary glands) स्रुतलाला-(Salivo) स्रावसाहाय्येन भुक्तान्नक्लेदकारिणि रसविशेषे (Gasteic juice) प्राकृतश्लेष्मणः, तथा संमीलितमुखेन स्रोतोद्वयेन ग्रहण्यां (Dwodenum) समाश्रिते पित्तकोष-(Gall-bladder) बह्व्याशयाभ्यां (Pancreas) च समागते रसविशेषे प्राकृतपित्तस्य, पक्वाशये (Large intestine) चान्नादिविपरिणामसमुद्भवे वाष्पविशेषे स्वाभाविकस्य वायोरेव सूक्ष्मतयावस्थानमवधार्यम्। सूक्ष्मत्वन्तु वातादीनाम्—

"वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्तकश्चेष्टानामुच्चावचानाम्, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योजकः, सर्वेन्द्रियाणामभिवोढा, सर्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्त्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलम्, हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानाम्, स्थूलाणुस्रोतसां भेत्ता, कर्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययो भवत्यकुपितः।" च० सू० १२, ८।

"स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः।
स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥
सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः।
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥

अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः ।
तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ।
अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् ।"

सु० नि० १, ५–८ ।

"अग्निरेव शरीरे पित्तान्तर्गतः
कुपिताकुपितः शुभाशुभानि करोति"

च० सू० १२, ११ ।

"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः ।
सौक्ष्म्याद् रसानाददानो विवेक्तुं नैव शक्यते ॥"

सु० सू० ३५, २७ ।

"सोम एव शरीरे श्लेष्मान्तर्गतः
शुभाशुभानि करोति ।"

च० सू० १२, १२ ।

"स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणानुग्रहं करोति ।"

सु० सू० २१, १४ ।

इत्येवं चरकसुश्रुतयोः स्पष्टम् । तथा चामाशयरसादिषु श्लेष्मत्वादिव्यवहारस्तात्स्थ्यात्ताच्छब्द्यमिति न्यायेनौपचारिकः ।

अथवाऽस्ति वातादीनां स्थूलसूक्ष्मभेदेन द्वैविध्यम् । तेन चामाशयादिस्थितानां तेषां स्थूलत्वम्, तदन्तर्गतानां च सर्वशरीरव्यापिनां प्रकृतिहेतुभूतानामचिन्त्याद्भुतकर्मणां सूक्ष्मत्वमिति बोध्यम् ।

ते चैते वातपित्तश्लेष्माणः प्राकृताः प्राणभृतां कृत्स्नमेव देहमासज्य नित्यमवस्थिताः स्वं स्वं कर्म कुर्वाणा नियतमुपचयबलवर्णप्रसादादिभिः सुखायुषो लक्षणैरभियोजयन्ति पुरुषम्, विकृतास्त्वेनं तैस्तैर्विविधैर्विकृतिभावैरुपपादयन्ति । "तेषामेव हि भावानां संपत् संजनयेन्नरम् । तेषामेव विपद् व्याधीन् विविधान् समुदीरयेत् ।" इति सिद्धान्तदर्शनात् । अतश्चैतान् प्रकृतितो वा विकृतितो वाऽध्यवस्यन्ति कुशलाः । तत्रैषां प्रकृतिस्थानां कर्माणि—

"उत्साहोच्छ्वासनिःश्वासचेष्टाधातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् ।
प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥
स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥"

विकृतानाञ्च—

"वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते ।
कर्मणः प्राकृताद्धानिर्वृद्धिर्वापि विरोधिनाम् ॥"

च० सू० १९, ५५–५८ ।

एषां च साम्यमेव प्रकृतिः । वैषम्यं च विकारो रोग इत्यनर्थान्तरं भवति । यदुक्तम्—

"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव हि ॥"

च० सू० ९, ४ ।

वैषम्यं ह्रासवृद्धिलक्षणम् । साम्यं चोचितावस्थायां प्रकृतिभावेनावस्थानम् । तदुभयमेव —" प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि "—आहारविधिविशेषायतनान्यपेक्षते, तानि चरकविमाने द्रष्टव्यानि ।

इदञ्चास्ति विशेषतः प्रतिपत्तव्यम्, सर्वेष्वेव शरीरोद्भवेषु रोगेषु या या विविधा विकृतयो दृश्यन्ते, तास्ताः सर्वा एव तत्त्वतो विविच्यमानास्त्रिविधा एव संपद्यन्ते । वायवीयाः, आग्नेय्यः, सौम्याश्च । लोके रौक्ष्यलाघववैशद्यखरत्वसौक्ष्म्यसंचलनादयो गुणाः संसव्यासभेदादयश्च क्रिया यथा वायौ, औष्ण्यतैक्ष्ण्य-

विसृतासरत्वकटुकादयो दाहपाकस्वेदकोथादयश्च यथा तेजसि, स्नेहशैत्यशौक्ल्यगौरवमाधुर्यमात्स्र्यादयः श्वै-त्यशैत्यस्थैर्यस्तम्भक्लेदोपदेहबन्धमाधुर्यादयश्च जले स्पष्टमनुभूयन्ते, तथा शरीरेऽपि रौक्ष्यादयो वातस्य, औष्ण्यादयः पित्तस्य, स्निग्धत्वादयश्च श्लेष्मण एव तं शरीरावयवमाविशतः संभवन्तीति निधार्यन्ते। तथा च सर्व एव विविधा विकारा उक्ताश्चानुक्ताश्च विषमैर्वातादिभिः सह कार्यकारणभावं प्रतिपद्यन्ते। नेद-मस्ति विदुषामप्रत्यक्षम्—यद् वातादिप्रत्यनीकैः खलु भेषजान्नविहारैस्ते ते विविधा विकाराः सर्व एव प्रायो विनिवर्तन्ते, तत्समानगुणबहुलैस्तु द्रव्यगुणकर्मभिरस-कृदभ्यस्यमानैरुत्पद्यन्ते विवर्धन्ते चेति। एवञ्चास्ति तेषां वाताद्यन्वयव्यतिरेकानुविधायित्वमित्यवगम्यते। तथा चागमः—"सर्वेषां व्याधीनां वातपित्तश्लेष्माण एव मूलम्, तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्च। यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्व-रूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते।" सु० सू० २४, ८। इति। अस्ति च श्रुतिरपि—अश्वि-नोः सकाशात्—शंयुनाम्नो बृहस्पतिपुत्रस्य त्रिधातूनां (वातपित्तश्लेष्मणाम्) कल्याणवहनप्रार्थनां सूच-यन्ती, या वातपित्तश्लेष्मणां वैषम्यमसुखाय साम्यं च सुखाय भवतीति परिचाययति। यथा—

"त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरुदत्तमद्भ्यः। ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्मवहतं शुभस्पती।" ऋ० १। ३। ४। ६।

अत्र च सायणः—"हे अश्विना अस्मभ्यं दिव्या-नि द्युलोकवर्तीनि भेषजा औषधानि त्रिर्दत्तम्, तथा पार्थिवानि पृथिव्यामुत्पन्नानि—औषधानि त्रिर्दत्तम्, अद्भ्य उ, आन्तरीक्षसकाशादपि औषधानि त्रिर्दत्तम्। आप इति—अन्तरिक्षनाम। 'आपः पृथिवी भूरिति' तन्नामसु पाठात्। शंयोरेतन्नामकस्य बृहस्पतिपुत्रस्य। 'ते शंयुं बार्हस्पत्यमब्रुवन्'—इति ब्राह्मणान्तरात्। तस्य संबन्धिनमोमानं सुखविशेषं ममकाय सूनवे मदी-याय पुत्राय दत्तम्। हे शुभस्पती शोभनस्यौषधजातस्य पालकौ युवां त्रिधातु वातपित्तश्लेष्मधातुत्रयशमन-विषयं सुखं वहतं प्रापयतम्।" इति।

तथा चरकेऽपि—"सर्व एव निजा विकारा नान्यत्र वातपित्तकफेभ्योऽभिनिर्वर्तन्ते, यथा हि शकुनिः सर्वा अपि दिशः परिपतन् स्वां छायां नातिवर्तते तथा स्वधातुवैषम्यनिमित्ताः सर्वे विकारा वातपित्तकफान् नातिवर्तन्ते।" इति।

च० सू० १९, १६।

एवञ्च कार्यनियतपूर्ववृत्तितया धातुवैषम्यस्य व्याधेर्धातुसाम्यस्य चारोग्यस्य वातादय एव कुपिता-कुपिता मूलमिति सिद्धम्। तथा चैते वातादयोऽचि-न्त्याद्भुतशक्तिकर्माणस्तत्त्वस्वरूपा महर्षिभिस्तत्त्वचक्षु-षावलोकिताः क्रियामात्रानुमेयाश्च, प्रत्यक्षवादिभिर्य-न्त्रादिसाहाय्येन स्थूलदृष्ट्या तथाऽनवलोकिता अपि न ह्रसद्वादक्षुद्रफूत्कारेण दृढमूलं स्वास्तित्वं विजहतीति दृढतरः प्राच्यसिद्धान्तः।

न चैतावतेदमवधेयम्। जीवाणूनामणुवीक्षणयन्त्रा-(Micros cope) दिसाहाय्येन प्रत्यक्षतो दृष्टा-नामप्यकारणत्वं मन्यामह इति। सन्ति तेऽपि प्रतिदेहं संक्रान्ताः शोणितश्लेष्मादिगताः स्थूलसूक्ष्मा बहूनां रोगाणामुत्पत्तिहेतव इति चान्वयव्यतिरेकाभ्यामेव साध्यते। तथापि तेषां प्रकृतिबलाबलापेक्षमेवास्ति संक्रमणप्रभावप्रसरणमिति प्रतिपदमनुपश्यामः। अन्यथा त्वेकस्यैव संक्रामकरोगिणः संपर्कात्समस्त-जगत एवोपप्लवः स्यात्, पारस्परिकसंसर्गस्य दुर्वार-

स्वात्। तथा चाप्रतिहतप्रकृतिबलानां शरीरेषु सम्यक् संक्रान्ता अपि ते न किंचित्कराः, तद्विपरीतानान्त्वसुखायापि संभवन्तीति विज्ञायते। एवञ्चास्तु तेषां विशिष्टमेव निदानत्वम्, प्रकृतिहेतुभूतानां वातादीनां तु वैषम्यमुपगतानां सामान्यनिदानत्वमस्त्येवेत्यलमति विस्तरेण। इदञ्चावसाने—

"नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः। विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥"

च० सू० १९, ५४।

इति भगवतोऽग्निवेशस्य वचनं स्मारयित्वा, यथामत्यायुर्वेदशास्त्रमालोच्य विद्वज्जनरचितनिबन्धपर्यवेक्षणादिपूर्वकं संक्षेपतो लिखितोऽयं त्रिदोषविज्ञानवादो विदुषां पुरः सविनयमुपस्थाप्यते। अतः परं च सुधिय एव प्रमाणमिति शम्।



# त्रिदोष-विज्ञानम्।

(लेखकः—श्री दातारोपाह्ववामनशास्त्री, जनस्थानीयः।)



विदितचरमेव सर्वेषां वैद्यविदुषाम् तथा गीर्वाणवाङ्मयावगाहनपटूनां पण्डितानाम्—यदायुर्वेदे त्रिदोषाणां महत्वम्। यथा वा प्राच्यविद्यानाम् वेदत्रयी मूलम्, यथा वा सर्वेषां त्रयस्त्रिंशत्कोटीनामपि दिवौकसाम् ब्रह्मविष्णुशिवात्मकत्रय्याः श्रेष्ठत्वम्, यथा वा सर्वेषामपि त्रिचतुर्दशभुवनानाम् भूर्भुवःस्वरितिलोकत्रितयस्य माहात्म्यम्, यथा सर्वेषामपि प्राणिजातानां नानाविधानामपि सत्वरजस्तमआत्मकं त्रैगुण्यं मूलम्, तथैवायुर्वेदशास्त्रे वातपित्तकफात्मकानां त्रिदोषाणाम् मूलत्वं श्रेष्ठतमत्वं महत्वं चेति। अत एव सर्वेऽपि आयुर्वेदाचार्याः—

वातपित्तश्लेष्माण एव देहसंभवहेतवः। इति
नर्ते देहः कफादस्ति न पित्तान्नच मारुतात्। इति
दोषधातुमलमूलं हि शरीरम्। इति
दोषधातुमला मूलं सदा देहस्य इति च।

ऐकमत्येन जगुः।

२ आयुर्वेदो हि उपवेद ऋग्वेदस्य, उपाङ्गमथर्ववेदस्य चेति प्रथिततरमेवेति। अत एव "ब्रह्मा स्मृत्वा (न तु कृत्वा) आयुषो वेदम्" इति वाग्भटाचार्येणोक्तम्। नित्यत्वादायुर्वेदस्य स्वतः प्रामाण्याच्च। वेदा हि नित्याः स्वतः प्रमाणाः इति च सुस्पष्टमेव। भूतसर्गादावपि स्वतःसिद्धत्वाद्वेदस्येति सिद्धमेव। तत आरभ्य एव 'दोषधातुमलमूलं हि शरीरम्' इति चायुर्वेदसिद्धांतः स्वतः सिद्ध एवेति। अस्मिन् सिद्धान्ते त्रिकालबाधरहिते सत्यपि यथा "त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।" "र्फर्फरी तुर्फरी" इति वदन्तः स्वतः प्रमाणानां वेदानामपि निन्दकाः नास्तिकशिरोमणयः चार्वाकादयः समुत्पन्नास्तथैवाऽधुनिका अपि केचन पाश्चात्यवैद्यकविद्यासंपन्नाः। ता एव विद्या यथार्थत्वेन विद्यापदवाच्यास्ता एव सत्या विद्याः अन्या वाचो विमुञ्चथेति वदन्तः कोऽयमज्ञानराशिरायुर्वेदः? के च तस्मिन् मूलत्वेन वर्णितास्त्रिदोषाः? इत्युद्घोषयन्तः, सर्वमेवेदं मूर्ख-

प्रलपितमिति वादिनोऽस्माभिः सर्वमपि मृतशरीरं विशसितम्, जीवच्छरीरस्याऽपि व्यापारः नानाविधैराधुनिकैः शास्त्रैः यन्त्रशस्त्रादिसाधनसंपन्नैः प्रात्यक्षिकैः प्रयोगैश्च सम्यगवलोकितः न चैव दृश्यन्ते तत्र त्रिदोषा नाम कानिचिदपि द्रव्याणि। नामाऽपि न श्रूयते तत्र तेषामिति प्रत्यक्षसिद्धे कोऽयं जीर्ण आयुर्वेदः यश्च जीवच्छरीरे वदति वातपित्तकफानामस्तित्वम्। यदि च सन्ति वा त्रिदोषास्तर्हि कथं न दृश्यन्तेऽस्माभिः? अतः ज्ञानस्य दुर्वैदग्ध्यात् अद्यापि त्रिदोषास्तित्ववादिभिः वैद्यैः दृष्टिपथमानेयास्त्रिदोषाः। अथवा त्याज्यस्त्रिदोषत्वमताभिमानः इति आह्वयन्ति आयुर्वेदनाशे समुद्यताः—इति सांप्रतिकी स्थितिर्विद्यते आयुर्वेदस्य।

३ इयं च त्रिदोषास्तित्वविषये आक्षेपकाणां समुद्भूतिः समभूत् पञ्चाशद्वर्षात् पूर्वम्। तत आरभ्य तदाक्षेपनिराकरणार्थं त्रिदोषस्वरूपप्रकटीकरणार्थं च वैद्यैस्तथाऽयुर्वेदाभिमानिभिरन्यैश्च दक्षतरैः बहूनि परस्परं भिन्नानि आयुर्वेदीयाभासरूपाणि कानिचित् पाश्चात्यवैद्यकशास्त्रस्थतत्त्वानां तुलनायुतानि स्वकीयानि मतानि त्रिदोषस्वरूपत्वेन प्रकटितानि, अद्यापि प्रकटीक्रियन्ते च।

४ (१) त्रिदोषाः न वास्तवस्वरूपाः किन्तु कामपि कल्पनां स्वीकृत्य ऋषिभिः कल्पिता ह्येते इति आधुनिकानां मतम्। (२) त्रिदोषा नाम अदृश्या काचित् त्रिप्रकारा शक्तिरिति द्वितीयं मतम्। (३) त्रिदोषा नाम न केचिदन्ये पञ्चमहाभूतेभ्यः, पञ्चमहाभूतान्येव ते इति तृतीयं मतम्। (४) सत्वरजस्तमसामेवान्यः प्रकारः कोपि वर्णितः आयुर्वेदीयैस्त्रिदोषा नामेति चतुर्थं मतम्। (५) परमसूक्ष्माः शक्त्युत्कर्षवर्तिनः अदृश्याः कार्यानुमेयाः सप्तधात्वाश्रिताः पदार्था नाम वातपित्तकफाः इति पञ्चमं मतम्, (६) शरीरे पाश्चात्यवैद्यके (सालिड्लिकिड् गेशस्) सान्द्रार्द्रवाय्वात्मिका या त्रिविधा जीवनव्यापारपद्धतिः सैव कफपित्तवातात्मिका त्रिदोषा पद्धतिरिति षष्ठं मतम् (७) ब्लड्सिस्टम्, लिंफयाटिकसिस्टम्, नर्व्हससिस्टम्—इति त्रिधा विभक्ता पाश्चात्यनये या सरणिः सैव त्रिदोषसंज्ञितेति सप्तमं मतम्, इत्यनेकानि मतानि विविधैः पण्डितैः पुरस्कृतानि प्रचलन्त्यस्मिन् विवादे। सर्वाण्येव परस्परं भिन्नानि जिज्ञासूनामभ्यासकानां च अश्रद्धाजनकानि बुद्धेर्भ्रमोत्पादकानि चैव तानि मतानीति विज्ञायते एव। एकस्यैव वस्तुनः भिन्नस्वरूपेणावगमः इति तस्य वस्तुनः यथार्थत्वे संशयास्पदत्वं वा तत्स्वरूपावगन्तॄणामन्धगजन्यायानुकरणत्वं द्योतयति इति सिद्धमेव।

५ अतोस्माकमस्मिन् विषये अयमभिप्रायः यः केवलमायुर्वेदशास्त्रमेव पुरस्कृत्य अस्य विषयस्य विचारः प्राथम्येन कर्तव्यः—आयुर्वेदशास्त्रप्रतिपादितसिद्धान्तानाम् अन्यशास्त्रैः पुरस्कृतानाम् आनुकूल्यप्रदर्शनार्थम् अन्येषां केवलमेवास्मदीयानां न्यायसांख्यादिशास्त्राणां दिग्दर्शनं कार्यम्। पाश्चात्यवैद्यकसिद्धान्तैः सह त्रिदोषसिद्धान्तस्य तुलनाया विचारोऽप्यधुना सुदूरमेव स्थापनीयः। सरणिमिमामङ्गीकृत्यैव किमप्यधो लिख्यते—

६ "त्रिदोषा नाम वातपित्तकफाः नित्योत्पत्तिमन्ति, वृद्धिक्षयशीलात्मकानि प्रत्यक्षाणि प्रत्यक्षादिप्रमाणसिद्धानि दूषणस्वभावविशिष्टानि आहारपरिणामावस्थायां तथा आहारपरिणामजन्यावस्थायां दृश्यानि सप्तधातुप्रविभक्तावस्थायां कार्यानुमेयानि स्थूलशरीरमूलानि परिमाणवन्ति पाञ्चभौतिकानि द्रव्याणि" इति आयुर्वेदसिद्धान्तः प्रथमं दीयते। तस्य च सिद्धिः केवलैरायुर्वेदवचनैः सांख्यन्यायादिशास्त्रानुमतैः कथं भवतीति पुरस्तादुपवर्ण्यते यथाशक्त्या।

७ तत्र त्रिदोषा नाम वातपित्तकफाः त्रय एव

दोषा:, नान्यश्चतुर्थो दोषोस्तीति "वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः" इति वाग्भटः। वायुः पित्तं कफश्चेति संख्यया त्रित्वे लब्धे 'त्रयः' इति पदं नियमार्थम्, त्रय एव दोषाः नान्यश्चतुर्थो दोषः इति ख्यापनार्थमिति टीकाकाराः। त्रिदोषाणां नित्योत्पादस्तु षड्रसात्मकस्याहारपरिणामकाले,तथा आहारपरिणामजन्यपरिणामोत्तरकाले ) काले भवति। स यथा—आहारः षड्रसात्मकः उपयुज्यते नित्यं मानवैः, ते रसाः षडेव स्वाद्वम्ललवणतिक्तोषणकषायकाः। तत्र—

मधुरः—कफं करोति वातपित्ते हन्ति।
अम्लः—पित्तकफौ जनयति वातं हन्ति॥
लवणः—कफपित्ते जनयति वातं हन्ति।
तिक्तः—वातं जनयति कफपित्ते हन्ति॥
कटुः—पित्तवातौ जनयति कफं हन्ति।
कषायः—वातमुत्पादयति पित्तकफौ नाशयति।

इति षड्रसेभ्यस्त्रिदोषाणामुत्पत्तिविनाशौ भवतः।

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते॥

"दोषमेकैकं त्रयस्त्रयो रसाः जनयन्ति। त्रयस्त्रयश्चोपशमयन्ति। रसदोषसन्निपाते तु ये रसाः यैर्दोषैः समानगुणा वा समानगुणभूयिष्ठाः ते तानभिवर्धयन्ति। विपरीतगुणास्तु विपरीतगुणभूयिष्ठा वा शमयन्ति अभ्यस्यमानाः।" ( चरकसंहिता, विमानस्थानम्। अ० १ सूत्रक्रमाङ्कः ७ )

"विविधमशितपीतलीढखादितं जन्तोर्हितम् अन्तरग्निसंधुक्षितबलेन यथा स्वेनोष्मणा सम्यग् विपच्यमानं कालवद् अनवस्थितसर्वधातुपाकम् अनुपहतसर्वधातूष्ममारुतस्रोतः, केवलं शरीरम् उपचयबलवर्ण—सुखायुषा योजयति। शरीरधातूनूर्जयति। धातवो धात्वाहाराः प्रकृतिमनुवर्तन्ते। तत्र (अशितादौ) आहारप्रसादाख्यो रसः किट्टं च मलाख्यम् अभिनिर्वर्तते। किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः अवयवाः पुष्यन्ति, पुष्यन्ति हि आहाररसात् रसरुधिरमांसमेदोस्थिमज्जशुक्रौजांसि ... ते सर्वे एव मलाख्याः ( वातपित्तकफादयः ) प्रसादाख्याः ( रसरक्तादयः ) धातवो रसमलाभ्यां पुष्यन्तः स्वमानं यथावयवं शरीरमनुवर्तन्ते। तेषां तु मलप्रसादाख्यानां धातूनां स्रोतांसि अयनमुखानि। यथास्वं तानि यथाविभागेन यथास्वं धातूनापूरयन्त्येवमिदं शरीरम् अशितपीतलीढखादितप्रभवम्।"

( चरकसूत्रम्, अध्यायः २८ सूत्रम् ३ )

अत्र चक्रः "ननु शरीरधातूनां प्रकृतिस्थितानां स्वत एव उपचयाद्यस्ति। तत्किमशितादिना क्रियते? इत्याह—

धातवो हीत्यादि—धातुराहारो येषां ते धात्वाहाराः धातवो रसादयो नित्यं क्षीयमाणा अशितादिजनितधात्वाहारा एव सन्तः परं स्वास्थ्यम् अनुवर्तन्ते, नान्यथेत्यर्थः।

योसौ धातूनामाहारः तमाह—तत्रेत्यादि—तत्रेत्यशितादौ रसः किट्टं चाभिनिर्वर्तते। आहारः प्रसाद इत्याख्या यस्य स तथा प्रसादः सारः किट्टम् असारभागः। किट्टादिति मलाख्यात्। तेन अन्नाख्यः किट्टांशस्ततो मूत्रपुरीषे भवतो वायुश्च। रसात् पच्यमानात् मलः कफः। लोहितात् पच्यमानात् पित्तं मलः भवति। यद्यपि वातः अनशनादप्युपलभ्यते, तथापि रूक्षादिभोजनमलांशादप्युपपद्यते एवेति किट्टाद् वातोत्पत्तिर्युक्तैव।" इत्यादिभिर्वचनैः षड्रसात्मकादाहारादेव दोषधातुमलेतिसंज्ञकानां न तु संख्याभिन्नानां वातपित्तकफानां रसादिसप्तधातूनां नित्योत्पत्तिर्भवतीति दर्शितम्। अथ तेषां

सा उत्पत्तिः कथं भवतीति दर्श्यते, षड्रसस्य भुक्तमात्रस्य अन्नस्य प्रथमपाकतः इति ( आहारपरिणामावस्थायाम् इत्यर्थः) कफस्य उद्भवो यस्मादिति कफोद्भवाद् मधुरात् प्रपाकतः फेनभूतः कफ उदीर्यते । अतः परं विदग्धस्य पच्यमानस्य आशयादिति ( आमाशयात् ) च्यवमानस्य अन्नस्य अम्लभावतः अच्छम् ( नाम अघनं द्रवरूपम् इत्यर्थः) पित्तमुदीर्यते । (अम्लं च पित्तम् अम्लभावादाहारस्य उत्पद्यते इति युक्तमेवेति चक्रः ) । अतः परं पक्वाशयं प्राप्तस्य वह्निना शोष्यमाणस्य अत एव परिपिण्डितस्य पक्वस्य अन्नस्य किट्टरूपतया परिणतस्य कटुभावतः वायुः स्यात् इति वायुः उत्पद्यते इति । एवम् आमाशयस्थमन्नं रसमलाय पच्यते । तत आहारपरिणामजन्यावस्थायाम् "रसाद्रक्तं ततो मांसं मांसाद् मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रजायते ॥" रसाद् रक्तार्थं पच्यमानं किट्टं कफो जायते। प्रसादश्च रक्तम् । रक्तात्-मांसार्थं पच्यमानात् किट्टं पित्तं संजायते । प्रसादश्च मांसम् । एवमेव पूर्वपूर्वधातुपचनादुत्तरोत्तरधातुमलोत्पादो भवति । ( चरकचिकित्सितस्थानम् , अध्यायः १५ सूत्राणि ६—३१ ) एवमेव अष्टाङ्गसंग्रहहृदयकाराः वाग्भटाचार्याः, स्वे स्वे प्रबन्धे लिलिखुः । वायोरुत्पत्तिविषये तु संग्रहकाराः तत्रैव लिखितवन्तः— यथा "वायुः पुनः अग्नेः आहारस्य च बह्वल्पतया तस्मात् तस्मात् मूर्च्छनाविशेषादमूर्तः शब्दवान् ईषच्छब्दः प्रचुरोऽल्पो वा पञ्चात्मा कोष्ठे प्रादुर्भवति । एवं च कृत्वा अन्नमया एव देहे सर्वे भावाः" इति । अत्र अमूर्त इत्यस्य अकठिन इति पर्यायं दत्तवान् इन्दुटीकाकारः । ( संग्रहशारीरस्थाने अध्यायः ६ सूत्रसंख्या ३० । ३३४ त्रिचुरस्थपुस्तकस्य ) ९ अत्रैव वातपित्तकफाः दोषत्वेन धातुत्वेन मलत्वेन भिन्नाः इति न ग्राह्यम् । वातादीनां त्रयाणामेव इमाः 'दोषधातुमलाः' इति संज्ञाः विद्यन्ते । तथा च मलसंज्ञा च तेषां द्विप्रकारा । एका तु, यथा इक्षुरसात् पच्यमानात् प्रसादात्मकस्य गुडस्य, अन्यस्य किट्टरूपद्रव्यस्य एकसमये एव उत्पत्तिर्भवति, तथैव अन्नरसरक्तानां पच्यमानानां प्रसादसत्वेन यः परिपाको भवति, तस्मात् परिपाकात् किट्टस्वरूपात् पित्तकफानाम् उत्पत्तिर्भवति। अत एव तेषां किट्टमिति 'मल'इति संज्ञा। न तु तेषामनया मलसंज्ञया शरीरानुपयुक्तत्वेन त्याज्यत्वम् वा हेयत्वम् अवधार्यम् । 'मल' इति इयं पारिभाषिकी संज्ञा दोषसंज्ञावत् । ते तु अस्यामवस्थायाम् आहारस्य मलाः । न तु साक्षात् मलस्वरूपाः । अपरा तु मलिनीकरणान् मलाः इति संज्ञा । इयं तावत् यदा ते वातपित्तकफाः दुष्टाः सन्तः परस्परं तथा रसादिधातून् सर्वानपि शरीरावयवान् संदूष्य-मलिनीकुर्वन्ति नाम स्वकार्यकरणे असमर्थान् जनयन्ति, तदेयं मलेति संज्ञा तेषामान्वर्थिकी । इयं च अपरा मलसंज्ञा न केवलं प्रदुष्टवातादीनामेव, अपि तु दुष्टरसादिधातूनामपि शास्त्रकारैः प्रदत्ता—यथा—शरीरगुणाः पुनर्द्विविधाः संग्रहेण—मलभूताः प्रसादभूताश्च। तत्र मलभूतास्ते, ये शरीरस्य बाधाकराः स्युः। तद्यथा-शरीरछिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः परिपक्वाश्च धातवः प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते, सर्वांस्तान् मले संचक्ष्महे । इतरांस्तु प्रसादे । परिपक्वाश्च धातवः इति पाकात् पूयतां गताश्च शोणितादयो मलाख्याः । किं वा अपक्वाश्चेति पाठे तदा सामधातवो मलाख्या इति विज्ञेयम् । इति चक्रः ( चरके शारीरस्थानम् । अध्यायः ६ सूत्रम् १७)

१० अतः परं तेषां त्रिदोषाणां स्वभावतो वृद्धि-

चयशीलत्वं वर्ण्यते—बाल्ये वयसि हेमन्तशिशिरकाले वसन्ते च भुक्तस्य प्राक्पचनावस्थायां प्रत्यूषसि, सायंकाले कफस्य, तारुण्ये वर्षाशरत्सु भुक्तस्य विदाहावस्थायाम् ( अन्नरसे पाचकाग्निना पच्यमाने सति ) मध्याह्ने मध्यरात्रौ पित्तस्य, वार्द्धके ग्रीष्मवर्षासु भुक्तस्य शोष्यमाणावस्थायां रात्र्यन्ते च वायोः, स्वसमप्रमाणात् अधिका चयात्मिका प्रकोपात्मिका वृद्धिर्भवतीति। तथा च कफवृद्धिकरैराहारैः विहारैः मानसदुष्ट्या कफः, तथा पित्तवृद्धिकरैराहारैर्विहारैः तथा मनोदुष्ट्याऽपि पित्तम्, तथैव वातवृद्धिकरैराहारैर्विहारैस्तथा मनोदुष्ट्यापि वातः, स्वमानातिरिक्तो भवति, इति यथैव तेषां वृद्धिस्तथैव विपरीते वयसि—काले दिनरात्रिवेलायां भुक्तपचनावस्थायां विपरीतैराहारविहारैर्वैपरीत्येन मनसा गुणेन च तेषां चयो भवति। चयो नाम स्वावश्यकमानापेक्षया तेषामल्पांशेन वा आधिक्येन वा न्यूनत्वम्। वयःकालदिनरात्रिभिः मनोदुष्ट्या च या तेषां वृद्धिर्वा हानिर्वा, सा तु स्वाभाविकी ( नैसर्गिकी)। यस्या आहारादिभिर्जायते वृद्धिर्हानिर्वा, सा तु औत्पत्तिकीति भेदोऽवगन्तव्यः। यतः स्वभावादेव मधुरादयो रसाः मनुष्याणां कफादिस्थानेषु तिष्ठन्ति, अतः वयःकालदिनरात्रिमनोभिः संजातपरिणामेभ्यस्तेभ्यो मधुरादिरसेभ्यः स्वाभाविकानां कफपित्तवातानां वृद्धिर्वा हानिर्वा स्वाभाविकी भवति। उक्तं हि तन्त्रान्तरे—"मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः, ततः संवर्धते श्लेष्मा शरीरबलवर्द्धनः। नाभीहृदयमध्ये तु रसस्त्वम्लो व्यवस्थितः। स्वभावेन मनुष्याणां ततः पित्तं प्रवर्तते। अधो नाभ्यास्तु नन्वेकः कटुकोऽवस्थितो रसः, प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्द्धतेऽनिलः॥" इति चरकटीकायां चक्रः। "वयोहोरात्रिभुक्तानां तेन्तमध्यादिगाः क्रमात्" इति च वाग्भटः। एतावता सिद्धमेव वातपित्तकफानां स्वभावतो वृद्धिक्षयशीलत्वम्।

१२–ते च दोषाः प्रत्यक्षा एव। "तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः" इति वातस्य, "पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्" इति पित्तस्य, "स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः" इति कफस्य स्वरूपमायुर्वेदे वर्णितम्। तथा च प्राणोदानसमानव्यानापानात्मा पञ्चप्रकारको वायुः। पाचकरञ्जकभ्राजकालोचकसाधकभेदात् पञ्चप्रकारकं पित्तम्, बोधकक्लेदकश्लेषकतर्पकावलम्बकेति पञ्चधा प्रविभिन्नः कफः इति त्रिदोषाः प्रायो-बाहुल्येन प्रत्यक्षा एव। इन्द्रियप्रत्यक्षत्वात्। यतः प्रत्यक्षं नाम तत् यदात्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते ( चरकविमानस्थानम्, सूत्रम् ८। ६। ३१ ) तथा आत्मेन्द्रियमनोर्थानां सन्निकर्षात् तदात्वे ( तत्काले ) या व्यक्ता बुद्धिः प्रवर्तते, सा प्रत्यक्षमिति निरुच्यते। ( चरकसूत्रस्थानम्, अध्यायः ११-२० ) इत्युक्तेः तेषां पञ्चविधानामपि पञ्चानां स्वस्वरूपयुतानामात्मेन्द्रियमनोर्थसंनिकर्षत्वेन तदात्वे व्यक्तायाः बुद्धेर्जनकत्वात् प्रत्यक्षमेव। अत्र तु इन्द्रियाणि नाम पञ्च ज्ञानेन्द्रियाणि ग्राह्याणि न केवलं चक्षुरेकमेवेति। लोकव्यवहारस्य चक्षुरिन्द्रियप्रत्यक्षत्वेन प्रायः प्रत्यक्षस्य ग्रहणात् तन्निरासार्थमुच्यते। अनेन त्रिदोषाणां प्रत्यक्षत्वं तथा प्रत्यक्षप्रमाणसिद्धत्वमपि स्पष्टमेव।

१३ अनुमानयुक्त्याप्तवाक्यैरपि वायोः शीतत्वादि, पित्तस्य भ्राजकालोचकसाधकत्वादि, कफस्य तर्पकत्वादि, सिद्धमेव भवतीति बोध्यम्। यथा अनुष्णाशीतोपि वायुः, सामान्योपि शारीरो वायुः शीत एव शीतद्रव्यैस्तद्वर्धनत्वादुष्णेनोपशामकत्वात्। तथैव वायोर्वर्णः कृष्णारुणः अरुणत्वाद् बाह्यवायोः, तथापि शारीरो वायुः कृष्णारुणवर्णकरो दृश्यते। वातप्रकृतिमति शरीरे

तथा वातज-नानारोगेषु मलमूत्रत्वगादिषु कृष्णारुण-वर्णत्वम् उत्पद्यते एव। तथैव भ्राजकसाधकपित्तेऽपि तथा तर्पकाख्यकफेऽपि न प्रत्यक्षत्वं गृह्यते, तथापि त्वग्भ्राजनात् अभिप्रेतार्थसाधनात् ते पित्ते, तथैव अक्षितर्पणात् शिरःस्थः कफः अनुमीयते एव।

१४ ते वातपित्तकफाः अन्नरसरक्तानां पच्यमानानां मलत्वेन उत्पन्नाः अतः मलाख्याः, तथा प्रकुपिताश्च परस्परं मलिनीकरणाद् यथा रसरक्तादि-धातूनां सर्वशरीरस्थभावानां मलिनीकरणादपि मल-संज्ञकास्तथा शरीरेन्द्रियसत्वात्मकसंयोगरूपस्यायुषो धारकत्वाद् धातुसंज्ञितास्तथापि इयं तेषां मलसंज्ञा धातुसंज्ञा तथाविधकार्यकरणात् शकृन्मूत्रस्वेदादिषु रसरक्तादिषु च यथासंख्यं व्याप्नोति, अतः नेयं सर्वथा वातादित्रयेष्वेव व्याप्तिमती संज्ञा। न चापि सर्वथा मलिनकरणत्वं देहधारणत्वमेकमेव तेषां प्रधानं वा विशिष्टं वा अन्याव्याप्तिशीलं कार्यम्। सत्यपि तेषां मलिनीकरणत्वदेहधारकत्वादिकार्ये तेषां दूषणात्मकमेव विशिष्टम् अनन्यसाधारणं कार्यं शास्त्रकारैर्विज्ञायोपवर्णितम्। यद्यपि ते सार्वकालं शरीरस्थाः तथा दूषणस्वभावविशिष्टास्तथापि तेषां साम्यावस्थायां नैव ते शरीरं वा शरीरगतसर्वभावान् दूषयन्ति। यदा ते असमावस्थायां न्यूनातिरिक्ता वा विकृताःस्वैः स्वैः कारणै भवन्ति तदैव ते स्वयं दुष्टाः परान् दूषयन्ति। स्वयनष्टाः परान्नाशयन्तीतिवत्। इदं स्वपरदूषणात्मकं कार्यं वा सामर्थ्यं वा स्वभावो वा नान्येषां रसादि-धातूनां शकृदादिमलानां वा अन्येषां वा शरीरगत-सर्वभावानाम्। ते हि नैव स्वभावतोपि दुष्टाः भवन्ति। नैव परान् दूषयन्ति। अपि तु वातपित्तकफेभ्यः एव ते सर्वदा दुष्टा भवन्ति। अत एव तेषां दूष्या इति संज्ञा। तेषां तु वातपित्तकफानां दोषा इति अनन्य-साधारणी तेष्वेव व्याप्तिमती संज्ञा, नान्येषाम्। अभिघाताद्यागन्तुनिमित्तेषु दोषदुष्टेः प्राक् उत्पत्तिमत्सु व्याधिष्वपि व्याधिजननक्षणानन्तरं द्वितीयक्षणे दोषाणामेव दुष्टिर्भवति नान्येषाम्। तथैव मानसविकारेष्वपि मनोदुष्टिसमनन्तरमेव तेषामेव दुष्टिर्भवति, नान्येषां धातुमलादिभावानाम्। अनेकद्रव्यसमूहात्मकेऽस्मिन् शरीरे इमान्येव त्रीणि वातपित्तकफात्मकानि द्रव्याणि, यानि स्वयं दुष्टानि भूत्वा परान् दूषयन्ति, नान्यानि। अतः दूषणस्वभावविशिष्टानि इति उच्यन्ते। अतस्तेषां मलाः धातवः इति संज्ञाकरणम्, अन्यसाधारणत्वाद् गौणम्। दोषा इति तु अनन्यसाधारणी तेषामेव, नान्येषां संज्ञा। दूषणस्वभावत्वाद् दोषाः नैव ते सर्वकालं दूषयन्ति वा दुष्टा भवन्ति। तथापि स्वकीयं दूषणस्वभावं नैव कदापि त्यजन्ति। अत एव सुश्रुताचार्यैः उक्तम्—'भूयोऽत्र जिज्ञास्यं किं वातादीनां ज्वरादीनां च नित्यः संश्लेषः ? परिच्छेदो वा ? इति। यदि नित्यः संश्लेषः स्यात् तर्हि नित्यातुराः सर्वे एव प्राणिनःस्युः, अथवा वातादीनाम् अन्यत्र वर्तमानानाम् अन्यत्र लिङ्गं भवतीति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न। अत्रोच्यते—दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति। अथ च न नित्यः संबन्धः। यथा हि विद्युद्वाताशनिवर्षाणि आकाशं प्रत्याख्याय न भवन्ति सत्यपि आकाशे कदाचिन्न भवन्ति। अथ च निमित्ततस्तत एव उत्पत्तिरिति। तरङ्गबुद्बुदादयश्च उदकविशेषाः। एवं वातादीनां ज्वरादीनां च नापि संश्लेषो न परिच्छेदः शाश्वतिकः, अथ च निमित्तत एव उत्पत्तिरिति' ( सुश्रुते सूत्रस्थानम् अध्यायः २४। १२) अतः ते सर्वैःसर्वदा सावधानतया मित्रवत् परिरक्ष्या इति अस्मिन् विषये सर्वोपि आयुर्वेदः प्रमाणम्। नैव तद्वचनानाम् उदाहृतिरावश्यकी, सर्वप्रसिद्धत्वात्।

तथैव वचनानां सहस्रशो विद्यमानत्वात्, तथापि चरके तेषां सर्वेषामेव ( शरीरगुणानाम् ) वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावात्। शरीरधातूनां प्रकृतिभूतानाम् तु खलु वातादीनां फलमारोग्यम्। ( शारीरे अध्यायः ६ सू० १८ ) संग्रहेऽपि। अतश्च दोषाः देहस्य स्थिरीकरणात् स्थूणा इत्युच्यन्ते। धारणाद् धातवः, मलिनीकरणाद् आहारमलत्वाच्च मलाः, दूषणस्वभावाद् दोषाः ( सूत्रस्थाने अध्यायः २० ) अनेन दोषाः धातवः मलाश्च कार्यभेदाद् अवस्थाभेदाच्च वातादीनामेव संज्ञा शास्त्रकारैर्दत्ता इति तु स्पष्टतया दृश्यते।

१५ अथ च इमे वातपित्तकफाः आहारपरिणामावस्थायां तथा च आहारपरिणामजन्यावस्थायां दृश्याश्च मूर्ताः इति अस्माभिः उच्यते। यतः अदृश्यस्य कफस्य स्निग्धत्वं शीतत्वं गुरुत्वं श्लक्ष्णत्वं मृत्स्नत्वं स्थिरत्वं तथैव अदृश्यस्य पित्तस्य सस्नेहत्वं तीक्ष्णत्वमुष्णत्वं लघुत्वं विस्रत्वं सरत्वं द्रवत्वं तथा अदृश्यस्य अमूर्तस्य वातस्यापि रूक्षत्वं लघुत्वं शीतत्वम् खरत्वं सूक्ष्मत्वं चलत्वं कथं वा ज्ञायते कथं वा अनुमीयते? प्रत्यक्षपूर्वमेव अनुमानं भवति। तथा च मुनिः "प्रत्यक्षपूर्वं त्रिविधं त्रिकालं चानुमीयते" इति। कार्यतोऽनुमीयते इति चेत् कारणानुविधायीनि कार्याणि भवन्ति इति कारणानि यदि अदृश्यानि गृह्यन्ते तदा कार्याण्यपि अदृश्यान्येव। अथ च सन्ति कार्याणि दृश्यानि तथा कारणान्यपि दृश्यानि अवश्यमेव भवेयुः। स्वाभाविकानामेव कफवातादीनामिमानि स्निग्धरूक्षादीनि स्वाभाविकानि रूपाणि। स्वमानादतिरिक्तानां न्यूनानां वा कफादीनां एतेषामेव स्निग्धत्वादिरूपाणाम् वृद्धिर्वा हानिर्वा भवति। यतः "सर्वेष्वपि खल्वेतेषु वातविकारेषु उक्तेषु अन्येषु च अनुक्तेषु वायोरिदं आत्मरूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः वातविकारमेव अध्यवस्यन्ति कुशलाः। तथैव सर्वेषु खलु एतेषु पित्तविकारेषु तथा श्लेष्मविकारेष्वपि इदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं इत्यध्यवसेयम् (चरके सूत्रस्थानम्, अध्यायः ११)। अत्र अपरिणामीति सहजसिद्धं नान्योपाधिकृतं कर्म च पित्तश्लेष्मनिरपेक्षमिति चक्रः। अतः एतेषामिमानि स्वाभाविकानि रूक्षादीनि रूपाणि। एतन्मया एव एते त्रयः। रूपरूपिणोरभेदात्। यतः इमानि रूपाणि दृश्यानि मूर्तानि च अतः एतद्रूपरूपिणोपि दृश्या मूर्ता एव। वृद्धं पित्तं वा वृद्धः कफ ईदृग्गुणयुत एव नेति प्रत्यक्षतया दृश्यते। तथा च वायुरपि दृश्यते एव। न हस्ताभ्यां ग्रहीतुं शक्यते अकठिनत्वात्। अत एव इन्दुटीकाकाराः—वाते अमूर्तत्वं नाम अकठिनत्वमिति लिखितवन्तः।

१६ तथा च आहारपरिणामावस्थायामाहारपरिणामजन्यावस्थायामेतेषां दृश्यत्वं वर्तते एव।

तथा च रक्तपित्तनिदाने—असाध्यलक्षणे श्रीमाधवकरैः उद्धृते सूत्रे "लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः" इति च असाध्यलक्षणे उद्गारस्य दृश्यत्वं उक्तमेव। उद्गारस्य वातरूपत्वात् यदि च अदृश्य एव वातो गृह्यते तदा कथं लोहितोद्गारं नरः पश्यति, अतः दृश्य एव वातः इति। अत्र टीकाकृतो विजयरक्षिताचार्याः—उद्गारोपि लोहितः प्रवर्तते तथैव उद्गारं लोहितं पश्यतीति लोहितोद्गारदर्शीति व्याख्यां कृतवन्तः। यद्यपि चरकसूत्रस्थाने गतिः अमूर्तत्वं चेति वायोरात्मरूपाणि भवन्तीत्यत्र वायोः अमूर्तत्वमाचार्यैर्वर्णितम्, तथैव चक्रदत्तैः अमूर्तत्वं नाम अदृश्यत्वमिति टीका कृता तथापि अन्यत्र एतेषां वातपित्तकफानां मूर्तत्व-

मपि वर्णितमेव यथा—"यावन्तः पुरुषे मूर्तिमन्तो भावविशेषाः तावन्त एव अस्मिन् स्रोतसां प्रकारविशेषाः। सर्वे भावा हि पुरुषे नान्तरेण स्रोतांस्यभिनिर्वर्तन्ते क्षयं वा न गच्छन्ति। स्रोतांसि खलु परिणाममापद्यमानानां धातूनाम् अभिवाहीनि भवन्ति अयनार्थेन। तानि स्रोतांसि तु प्राणोदकान्नरसरुधिरमेदोस्थिमज्जशुक्रमूत्रपुरीषस्वेदवहानि वातपित्तश्लेष्मणां सर्वशरीरचराणां पुनः सर्वस्रोतांस्ययनभूतानि।" (चरके स्रोतोविमानम्) अत्र तावत् सर्वभावानां मूर्तत्वं वर्णितम् तेषु सर्वेषु वातः आगत एव। येषां मूर्तत्वं तेषां स्रोतांसि वर्तन्ते एव। स्रोतसां पर्यायेषु (अविभागपक्षे) स्रोतांसि शिराधमन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृतासंवृतस्थानानि आशयाः क्षयाः निकेताश्चेति। शरीरधात्ववकाशानाम् लक्ष्यालक्ष्याणाम् नामानि भवन्ति इत्यत्र आशयोपि पर्यायत्वेन उक्त एव। तथा च 'पक्वाशयकटीसक्थी श्रोत्रास्थिस्पर्शनेन्द्रियम्। स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः॥' इति विशेषत्वेन वायोः स्थानेषु पक्वाशय आगत एव। तथा च—वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च, का इत्यनेन वायोः मार्गोपि दर्शित एव। वातवहधमनीनां वातवहशिराणां वर्णनं सुश्रुते शारीरे वर्तते। तथा च प्राणवहे द्वे स्रोतसी विद्येते एव।

तथा च शारीरो वायुः पाञ्चभौतिकोपि पाञ्चभौतिकाद् बाह्यवायोर्भिन्न एव। यतः बाह्यवायोरपि शरीरगतस्य पचनं भवत्येव। तस्य च पचनेन यथाक्रममुत्पद्यन्ते कफपित्तवाताः। अन्यथा सुश्रुते सूत्रस्थाने विंशतितमाध्याये (२४—३७ सूत्रैः) चतुर्दिशागतानां वातानां गुणनिर्देशे श्लेष्मलः मधुरः कषायानुरसः स्निग्धः अविदाही गुरुः विदाहजननः लवणः तीक्ष्णः मृदुः इत्येवं वर्णनं नैव दृश्येत्। अथ च षड्रसेभ्यः एव एतेषां वातपित्तकफानामुत्पत्तिः पूर्वमुक्ता एव। ते च षड्रसाः पाञ्चभौतिका एव। 'सर्वं द्रव्यं पाञ्चभौतिकम्' इत्यनेन सूत्रेण तथा द्रव्याधिष्ठानत्वाद् रसानाम्। यतः द्रव्यमेव रसादीनां श्रेष्ठम्, ते हि तदाश्रयाः। तत्तु द्रव्यं पञ्चभूतात्मकमपि पृथिव्यधिष्ठानं—पृथिवीभूताधारम्, अम्बुयोनि सलिलकारणम्। ताभ्यामाधारकारणाभ्यां निर्वृत्तं भवति। अग्निपवननभसां भूतत्रयाणां तु तस्य द्रव्यस्य विशेषत्वे प्रत्ययत्वम्। अतः आधारकारणत्वेन सर्वेष्वेव कार्यद्रव्येषु पृथिवीसलिलात्मकस्य भूतद्वितीयस्य आधिक्येन अस्तित्वं वर्तते। ताभ्यां विना तस्योत्पत्तिर्नैव भवति। पृथिवीसलिलात्मकौ भूतौ मूर्तावेव। अतः सर्वमपि नाभसं वा वायवीयं वा तैजसं वा आप्यं वा पार्थिवं वा विशेषत्वेन प्रत्ययितं द्रव्यं पृथिवीसलिलभूताधारकारणवत्वान्मूर्तमेव। तथैव द्रव्याधिष्ठानानां पाञ्चभौतिकानामपि सतां षड्रसानां क्रमात् पृथिवीसलिलाभ्यां मधुरः, तेजःपृथिवीभ्यां अम्लः, अम्ब्वग्निभ्यां लवणः, आकाशवायुभ्यां तिक्तः, अग्निवायुभ्यां कटुकः, क्ष्मानिलाभ्यां कषायः इति उत्पत्तिर्भवति। एतेभ्य एव षड्रसेभ्यो द्रव्याश्रितेभ्यो रसनार्थेभ्यो यथा वातादीनामुत्पत्तिर्भवति तत्तु प्राक् प्रपञ्चितमेव। तथैव एतेभ्य एव मधुरादिभ्यः षड्सेभ्यः क्रमाद् मधुरलवणौ रसौ मधुरत्वेन, अम्लो रसः अम्लत्वेन, तिक्तकटुकषायरसाः कटुकत्वेन, मूर्तद्रवद्रव्यरूपत्वेन परिणतेभ्यः कफपित्तवातानां मूर्तानामेव उत्पत्तिः युक्तैव। "कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति तु तयोर्मूर्तत्वं दृश्यत्वं तु स्पष्टमेव। शारीरवातस्य तु तिक्तकटुकषायरसरूपद्रव्येभ्यः (रसात्मकत्वात् द्रवरूपेभ्यो द्रव्यात्मकत्वात् पृथिवीसलिलाधारकारणेभ्यो मूर्तेभ्यः) उत्पत्तिमत्वाद् बाह्यवाताद

विभिन्नत्वं द्योत्यते एव । अतः इमे त्रयोऽपि वातपित्त-कफाः आहारपरिणामावस्थायां तथा आहारपरि-परिणामजन्यावस्थायां दृश्या मूर्ता इति अस्माभि-रुच्यते । तथा आधुनिकन्यायशास्त्रे नैयायिकाः पाञ्चभौतिकस्य वाह्यवायोरपि मूर्तत्वं समामनन्त्येव । मूर्तानि पञ्च । पृथ्वी आपः तेजः वायुः मनश्च । (न्या० बो० १ पृ० ३) त्वक्प्रत्यक्षं च वायुं स्पृशामीति अनुभवात् । अतः शारीरो वायुरपि आहारस्य उक्तपूर्वावस्थयोः दृश्यः मूर्त इति तु स्पष्टमेव । अत एव असर्वगतपरिमाणं मूर्तिरिति चक्रेण व्याख्यातं विमानस्थानटीकायाम् । अत एव च अमूर्तोऽकठिन इति च व्याख्यां चक्रुः इन्दुटीकाकाराः संग्रहटीकायाम् । तथा च भूतसर्जनक्रमे आकाशाद् वायुः, वायोरग्निः, अग्नेः आपः, अद्भ्यः पृथिवीति क्रमो वर्तते । भूतस-र्गलये तु पूर्वं पूर्वं भूतं परे परे लयमेतीति सिद्धान्तः । न च बाह्यवायोः पृथिवीसलिलाभ्यामुत्पत्तिः गदिता कुत्रापि । आयुर्वेदीयः शारीरो वायुस्तु पृथिवीजलमात्र-वृत्तिभ्यः कटुकरसविपाकत्वेन परिणतेभ्यः, आकाशवायू अग्निवायू ? इत्येतेभ्यः पृथिव्यधिष्ठानसलिलकारणेभ्यः समुद्भूतेभ्यः तिक्तकटुकषायरसेभ्यः नित्यं निष्पन्नो भवतीति पूर्वमुक्तमेव । अतः शारीरो वायुः किंचिद्द्र-व्ययुतः पृथिव्यग्निनभोवाय्वंशपरिणामविशिष्ट एव आहारपाक—आहारजन्यावस्थायामवश्यं भवितुमर्ह-तीति तस्य भिन्नत्वमेव बाह्यवायोः । अत एव तस्य दृश्यत्वं परिणामवत्वं मूर्तत्वं च अधिकांशेन संभावनीयम् । यद्यपि अस्माभिः वातस्य दृश्यत्वसिद्धये यथामति प्रपञ्चः कृतः तथापि 'बुद्धेः फलमनाग्रहः' इति न्यायेन अस्मिन् विषये सर्वविद्वज्जनमतवैपरीत्यं यदि दृश्येत असाधु एतन्मतमिति वा शास्त्रविरुद्धं भवेत् चेन् नास्माकं आग्रहः इति तु स्पष्टतया लिखामः ।

एतेषां च त्रयाणां दोषाणां समधातुप्रविभक्तावस्थायां धातूनां साम्यावस्थात्वेन, तेषु धातुषु च दोषाणां नित्यानुशयितत्वात् कार्यानुमेयत्वमेव, तदानीं तेषां सूक्ष्मस्वरूपत्वेन धातुसहचरितत्वात् न पार्थक्येन अभिव्यक्तिर्भवति अत एव तेषां तत्र सौक्ष्म्यमपृथक्त्वं कार्यानुमेयत्वं व्यवस्थितमेव ।

एतेषां त्रिदोषाणां तथा सप्तधातूनां मलानामिव स्थूलशरीरत्रितयमूलत्वम्, न सूक्ष्मादिशरीरत्रितयमूलत्वम् । केचन ब्रुवते पञ्चतन्मात्रावस्थायामपि वातादीनां स्थिति-र्विद्यते एव इति तत्तु न सम्यक् । भूतसर्जनक्रमे "मूलं प्रकृतिः १ महदादिप्रकृतिविकृतिः ७ षोडशकश्च १६ विकारः" इत्येव क्रमः स्वीकृतः आचार्यैः । यथा सर्वभूतानां कारणमकारणं सत्वरजस्तमोलक्षणमष्टलक्षणमखिलस्य जगतः सम्भवहेतुः अव्यक्तं नाम । तस्माद् अव्यक्तात् महानुत्पद्यते तल्लिङ्ग एव, तल्लिङ्गाच्च महतः तल्लक्षण एव अहंकार उत्पद्यते । स तु त्रिविधो वैकारिकः तैजसो भूतादिरिति । तत्र वैकारिकतैजससहायात् अहंकारात् तल्लक्षणान्येव एकादशेन्द्रियाणि उत्पद्यन्ते । भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राणि उत्पद्यन्ते । तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः ( तन्मात्राणि तु अविशेषाणि, यतस्तानि पुनरनुभवयोग्यैः सुखदुःखादिभिर्विशेष्टुं न शक्यन्ते सूक्ष्मत्वात् ) तेभ्यो ( विशेषेभ्यः एकोत्तरपरिवृद्ध्या ) भूतानि (व्योमानिलानलजलोर्व्यः) (सु० शा० प्र० अ० सू० ४ ) सर्व एव अचेतनः एष वर्गः पुरुषः पञ्चविंशतितम : कार्यकारणसंयुक्तश्चेतयिता भवति । ( सु० शा० सू० ८ ) तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् । तैश्च तल्लक्षणः भूतग्रामः कृत्स्नः अजन्यत । अनेन क्रमेण १ मूलप्रकृतिः २ महान् ३ अहंकारः ४ पञ्च तन्मात्राणि, ५ पञ्च विषयाः, ६ पञ्च

महाभूतानि, ७ सर्वो भूतग्रामः ( स्थावरजङ्गमात्मकः ) तस्मिन् भूतग्रामे पुरुषाणामसर्वगतानां लोहितरेतः-सन्निपाते व्यक्तत्वं, लोहितरेतस्त्वपरिणतौ अन्नस्यावश्यकत्वम्, तस्य च विपरिणमनार्थं वातपित्तश्लेष्मणां तेनैवान्नेन समुद्भवः, तेन च धातूत्पादः, तथा च मलानां संभूतिः, अत एव दोषधातुमलमूलं हि शरीरम्। तत्तु स्थूलशरीरमेव, सूक्ष्मशरीरत्रितयेषु नान्नस्यावश्यकता, न च दोषाणां धातूनां विडादिमलानां च। अतः पञ्चतन्मात्रावस्थात्वेन वा पञ्चमहाभूतत्वेन वा त्रिदोषास्तित्वं मन्यमानानां मतं निर्मूलमेवेति। अत एव अस्माभिः स्थूलशरीरमूलानीति त्रिदोषवर्णने पूर्वमुक्तम्।

१८ 'परिणामवन्ति' इति तु विशेषणं दत्तम्—वातपित्तकफानामाहारपरिणामावस्थायां तथा आहारपरिणामजन्यावस्थायां परिमाणं विद्यते एव। तत्तु कियदिति नैव निर्णयेन निश्चेतुं शक्यते कैश्चित्। कैश्चित्तु तेषां इयत्परिमाणवत्ता इति निश्चेतुं अशक्यत्वेऽपि सामान्यतया परिमाणं दत्तम् "त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्य, आहारमुपयुञ्जानः तद्यथैकमवकाशांशं मूर्तानामाहारविकाराणाम्, एकं द्रवाणाम्, एकं पुनर्वातपित्तश्लेष्मणाम्" ( चरके विमानस्थानम्, अ० २, सू० ३ ) इत्यनेन परिणामवतां वातपित्तश्लेष्मणामाहारपरिणामकाले उत्पत्तिमतां कोष्ठे समापनार्थमेकस्यावकाशस्य रक्षणमवश्यं कार्यम् इति शास्त्रकृतामभिप्रायः। एतेषां पुनः वातपित्तश्लेष्मणां परिणामवतामपि तथैव च निर्भ्रान्ततया परिणामवतामपि रसादिसप्तधातूनां विडादिमलानां च सुश्रुताचार्यैः—"वैलक्षण्यात् शरीराणामस्थायित्वात् तथैव च। दोषधातुमलादीनां परिमाणं न विद्यते" इति उक्तवन्तः। अत्र तु डल्हणाचार्याः—कुतः पुनः पलादिमानेन दोषादीनां प्रमाणं न निर्दिष्टमित्याह—वैलक्षण्यादित्यादि—वैलक्षण्यात् विसदृशत्वात्, विसदृशत्वं चात्र वातादिप्रकृतिरसरक्तादिभारसहनदीर्घह्रस्वादिकायभेदेन। अस्थायित्वात् तथैवेति, अनवस्थितत्वात्। अनवस्थितत्वं च द्विविधेऽपि काले नित्यगे आवस्थिकेऽपि च। तत्र नित्यगे प्रातः श्लेष्मोपचीयते, मध्याह्ने पित्तमित्यादि प्रत्यहमाह्निकचयादिभेदेन, तथा हेमन्ते श्लेष्मोपचीयते, ग्रीष्मे वायुरित्यादि आर्तवचयादिभेदेन। तथा आवस्थिकेऽपि काले श्लेष्माभिवर्धते, तथा बाल्ये शुक्राल्पत्वम्, कन्यानामार्तवस्तन्याभावः, युवसु पित्तमुपचीयते, वृद्धेषु वायुरित्यादिना परिमाणमिति सर्वतो मानं न विद्यते येन कस्यचिदेव मानं कर्तुं शक्यते न सर्वत इत्यर्थः ( सुश्रुतसूत्रस्थानम्, अ० १६, सू० ४३ ) इत्यनेन तेषां परिमाणमेव न विद्यते इति न, ततोपि कुडवप्रस्थादीयत्तापरिमाणं न वक्तुं शक्यते, सत्यपि तेषां परिमाणवत्त्वे इति तात्पर्यार्थः, अन्यथा अनवस्थाप्रसङ्गः। मुनिस्तु—"यत्तु अञ्जलिसंख्येयं तदुपदेक्ष्यामः—तत् परं प्रमाणमभिज्ञेयम्, तच्च वृद्धिह्रासयोगि, तर्क्यमेव, तद्यथा—दशोदकस्य अञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन, नवाञ्जलयः पूर्वस्याहारपरिणामधातोः, यं तं रस इति आचक्षते, अष्टौ शोणितस्य, सप्त पुरीषस्य, षट् श्लेष्मणः, पञ्च पित्तस्य, चत्वारो मूत्रस्य, त्रयो वसायाः, द्वौ मेदसः, एको मज्जायाः, मस्तिष्कस्य अर्धाञ्जलिः, शुक्रस्य तावदेव प्रमाणम्, तावदेव श्लेष्मणश्चौजस इत्येतत् शरीरतत्त्वमुक्तम् ( शारीरस्थानम्, अ० ७, सू० १४ ) संग्रहकारास्तु इत्येवमेवोक्त्वा अग्रे "समधातोः परिमाणमिदम्, अतो वृद्धिक्षयौ यथास्वं लक्षणैर्विभावयेत्, अपरांश्च अपरिसंख्यातान् मूर्ताऽमूर्तान्भावान्, तद्यथा मांसकर्णादिमलान् वायुबुद्धिस्मृत्यादींश्च"।

यद्यपि वायोः मानं तस्य अकठिनत्वात् मातुं नैव

शक्यतेऽति, तथापि जैनग्रन्थे 'वातार्बुदपलं ज्ञेयमिति' शारीरवायोः मानमुक्तमेव। इदं च जैनग्रन्थीयं वचनं पनवेलग्रामे अधुनैव सञ्जातायां त्रिदोपचर्चापरिषदि, पण्डितप्रवरैः गोड्बोलेइत्युपाह्वैः गोपालशास्त्रिभिः स्वीये भाषणे उदाहृतम्। इत्येतैर्वचनैः परिमाणवन्त एव वातपित्तश्लेष्माणः धातुमलवदिति। "इयं शरीरावयवसंख्या यथास्थूलभेदेन अवयवानां निर्दिष्टा"। तेन ये भावाः स्थूलाः, तेषामेव परिमाणं शक्यं तदेवोक्तमित्याशयः। "यत्तु सूक्ष्ममतीन्द्रियं वा, तत्परिसङ्ख्यातुं नितरामेव दुष्करं भवतीति चरकवचनेन, चक्रदत्तव्याख्यया च वातपित्तश्लेष्माणः सर्वथा परमसूक्ष्माः परमाणुरूपाः कार्यानुमेयाः अदृश्याः" इत्येतन्मतं प्रत्यक्षानुमानप्रमाणशून्यमागमविरुद्धमिति तु स्पष्टमेव।

१९ पारिशेष्याद् वातपित्तश्लेष्मणां द्रव्यत्वसिद्धिः क्रियते। वातपित्तश्लेष्माणः द्रव्याणि, यत्राश्रिताः कर्मगुणाः यत् समवायिकारणं तद् द्रव्यम्—इति आचार्यैः द्रव्यस्य लक्षणं दत्तम्। अनेन लक्षणेन वातपित्तश्लेष्माणः गुरुमन्दहिमस्निग्धादियथायथगुणोपेताः रूक्षलघ्वादियथायथरूपोपेताः उच्छ्वासनिश्वासादियथायथकर्मोपेताः गुणकर्मसमवेताः विद्यन्ते। अतस्ते द्रव्याण्येव।

पृथ्व्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि "खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः" इत्यनेन पञ्चमहाभूतानां द्रव्यत्वम्। तेभ्यो विपरिणमितेभ्यो वातपित्तकफानामुत्पत्तिः। यथा वाय्वाकाशधातुभ्यां वायुः, आग्नेयं पित्तम्, अम्भः—पृथिवीभ्यां श्लेष्मा। कपिलबलस्तु "कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः, कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः" इति द्रव्याश्रितरसरूपेणैव तन्निर्दिष्टवान्। अत्र अनुमानतः इति पदं वायुपरमेव। सुश्रुतस्तु—"तदेवं एतानि वाय्वादिरूप—(गुण) कर्माण्यवहितः सम्यगुपलक्षयेत्। आगमप्रत्यक्षानुमानैः" इति व्याचष्टे। अतः कारणद्रव्यरूपपञ्चभूतेभ्यः परिणमितानां वायुपित्तकफानां कार्यरूपाणां द्रव्यत्वमेव। तथा च 'खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः' इति कारणद्रव्यमभिधाय कार्यभूतानामपि सर्वभावानां द्रव्यत्वेन व्यपदेशं कृत्वा चेतनाऽचेतनत्वविभागमाह "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्" इति। सुश्रुतस्तु—"अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति। ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्यते। तुल्यवीर्ये उभे ह्येते रसतो द्रव्यतस्तथा" इत्यनेन पित्तं तु साक्षादेव द्रव्यत्वेन वर्णितवान्।

अथ च कार्यस्य कारणानि तु द्रव्याणि, परं तेभ्य उत्पन्नं कार्यं तु न द्रव्यं किन्तु पदार्थः इति तु विचित्रा अर्थशून्या विचारपद्धतिः। अतो वातपित्तकफाः द्रव्याण्येव। तेषां पदार्थत्वं तु सार्वजनीनम्, इतरसामान्यं विद्यते एव। यथा द्रव्यगुणकर्मसामान्यसमवायाभावानां पदार्थत्वम्। सांख्यानां पञ्चविंशतिपदार्थत्वम्। यस्मिन् यस्मिन् भावे जातित्वाकृतित्वव्यक्तित्वविशिष्टत्वं वर्तते, स स पदार्थ एव। पदार्थः—पदाभिधेयः स च, जात्याकृतिव्यक्तयः पदार्थः। तथा च 'अनेन लक्षणेन वातः पित्तकफौ, कफः पित्तवातौ, पित्तं वातकफौ भवेत् पदार्थत्वात्, इत्यनेन सर्वेष्वपि पदार्थेषु वातपित्तकफत्वं प्रसज्येत। यथा घटोऽपि पदार्थः, वातोऽपि पदार्थः, पित्तमपि पदार्थः कफोऽपि तथा। तथैव वातपित्तकफेषु घटत्वमापद्येत। पदार्थत्वात्। अतः "वातपित्तकफाः न द्रव्याणि किन्तु पदार्थाः" इत्येवं लक्षणं सर्वथा अलक्षणमेव, अतिव्याप्तत्वात्। तथा च शास्त्रकारैः अनुक्तत्वात्। सुश्रुताचार्या अपि "योऽर्थो-

भिहितः सूत्रे पदे वा स पदार्थः, अपरिमिताश्च पदार्थाः, इति पदार्थानामनेकत्वमुक्तवन्तः ( सु० ३ अ० ६५ सू० ११ )

ये च "अन्यशास्त्राऽसामान्या स्वसंज्ञा" इत्यनेन वातपित्तकफानामन्यशास्त्राऽसाधारणी पदार्थेति संज्ञा विद्यते इति वदन्ति, तैरायुर्वेदागमेषु वातपित्तकफाना-मेव अनन्यसाधारणी पदार्थेति संज्ञा दत्तेति साधनी-यम्। आह्वानं क्रियतेऽस्माभिः, भिषजां तु द्रव्यसंज्ञा "रसोगुणस्तथा वीर्यं विपाकः शक्तिरेव च। पञ्चानां यः समाहारः तद् द्रव्यमिति कोर्त्यते" (वाग्भटः) किञ्चिद् द्रव्यं रसेन कुरुते कर्म, पाकेन च अपरम्, गुणान्तरेण वीर्येण प्रभावेणैव किंचन ॥ पृथक्त्वद-र्शिनामेष वादिनां वादसंग्रहः। चतुर्णामपि सामग्र्यम्, ( अत्र द्रव्ये चतुर्णाम् रसगुणविपाकवीर्याणाम् ) इच्छन्त्यत्र विपश्चितः॥ (सुश्रुत ४० सूत्रस्थानम् १३ सूत्रम् ) इत्यादिभिर्वचनैश्च न वातपित्तकफानां केवलं पदार्थत्वम्, अपि तु द्रव्यत्वम् न केवलं द्रव्यत्वमेव अपि तु दूषणस्वभावविशिष्टत्वम्। अत एव अस्माभिः या प्रब-न्धप्रारम्भे त्रिदोषा नाम वातपित्तकफाः, त्रीणि नित्यो-त्पत्तिमन्ति, वृद्धिक्षयशीलात्मकानि, प्रत्यक्षाणि, प्रत्यक्षा-दिप्रमाणसिद्धानि, दूषणस्वभावविशिष्टानि, आहारप-रिणामावस्थायाम् तथा आहारपरिणामजन्यावस्थायां दृश्यानि, पाञ्चभौतिकानि, समधातुप्रविभक्तावस्थायां कार्यानुमेयानि, स्थूलशरीरमूलशरीरमूलानि, परिणा-मवन्ति द्रव्याणि, इति आयुर्वेदसिद्धान्तो दत्तः, स एव शास्त्रप्रत्यक्षानुमानप्रमाणैः युक्तः सिद्धः इति एता-वता विवेचनेन विदुषां दृक्पथमागच्छेदेव। येषां तु मतं वातपित्तकफाः परमाणवः परमोच्चशक्तिमन्तः इति उर्वरितं विद्यते तन्मतविषये इत्थं लिखामः—यत् सर्वा-ण्येव स्थूलादिगुणयुक्तानि कारणद्रव्याणि कार्यद्रव्या-णि च मूलतः सूक्ष्मपरमाणुरूपाण्येव, तथापि तान्येव स्थूलत्वेन परिणतानि भवन्ति। यानि तु शक्यन्ते द्रष्टुं वा मातुं वा तानि दृश्यन्ते मीयन्ते च। तथा च तेषां यानि परमाणुस्वरूपेण कार्याणि भवन्ति स्थूलस्व-रूपेण परिणतानां वा यानि भवन्ति कार्याणि तेषामपि पृथक्त्वेन परिगणनं वैशिष्ट्यं वर्तते एव। यदा यस्मिन् कार्ये वा स्वरूपे ज्ञातव्ये तेषां तदा तस्य कार्यस्य वा स्वरूपस्य प्रसंगवशाद् वर्णनं शास्त्रकारैः क्रियते एव। अधिकरणवैशेष्यात्। यथा स्थूलत्वेन ज्ञानविषये—ततो देहं सप्तरात्राद्उशीरवालवेणुवल्कल-कूर्चानामन्यतमेन शनैः शनैः विघर्षयन् त्वगादीन् सर्वा-नेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्च-क्षुषा। सजीवशरीरे दोषधातुमलरूपाणां साम्यवैष-म्यावस्था प्रत्यक्षानुमानलक्षणैः। सूक्ष्माऽलक्ष्यवि-षये तु "न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः। दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुभिरेव च॥" तथा च आयुर्वेदशास्त्रेषु सिद्धान्तेषु, असर्वगताः क्षेत्रज्ञाश्च नित्याश्च तिर्यग्योनिमानुषदेवेषु संचरन्ति धर्माधर्म-निमित्तम्, ते एते अनुमानग्राह्याः परमसूक्ष्माश्चेतनाव-न्तः शाश्वता लोहितरेतसः सन्निपातेषु अभिव्यज्यन्ते। एतेन सर्वदैव पुरुषाणां परमसूक्ष्मत्वम्, अन्येषां तु सूक्ष्मत्वं स्थूलत्वं च यथावस्थं विज्ञेयम्। चरके तु — "इति शरीरावयवसंख्या यथा स्थूलभेदेन अवयवान्तं निर्दिष्टा" इत्यन्तं सर्वोपि शरीरसंख्या-शारीराध्यायः शरीरसंख्यावयवशः शरीरं विभज्य शरीरसंख्यानप्रमाणज्ञानहेतुं पृष्टवते अग्निवेशाय भग-वान् आत्रेयः कथयामास स्थूलत्वेन दृश्यत्वेन च। अन्ततः एतेषामेव सूक्ष्मांशज्ञानहेतुत्वेन शरीरावयवास्तु परमाणुभेदेन अपरिसंख्येयाः भवन्ति अतिबहुत्वात् अतिसौक्ष्म्यात् अतीन्द्रियत्वाच्च इत्यु-

वाच। ( इत्यनेन एतेषां परमाणूनामिन्द्रियप्रत्यक्षत्वमपि नास्तीति स्पष्टमेव। अतीन्द्रियत्वाच्च तेषाम्। एते च परमाणवः चरकीयाः सौश्रुतीयाश्च असर्वगतपरमसूक्ष्माः नित्याश्चेतनावन्तः क्षेत्रज्ञाः समरूपा एव, अतीन्द्रियत्वात् नित्यत्वात् परमसूक्ष्मत्वात् अतिबद्धत्वात् धर्माधर्मकर्मनिमित्तवत्वात् ) अतः पण्डितैः सर्वेषामेव कारणकार्यद्रव्याणां स्थूलसूक्ष्मसूक्ष्मतरस्वरूपाणि तेषां स्थूलसूक्ष्मसूक्ष्मतरकार्याणि च विभागशः पार्थक्येन च विज्ञेयानि, विषयकर्मकार्यपरिणामफलभेदज्ञानाय नैव सर्वेषां सर्वदा एकस्मिन्नेन विषये सन्निपातः एकशेषो वा कर्तव्यः। कुतश्चेत् अज्ञानराशेः प्रादुर्भावो भवेत् संशयात्मता च। अत एव अस्माभिर्विशेषतो वातपित्तकफानामाहारपरिणामावस्थायाम् तथा च आहारपरिणामजन्यावस्थायां दृश्यत्वं मूर्तत्वं परिणामवत्वं नित्योत्पत्तिमत्वं वर्णितम्। -

अथ च परमोच्चशक्तिमत्वं केवलं तैः वातपित्तकफेषु अवस्थाप्यते। अस्माकं तु अयमाशयः—सर्वमपि कारणद्रव्यं कार्यं वा शक्तिमदेव। तथा च परमोच्चशक्तिस्तावन् तदा स्वीक्रियते यदाऽनेकानि द्रव्याणि एककार्यकराण्येव गृह्यन्ते तथा तेषु तत्कार्यकरणे यस्य द्रव्यस्य कालतः बलतः प्रमाणतः सामर्थ्यमधिकं दृष्टं भवेत् तदा तेषु द्रव्येषु तद् द्रव्यं परमोच्चशक्तिमदिति गृहीतं भवेत्। अनेकेषु धावमानेषु योऽश्वः कालतो वेगतः प्रमाणतः शीघ्रं धावमानो दृश्येत तदा सोऽश्वः तेषु तेषु अश्वेषु परमोच्चशक्तिसम्पन्नः इति गणितः स्यात्। तथा दोषधातुमलानां नैव स्थितिः। दोषधातुमलानां द्रव्यतो भिन्ना जातिस्तथा कार्यतोऽपि। सामान्यतया "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्।" इति वचनेन गमनागमनक्रियायां सर्वेष्वेव दोषधातुमलेषु गतिमत्वाद् वायोः श्रैष्ठ्यम्। परन्तु तत् श्रैष्ठ्यं गमनविषयकमेव। क्लेदनस्नेहनश्लेष्मणादिकार्ये कफस्य परमोच्चशक्तिमत्वम् न तथा इतरेषां सर्वेषाम्। पाचनदर्शनोष्मादिविषये पित्तं सर्वोच्चशक्तिमत् न तथा सर्वेऽपि। प्रीणनविषये रसस्यैव परमोच्चशक्तिमत्वं न सर्वेषाम्। जीवनविषये रक्तस्य, लेपनविषये मांसस्य, स्नेहनविषये मेदसः, धारणविषये अस्थ्नाम्, पूरणविषये मज्ज्नः, गर्भोत्पादविषये शुक्रस्य परमोच्चशक्तित्वं वर्तते एव, न तत्र केषाञ्चदपि अन्येषाम्। तथैव अवष्टम्भविषये पुरीषस्य, क्लेदवाहनविषये मूत्रस्य, क्लेदविधृतिविषये स्वेदस्य परमोच्चशक्तिमत्वं वर्तते एव। नैव प्रत्येकशो विभक्तं कर्म विहाय तत्कर्मकर्तारमन्यः कर्तुं शक्तो भवति। अतः सर्वेऽपि स्वे स्वे कर्मणि परमोच्चशक्तिमन्तः एव। अतः सर्वेऽपि दोषधातुमलाः विभिन्नकार्यत्वात् स्वे स्वे कर्मणि परमोच्चशक्तिमन्तः समकक्षीया एव। अत एव देहस्य लक्षणम् "दोषधातुमलमूलं हि शरीरम्" इति कृतम्। धातूनां मलानां च यत् कर्म तदेव यदि धातुमलान् विहाय केवलं दोषाः कुर्युः तदा ते सर्वेभ्यः परमोच्चशक्तिमन्तो भवेयुः। इति तु न कदापि शक्यम्। अतस्ते एव परमोच्चशक्तिसम्पन्नाः इति तु वर्णनं निर्मूलमेव। एतावता विवेचनेन १ वातादयस्त्रयो न काल्पनिकाः वास्तवत्वात् २ न च भूतपञ्चतन्मात्रावस्थाः ३ न च केवलं पञ्चमहाभूतानि ४ न च काचिददृश्या शक्तिः दृश्यत्वात्, प्रत्यक्षत्वात्, द्रव्यत्वात्। शक्तिर्नाम न किमपि द्रव्यम्, किन्तु कारणनिष्ठः कार्योत्पादनयोग्यो धर्मविशेषः इति व्याख्यया पदार्थधर्मवत्वं शक्तिः।

न च सत्वरजस्तमसामेवान्यः प्रकारः। सत्वरजस्तमांसि गुणाः न द्रव्याणि, प्रकृतेः रूपं तमोगुणयुक्तः कफः न केवलं तमः। सत्वगुणयुक्तं पित्तम्, न केव-

लमेव सत्वम् । रजोगुणयुक्तः वातः, न केवलं रजः । प्रकृतिस्तु त्रिगुणात्मिका यद्यपि तथापि गुणगुणिनोरभेदात् । तथा च त्रिगुणानां साम्यावस्थया एकत्र सन्निपतनं प्रकृतित्वम्, पार्थक्येन गुणत्वमेव । अतस्तानि गुणा एव वातपित्तकफानामपि सत्वरजस्तमांसि पार्थक्येन गुणा एव । वातादयस्तु द्रव्यम् । यत्तु वातपित्तकफाः परमोच्चशक्तिमन्तः परमसूक्ष्माः अदृश्याः अनुमेयाः सप्तधात्वाश्रिताः अदृश्याः पदार्थाः न द्रव्याणि इति मतम्, तत्तु सर्वथा निर्मूलमेवेति प्रपञ्चितमेव विस्तरशः ।

भवतु । अस्माभिः स्वकीयाल्पबुद्ध्या यद्विज्ञातं त्रिदोषविज्ञानम् तदेतावत्पर्यन्तं नातिसंक्षेपविस्तरत्वेन प्रपञ्चितम् । तत् सशास्त्रमशास्त्रं वेति सुधीभिरवलोकनीयम् । केवलमस्माभिस्तु परमदुर्गेऽस्मिन् विषये तत्वजिज्ञासया अन्तेवासित्वेनैव प्रवेशः कृतः । स च प्रयत्नः परमपण्डितेभ्यः शान्तेभ्यो दान्तेभ्यः आयुर्वेदपारावारपारीणेभ्यो विद्यायशश्चारित्र्यतपश्शमदमादिसंपन्नेभ्यः पूज्येभ्यः आसेतुहिमाचलप्रथितेभ्यः आयुर्वेदाध्ययनाध्यापनानुष्ठानवीतायुर्भ्यः ऋषिकल्पेभ्यः साधुभ्यः जयपुरराजधानीवास्तव्येभ्यः लक्ष्मीरामस्वामिमहाशयेभ्यः सशताभिवादनं सनम्रं सप्रेम च समर्प्यते—अस्मिन् महनीये तेषां महाभागानां संमानार्थम् समुद्यते "संस्कृतरत्नाकरविशेषांकन" समये ।

---

# ज्वरदर्प्पाऽपसर्प्पणम् ।

(निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री । 'मुलतान'स्थ—स० ध० संस्कृतकालेजाऽध्यापकः)

कस्यचन मनुतनुजनुषो हृदि निषण्ण × प्रकुपितो ज्वर आत्मानं कथञ्चिदपसिसारयिषुं तदर्थञ्चोद्यच्छमानम्पुरुषं सम्बोध्य ब्रूते—

ज्वरः—हन्त ! पुरुषाऽपसद ! त्वम्मामपसारयितुञ्चेष्टसे ! अये वैधेय ! न जानीषे, अहं हि बलाऽखर्वगर्व्वपरीतानपि—क्षणेनैव निर्ब्बलान् विदधे । ते क्रन्दन्त एव तिष्ठन्ति । अहं हि स्थौल्योपहसितगजेन्द्रानपि क्षणं × क्रशिमानमानयामि । निजधैर्य्याऽवधीरितसानुमत्स्थैर्य्याणामपि मनुजनुषां धैर्य्यं ह्रसिमानमानयामि; तेऽशान्त्या विलपन्ति । अहं वैष्णवशिरोमणीनामपि मूर्त्तशौचानामपि वेदविदां विदां शुद्धतां भसिततोऽधिकगौरवाऽऽवहां न स्थापयामि । अरे ! ये प्रतिक्षणं—स्नानादिना स्वशोधनङ्कुर्वाणास्तिष्ठन्ति; विप्रकृष्टप्रदेशम्प्रगम्य मलादित्यागं विदधाना भवन्ति; तेषां वासांसि मलादिपूर्णानि घटयामि; तथाऽपि ते स्नानं स्मरन्त्येव न । धर्म्मशास्त्राणि तदा विस्मरन्तीव । बहुकृत्वः* ईदृशोपदेशान् ददतोऽपि 'परोपदेशे पाण्डित्यं सर्व्वेषां

× क्रशिमानम् । कृशस्य भावम् । 'पृथ्वादिभ्य इमनिज्वा' । 'टेः' । 'र ऋतो हलादेर्लघोः' । 'अकथितञ्च' इति नीधातुयोगे कर्म्मता ।

*बहुकृत्वः । 'बहुगणवतुडति संख्या' इति संख्यात्वम् । 'संख्यायाः क्रियाऽभ्यावृत्तिगणनेच कृत्वसुच्'।

सुकरं नृणाम्' इति चरितार्थयन्ति । उत्तममस्तिष्काऽवगणितसरस्वतीकानामपि मस्तिष्कं विह्वलयामि । आत्मधिषणाऽवज्ञातधिषण †धिषणानामपि धिषणां मुष्णामि, ते तदाऽत्यर्थमुद्विग्ना भवन्ति । कामाऽभिराममन्यानपि कामकामान् इत्थं निष्कामाननुतिष्ठामि—यत्ते तदा सुन्दरीसुन्दररूपमपि हालाहलं विदन्ति । अहमितस्ततः स्वच्छन्दचारिणोऽपि, अटाट्यापरानपि, सत्वरभ्रमणाऽवमतवात्यानपि इत्थं निस्तब्धान्—प्रणयामि, यत्ते गन्तुं प्रार्थिता अपि, अनुनीता अपि, वसुराशिविश्राणनेन पर्य्यटनाय प्रलोभिता अपि, पदमेकमपि गन्तुं न प्रभवन्ति । एतत्तु किं—तदा मञ्चके तेषां स्वपार्श्वपरिवर्त्तनमपि महाभारकारि । तदा कारागारमिव प्रतीयमानमपि स्वसद्म, तत्राऽपि खट्वां ते न जिहासन्ति । मन्निदानादेव दिनप्रकाशोऽपि अप्रकाशो भवति तत्कृते । मितभाषिताविश्रुतानपि प्रलापिनो वितनोमि । वाग्ग्मिनामपि ‡ कण्ठं कुण्ठयामि । भीष्मे ग्रीष्मेऽपि ईदृशं शीतमुत्पादयामि पुरुषवपुषि; यन्नीशार—( रजाई ) पञ्चकमपि तदपसारयितुं नेष्टे । ईदृक्छक्तिमन्तं यमराजसहायं मां कोऽतिशय्य वर्त्तेत । भवानपि मत्कारणादेव जूर्तिजूतिसमभिभूत × खलु भृशकृशीभूतः । भवान् मां कथमपनेतुं क्षमः । तव वराकस्य तु का कथा; प्रजापतिपतिरपि मामिकामसाधारणीं क्षमताम्मनुते । मर्त्यलोके मम राज्यं विलोक्याऽद्यत्वे साकारत्वेन नाजिगमिषतीव; तेनैव द्यामद्यापि न त्यजति ॥

( अत्रान्तरे तत्पुरुषसम्बन्धिद्वाराऽऽहूत आयुर्व्वेदविशारदो वैद्य एक × प्रविशति )

†धिषणः—बृहस्पतिः । धिषणा—बुद्धिः ।

‡वाग्ग्मिनाम् । 'वाचो ग्मिनिः' । 'चोः कुः' । जश्त्वञ्च । तेन गकारद्वयवान् पाठः । एकगकारवन्तं न जाने कथं साधयन्ति—वाग्मीति ।

पुरुषः—( सम्बन्धिनम्प्रति ) अयि भोः ! भवता क एष आहूतः ? अहन्तु ज्वरस्य शक्तिं तन्मुखाच्छ्रावं श्रावं तन्निरासे निराशोऽस्मि सँवृत्तः । निश्चैषश्च-यदयमदयो न त्यक्ष्यति माम् ।

सम्बन्धी—नैवन्ताम्यतु भवान् । अयं हि—

"नूनं निर्दयराडयं वत ! यतः सृष्टौ न नः सङ्क्रमं
सम्मृष्यत्यथ सञ्जिहीर्षति रुजाञ्जातिं समस्तां हहा !
एवञ्चौषधिरूपरोगवलितं वंशं विधत्तोऽत्र नः
श्रुत्वैवं गद-यातनां स्मयमयः श्रीवैद्यराड् वर्त्तते" १

किञ्च—

'सृष्ट्याः स्वस्य गदेन सर्व्वकदनं प्रेक्ष्य प्रजासृड् विधिर्मोघां स्वामवसाय निर्म्मितिमसौ स्वान्ते विषण्णोजनि
क्रन्दन् विष्णुमुपागमद् द्रुततया पर्य्यन्वयुङ्क्ताऽमुकं
यद् विष्णो! गदनाशितां कथममूं सृष्टिं त्वकं पास्यसि २
इत्युक्तो विधिनादिशत् प्रकुपितो विष्णुस्स जिष्णुं द्रुतं
नासत्यौ भिषजौ दिवस्तव सदाज्ञापालकौ स्तोऽत्र यौ
एकं शीघ्रतया तयो × प्रहिणु भोस्त्वम्मर्त्यलोके ध्रुवम्
एकोऽलं त्रिदिवाय, येन गदतो भीतिर्नृणां शाम्यतु ३
इत्थम्पर्य्यनुयुक्तविष्णुकथितस्वाराट्परिप्रेषितः
स्ववैद्यान्यतरो मनुष्यजननं श्रित्वाऽवतीर्णोऽयकम् ।
आयुर्व्वेदगदाऽगदाद्❀ननु गदस्त्रस्तो यदीयाद् भृशं,
नृन्नो हन्ति यदा कदाऽनवसरे सोऽयं भिषग् वर्त्तते ४

तेन यद् भवान् गदाऽपसदेन जगदे; तत्राऽश्रद्धानोऽस्मिन्नायुर्व्वेदविशारदे वैद्ये स्वविश्वासं विदधातु; द्रष्टव्यम्—कीदृश्यस्य दुरवस्था भवति । ( इत्युक्त्वा ततो निष्क्रान्तः ) ।

❀गदाऽगदाद्—गदा (शस्त्र) रूपाद् अगदाद्—भेषजात् । गदः—रोगः ।

पुरुषः—( ज्वरकथया पूर्व्वं निराशोऽधुना स्वसम्बन्धिद्वारा समाश्वासितः स्वप्रसक्तिं प्रयत्नेन सँश्रृणोति । )

( आयुर्व्वेदविशारदो वैद्यो रुग्णस्य हस्तं गृह्णाति नाडीदर्शनाय, ज्वरस्य च वेपथुरुत्पद्यते ) ।

ज्वरः — ( पुरुषम्प्रति सँव्वादधमनीद्वारा ) अये ! हा हन्त ! बत ! क एष त्वयाऽऽहूतः; अस्य हस्तस्पर्शेनैव मम दर्प्पोऽपसर्प्पो भवति । न जाने अग्रे किम्भवेत्; कदाचिन्ममाऽस्तित्वमपि च्यवेत । अहो ! अहन्तु सर्व्वेषां लाभकृद्देवाऽस्मि-अयम्पुरुष इतोऽपसारणीयः । श्रोतव्यम्—मदागमनसमये नास्तिकादपि नास्तिकः करुणावरुणालयं परमेशं रमेशं पौनःपुन्येन स्मरति, एवमग्रेऽपि नारायणपरायणस्तिष्ठति । तदर्थन्तु भगवान् नन्दनन्दनः 'आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ' इति पद्ये आर्त्तं प्रथममाचचक्षे । मत्कारणादेव जनोऽन्येषामापत्तिसमये सहानुभूतिं परोपकारञ्च शिक्षते । मदासत्तावेव सत्यां बन्धूनां पत्न्या मित्राणाञ्च तात्त्विकसंस्तवः प्राप्यते । मद्धेतोरेव कार्प्पण्यमपि कलयन्नरो व्ययशिक्षां गृह्णाति, दानप्रवृत्तिश्च तस्यैधते । मदागमनादेव मानवानामाभ्यन्तरिकं विषं विकारो वा व्यपोह्यते; परमारोग्यञ्च भवति। अहं यदि पुरुषस्याऽन्तस्तिष्ठेयम्; तं कलावपि तपस्विनन्निर्म्ममे । सोऽन्नाहारी न तिष्ठति; किन्तु अब्भक्षो वायुभक्षो दुग्धमुग्धो वा तिष्ठति। अयि मुग्ध ! यावदहं त्वदभ्यन्तरे तिष्ठामि; तावत्त्वयि अन्नदुग्धादीनां विनैव व्ययं शक्तिः स्थास्यति । यदा त्वयाऽऽयुर्व्वेदविशारदद्वारा मां निष्कासयितुं प्रयतिष्यते; तदा त्वयि दौर्ब्बल्यमेव भविष्यति, तव शिरोघूर्ण्णनम्भविष्यति, अन्नदुग्धादीनाञ्चाऽस्मिन् धनाऽल्पतामये समये व्ययोऽपि भविष्यति । अधुना किञ्चित्प्रचलितुं क्षमतावानपि भवान् पदमेकमपि तदा गन्तुं न क्षमतां धास्यति । अधुना यो वायुर्भवद्धानिं घटयितुमनलम्; स एव तदा भवद्धानिमपि निष्पादयितुमलम्भूष्णुः स्यात् । अत एव मुग्धो मा भूः । एनं वैद्यं त्वं वञ्चकमिव वहिरपास्य† । अहं प्रत्यब्दं यद्यतिथिः स्याम्; तदा पुरुषस्य हानिसम्भवो न भवति । भूयिष्ठसमयोत्तरम्प्रपन्नोऽहं शमनसदनमपि कदाऽपि प्रहिणोमि । अहं वस्तुतस्तु निवसामि वार्त्तमानिकमिष्टकाराणां (हलवाई) वनस्पतिघृतपरीतमिष्टान्नेषु । अथ च तिष्ठामि आपणस्थे सर्प्पिषि पयसि नवनीतादिषु चाऽगण्यपण्यवस्तुषु । अथवाऽवतिष्ठे बहुमैथुने । यद्वाऽधिशये यन्त्रनिष्पिष्टनिस्सारगोधूमचूर्ण्णम् ‡ । भवन्त इमानि वस्तूनि सततमुपयुज्य मम स्वागतङ्कुर्व्वते; अहमपि परमप्रेम्णा परिष्वजे वः । परं पुनर्भवन्त एव सकर्ण्णग्राहमपासयितुं मामायुर्व्वेदविशारदानाह्वयन्ति; किमियमेवाऽतिथिसेवा वः । अधुनाऽपि सभ्यतां माऽपनैषीद् भवान्; इमं वैद्यमेवाऽर्द्धचन्द्रयतु ।

पुरुषः—( ज्वरम्प्रति सोल्लासम् ) अधुना—इतो भवतो गतिरेव श्रेयस्कृत् ÷ । मदङ्गप्रत्यङ्ग-सङ्गतो भवान् मामामयमयं कृत्वा सुबहु कदर्थितवान्, मत्तनुमपि तनुं निरमासीत् । प्राक्तीदृशमखर्व्वगर्व्वम्प्रादीदृशत् । अधुना मान्तु मन्तुमन्तं भवन्तं नश्यन्तं नयनसदनाऽतिथीकृत्य,—परतरप्रसादोपसाद एव प्राप्नोति । भवा-

---

†अपास्य । अपोपसृष्टस्याऽस्यतेर्लोटो ह्रौ रूपम्, 'अतो हेः' ।

‡ 'चूर्णमधिशये । ' अधिशीङ्स्थासां कर्म्म' ।

÷ 'श्रेयस्कृत् । 'अतः कृकमी' ति सः । 'विष्वग्देवयोश्च .... अप्रत्यये' इत्यप्रत्ययग्रहणाज्ज्ञापकाद् 'अन्यत्र धातुग्रहणे तदादिविधि'रिति किञ्चिद्विशिष्टेपिऽ करोतौ सः ।

मधुना स्वसत्तया कीदृशानपि लाभान् प्रदर्शयतु, परमद्दन्तव प्रतारणपरायणतां सम्यगमुत्ति । भवान् स्वनियतसद्मनश्छद्मना मम हृदयमधितिष्ठासति । अधुना त्वं त्रपुविलायं विलेष्यस एव । नाऽयमाङ्गलभिषक्, ( डाक्तरः ) यस्य भेपजानां प्रतापेन प्राक् तु भयाऽभिनयं वितत्य ततो यौगपद्येनैव स्वं निह्नुषे, पुरुषस्य च देहस्यैककोणे निलीनो विराजसे, तदोषधिपरिणामे च पुन × प्रकटीभवसि । अयं वर्त्तत आयुर्व्वेदाऽगदङ्कारः । अस्यौषधि × कामं मन्दम्मन्दं स्वप्रभावं त्वयि पातयेत्; तथाऽपि तव ईदृशा ÷ दिशा एकान्तमेव नाशः स्यात् । द्रष्टव्यम्—एकस्य मृल्लोष्टस्योपरि मणपरिमितमपि जलं यौगपद्येन पात्येत; लोष्टभङ्गे तस्याऽन्त × छिन्नता न द्रक्ष्यते । परमेतद्विपरीतं तल्लोष्टे क्रमशश्शनैश्शनैरेकैकोऽब्बिन्दु × पात्येत; तर्हि कियत्समयानन्तरं लोष्टस्य खण्डने कृते तदन्तरार्द्रता प्राप्स्यत एव । इतश्चाङ्गलौषधय × प्रायेण कट्व्यस्तिक्ताश्च भवन्ति; तत्र च धनस्याऽपि भूयिष्ठव्ययो भवति; तथाऽपि भवान् ( ज्वरः ) पूर्णतया पुरुषं न त्यजति । आयुर्व्वेदौषधयस्तु प्रायो मधुरा भवन्त्यल्पमूल्याश्च । केषाञ्चिद्विचारे आयुर्व्वेदौषधिराङ्गलौषध्यपेक्षया हीनवीर्य्या मन्यते; परं तदसद्—अद्यत्वे वैद्या × परिश्रमतो बिभ्यति, अस्मदीयाऽऽयुर्व्वेदे सर्व्वञ्चिद् विद्यते । 'रत्नाकर'—विशिष्टाङ्क इव तस्मिंस्त्रिदोषविज्ञानम्, द्रव्यगुणपरिचयः, रसशास्त्रम्, भूतप्रेतशान्तिपद्धतिः, वाजीकरणौषधयः; बालतन्त्रम्, शल्यशालाक्यतन्त्रम्, कीटाऽणुविज्ञानम्, शस्त्रचिकित्सा, कालचर्य्या, पर्प्पटीप्रभृतीनां विशिष्टभेषजानां प्रयोगपद्धतिः, दर्शनवादः, ज्यौतिषसिद्धान्तमण्डनम्, धर्म्मशास्त्रविवेकः, यथायोग्यं रश्मिजलवायूपवासाऽऽतपादिचिकित्सा—इत्यादि सर्व्वं प्राप्यते; केवलमनुसन्धातारो गवेषकाश्च समपेक्ष्यन्ते । अतोऽधुना तव ( ज्वरस्य ) प्रलयो जनिष्यमाण एव ।

वैद्यः—भवता साधु निगद्यते । अस्याऽऽयुर्व्वेदस्य मूलमपि अथर्व्ववेदः, अत एवाऽऽयुर्व्वेद उपवेद × कीर्त्तितः । एतस्य सेवनमिह लोके सर्व्वथा स्वास्थ्यकरत्वादमुत्र च धर्म्मफलजनकत्वाल्लोकद्वयोपयोगि । अस्यौषधयो नाङ्गलौषधय इवाऽपवित्रा धर्म्मभ्रष्टकारिका दुष्टमद्यदूषिताः, श्वजिह्वासारेण युक्ताः, अस्थिसारेण व्याप्ताः, यन्त्रीयौष्ण्यसंयुताश्च; विशेषतो देशिकाः । अत एवैतन्मूलकं धनं विदेशं नैति । अत एव ये आङ्गलौषधीस्सेवन्ते; ते स्वयं धनं दत्त्वा स्वधर्म्मं दवयितुमिच्छन्तीति प्रतीयते । अस्तु—अधुना भवन्नाड़ी दृष्टा । ( औषधं दत्त्वा ) इदमौषधं पीयताम् । अयं बल–धृति–शुद्धता–धर्म्म–बुद्धिप्रभृतिविदूषको यमसाहाय्यसत्वरो ज्वरो महत्या दुर्दशया भवच्छरीराद्व्यपगतो भूत्वा यममेवाश्रित्य स्वस्थो † भविष्यति, भवाँश्च स्वस्थो भविष्यति । पुनर्विस्मृत्याऽपि किलाऽयं भवदभिमुखं मुखं न विधास्यति; ततश्च क्लेशलेशोऽपि न स्थास्यति ।

पुरुषः—( तथा कृत्वा ) अहो ! आस्वादः । धिग् ज्वरकीट ! भुङ्क्ष्व परकदर्थनफलम् ।

ज्वरः—हा हा हा ! हन्त ! अनया ओषध्या तु मम दह्यन्त इवाऽङ्गानि । हा ! मम प्राक्कृतदर्प्पेन्त्वियमोषधिः क्षणेनैवाऽपासीसरत् । अधुनैवेयन्मे दुरवस्था समजनि । यदा च 'रत्नाकर' विशिष्टाङ्कप्रेरणातः

---

÷ ईदृशा । क्लिन्नन्तम्; तेन 'दिशा' इत्यनेन सामानाधिकरण्यम् । कवीदृश्येति ।

† ज्वरः स्वस्थः । स्वः स्थः-स्वर्गस्थ इति यावत् 'खर्परे शरि वा विसर्गलोपः' । जनः स्वस्थः प्रकृतिस्थ इत्यर्थः ।

सर्व्वे एव संस्कृतप्रणयिन आयुर्व्वेदविषयेऽवधास्यन्ति तदा तु मम समस्तैव जातिर्नङ्क्ष्यति—हाहा !
'नूनं दिदृक्षयराडयम्बत ! यतस्सृष्टौ न नः सङ्क्रमं-सम्मृष्यत्यथ सञ्जिहीर्षति रुजां जातिं समस्तां हहा !
एवञ्चौषधिरूपरोगवलितं वंशं विधत्तेऽत्र न.'

( इति पूर्व्वोक्तपद्यपादत्रयं पठति )

( ततो ज्वरस्य आर्त्ततारस्वरा × प्रलापाश्च श्रूयन्ते, पुरुषस्य च सर्व्वस्मिन् वपुषि स्वेद × प्रवर्त्तते। उत्तरोत्तरं ज्वरप्रलापेषु शलथिमा भवति, अन्ततश्च स पुरुषस्य मलद्वारद्वारा महत्या दुर्द्दशाया सर्व्वथा निर्गच्छति।

"दृष्ट्वैवं गदयातनां स्मयमयः सञ्जायते वैद्यराट्"

ततो वैद्यप्रयुक्तपाचनपुष्टिभेषजैश्च पुरुषस्सर्व्वथा स्वस्थो जायते। तत आयुर्व्वेदवैद्याय तत्प्रशस्तिपत्रं 'रत्नाकरे' सम्मुद्र्य ❋ तस्मै–समर्प्य, पारितोषिकं विश्राण्य, तमनुज्ञाप्य च, शुद्धो भूत्वा, स्वकार्य्ये सङ्गमो भवतीति शम् ॥

❋ 'रत्नाकरे–पत्रविशेषे सम्मुद्र्य, रत्नजटितञ्च कृत्वेति गम्यते।

---

# रोगिपरीक्षा

( लेखकः—पं० वाचस्पतिशर्मा आयुर्वेदाचार्य इनमेडिसिन एण्ड सर्जरी ( फाइनल )
( काशीहिन्दूविश्वविद्यालयः )

इह खलु सर्वेणापि बुद्धिमता विलसत्पौरुषेण इह चामुत्र च सुखमभिलषता स्वास्थ्यमेव स्पृहणीयं भवति, तदधीनत्वात् पुरुषार्थचतुष्टयस्य।
तत्रेदं जिज्ञास्यं किं नाम स्वास्थ्यं कथञ्च तल्लक्षणम्, कश्च विकारः को वा तत्प्रशमोपाय इति।

तत्र स्वास्थ्यं नाम—

"समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥"

इत्युक्तस्वरूपः, स्वस्थस्य भाव अर्थात् शारीरभावानां तद्गुणानाम् तत्कर्मणाञ्च यथायथं प्राकृतस्वरूपे अवस्थानं स्वास्थ्यम्। तल्लक्षणञ्चायुर्वेदोक्तदिनर्तुचर्याभिः सम्यगुपास्यमानाभिः सम्पद्यते।

स्वास्थ्यविपरीतञ्चास्वास्थ्यं विकारो रोगो वा एतदुक्तं भवति। शारीरयन्त्राणामङ्गप्रत्यङ्गादीनां स्वाभाविकक्रियायां धर्मे स्वरूपे वा विकृतिः, रोग उच्यते। तदुदाहरणानि—यथा कस्यचिन्मन्दाग्निर्जातः तस्यायं भावः—यदस्य ग्रहणी अन्नपाचनासमर्थेति, अर्थात् ग्रहणीरूपशारीरयन्त्रस्य अन्नपाचनासामर्थ्यरूपा विकृतिरेव मन्दाग्नित्वेन व्यपदिश्यते इति। एवमेव स्वरूपे विकृतिरेव मन्दाग्नित्वेन व्यपदिश्यते इति। एवमेव स्वरूपे विकृतिरपि रोगः—यथा कस्यचिच्छिरसि अर्बुदो जातः, तेन यद्यपि काचित् पीडा नानुभूयते



विद्वद्वर्य-कविराजश्रीधर्मदासमहोदयाः
[हिन्दूविश्वविद्यालयायुर्वेदविभागाध्यक्षाः]
काशी

वै० यं० अजमेर.

# आयुर्वेदनौकर्णधार-विद्वत्प्रवर-कविराज-
# श्रीधर्मदासमहोदयाः

लेखकः— वाचस्पतिशर्मा-आयुर्वेदाचार्यः ( इन मेडीसन एण्ड सर्जरी फाइनल )
आयुर्वेदकालिज हिन्दूविश्वविद्यालयः काशी ।



आयुर्वेदसुरापगां शिरसि यः सन्धार्य गङ्गाधरो
जातस्तस्य परम्पराप्रकरणे शिष्यः परेशस्य सः ।
साक्षादीश्वरकृष्णचिकित्सितविधावध्यापने कर्मणि
ख्यातो भारतभूतले विजयते श्रीधर्मदासः सुधीः ॥

१८६२ ईशवीये संवत्सरे वर्द्धवानान्तर्गतपूर्वस्थलीसमीपवर्तिचूपीग्रामे कविराजश्रीकाशीप्रसन्नमहोदयानां गृहेऽस्मच्चरितनायकानां कविराजश्रीधर्मदासमहोदयानां जनिरभूत् । तस्मिन्नेव ग्रामे व्याकरणसाहित्यदर्शनादिषु प्रौढिमुपपाद्य विंशतितमे वर्षे वाराणस्यामायुर्वेदाध्ययनाय स्वमातुलविद्वद्वरेण्यश्रीपरेशनाथकविराजमहोयादयानां सविधे समागताः । ये हि कविराजश्रीपरेशनाथमहोदयाः सुगृहीतनामधेयानामायुर्वेदगगनतिमिरभास्कराणामपूर्वप्रतिभावतां तत्रभवतां श्रीमतां कविराजश्रीगङ्गाधररायकविरत्नमहोदयानां प्रमुखशिष्या आसन्, ये चाधुनापि वङ्गदेशे बालगङ्गाधरेत्याख्याः सादरं स्मर्यन्ते । एतेषां चरणेष्वेवास्मत्कविराजमहोदयाः षड्वर्षाणि समस्तमायुर्वेदवाङ्मयं चिकित्साक्रमञ्चाभ्यस्य स्वप्रतिभाबलेन परं पाटवमध्यगमन् । एते महानुभावाश्चरके कृतश्रमा अपि पुनश्चरकान्तर्गूढतत्त्वानुसंधाने दत्तचित्ताश्चरकसंहितायामेव विशेषेण श्रममकार्षुः । फलस्वरूपेण च चरकावतारा इव भारते चरकविषये प्रामाणिकपुरुषरूपेणोपतिष्ठन्ते ।

अध्ययनानन्तरमेवैभिर्महाभागैः स्वगृहेऽध्यापनमारब्धम् । पुनश्च काशीहिन्दूविश्वविद्यालये श्रीमदनमोहनमालवीयमहोदयैरायुर्वेदविद्यालयेऽध्यक्षपदमलङ्कर्तुं प्रार्थिताः, आयुर्वेदप्रचारदृष्ट्या लोकोपकारभावनया च तदध्यक्षपदमशोभयन्त । ततः प्रभृति—अत्रैवायुर्वेदनिगूढतत्त्वानि शिष्येभ्यो वितरन्तो विराजन्ते । एतेषां सहस्रतोऽप्यधिकाः शिष्या भारते वर्षे प्रायः सर्वेष्वेव प्रान्तेषु लब्धकीर्तयश्चिकित्साकर्म कुर्वन्ति । तेषु प्रधानतमाश्च कविराजश्रीसत्यनारायणशास्त्रिमहोदयाः, कविराजचक्रवर्तिश्रीताराचरणसर्वदर्शनतीर्थमहोदयाः, काशीस्थमारवाडचिकित्सालयस्य प्रधानचिकित्सका आयुर्वेदशास्त्राचार्यश्रीदुर्गादत्तशास्त्रिणः ।

अस्मद्गुरुचरणाः श्रीकविराजमहोदयाः स्वप्रतिभाबलेन रोगाणां परिज्ञाने चिकित्सिते च प्रथितमहिमानो लब्धसिद्धयः "ननु लक्ष्मीः फलमानुषङ्गिकम्" इति सूक्त्यनुसारं विपुलं द्रव्यं चोपार्ज्य भिषङ्मूर्धन्यत्वेनावतिष्ठन्ते । एते हि परमधार्मिकाः स्वदेशवस्तुव्यवहारपराः परमसौम्याश्छात्रवत्सलाश्च । एतेषां प्रतिष्ठालोभपरित्यागस्तु एतेनैव ज्ञायते यन्निखिलभारतवर्षीयवैद्यसंमेलनेन सभापतिपदमलंकर्तुं बहुशः प्रार्थिता अपि स्वीकृतिं नैवाददुः ।

श्रीजगदीश्वरस्यानुकम्पया महाभागानामेतेषां पुत्ररत्नं श्रीभूपेन्द्रनाथकविराजमहोदय आयुर्वेदशास्त्रे लब्धप्रावीण्यो वाराणस्यामेव छात्रानध्यापयन्नातुरानुपक्रमते— इतिशम् ।

# वैद्यरत्न--श्रीत्र्यम्बकशास्त्रिणः

लेखकः-श्रीअनन्तरामशास्त्री डोगरा ।

सन्ति किल परमपवित्रे भारतवर्षमुख्ये काशीधाम्नि दशदिगन्तविख्यातचिकित्सापाटवाः, चुलुकीकृतायुर्वेदाम्बुधयः, निदाने सिद्धानुभवाः, सुविख्याततनामानः वैद्यरत्नश्रीत्र्यम्बकशास्त्रिमहोदया वैद्यशिरोमणयः । एतेषां पितृचरणाः सुगृहीतनामधेया मुमूर्षूणाममृतौषधिभिर्जीवनदानेनान्वर्थाभिधेयाः श्रीअमृतशास्त्रिमहोदया महाराष्ट्रब्राह्मणाः काशीमागतवन्तः । तेषामेव सकाशादस्मच्चरितनायकाः श्रीत्र्यम्बकशास्त्रिमहोदयाः सकलमायुर्वेदशास्त्रं याथातथ्येनाधिगम्य बाल्यमारभ्य अद्य यावत्—शरणागतार्तरोगिणां महाव्याधिग्रस्तानामपि रोगनिवारणे धन्वन्तरय इव सिद्धहस्ता न केवलं काश्यामेव किन्तु समस्तभारतवर्षे शुभ्रं यशो वितन्वन्ति ।

अर्वागेव कतिचिन्मासेभ्यः काशीस्थश्रेष्ठिवराणां राजा सर मोतीचन्द सी० आई. ई. महोदयानां पक्षाघाते चिकित्सार्थमाहूतैः कलिकातास्थकर्नलह्वाइटप्रभृतिभिरनेकैः पाश्चात्यचिकित्सकैरसाध्यत्वेन ख्यापिते तद्बन्धुवर्गैः प्रार्थिताः श्रीशास्त्रिमहोदयाः पञ्चपञ्चाशद्गतिकनाडीनामल्पाभिरेव मात्राभिः पञ्चसप्ततिगतिकत्वं स्वौषधबलेन सम्पाद्य स्वचमत्कारं प्रकाशितवन्तः इति विदितमेव सर्वेषाम् । एवमेव मुजफ्फरपुरवासिरायबहादुरश्रीकृष्णदेवनारायणमेहतामहोदयस्य कनिष्ठभ्रातॄणां विहारप्रान्तीयशासनसमितेः सदस्यानां श्रीनारायणमेहता बी० ए० महोदयानां 'सोरायसिस' नामचर्मरोगविशेषाक्रान्ता पुत्री वर्षद्वयपर्यन्तं श्रीकर्नलएक्टनप्रभृतिपाश्चात्यभिषग्वरैः कृतोपचारापि स्वास्थ्यमलभमाना प्रत्याख्यापितापि श्रीशास्त्रिचरणैः स्वचिकित्सापाटवेन मासचतुष्टयेनैव समूलमुच्छिन्नो व्याधिः स्वास्थ्यं च नीता । दुर्जये ग्रहणीरोगे च विशेषतो हि लब्धपाटवा एते पर्पटीप्रयोगेण विंशतिसेटकप्रमाणं दुग्धमेकस्मिन् दिवसे पाययन्तीति सुविदितम् । पारदसंस्कारकर्मणि च सुप्रसिद्धतमा एते धातूपधातुरत्नोपरत्नादीनां प्रयोगे विज्ञाने च परमकुशलाः सन्ति । एतेषां नाड़ीज्ञाननिष्णाततया-प्रभावितैः स्वर्गीयश्रीकाशिराजमहाराजप्रभुनारायणसिंहमहोदयैः प्रशस्तिपत्रमर्पितम् ।

श्रीशास्त्रिवर्याणां प्रशस्तौ इन्द्रप्रस्थस्थितसुविख्यात "हिन्दुस्तानटाइम्स" नाम्नि दैनिकाङ्ग्लपत्रे यत्प्रकाशितं तत् प्रतिलिख्यते । तद्यथा—

Pt. Triambak Shastri, the celeberated Benares Physician is regarded as one of the ablest exponents of Ayurved who has credited with some miraculous cures.

अस्मिन्नेव वर्षे ( सन् १९३४ ) नववर्षदिवसावसरे भारतसम्राट्श्रीजार्जमहोदयैः "वैद्यरत्न" पदवीं वितीर्य संमानिता इति न तिरोहितं विदुषाम् ।

इमे खलु वृद्धतरा अपि इदानीं यमनियमादिभिः पथ्याचरणैश्च वार्धक्यदोषविरहिता सुस्वस्थाश्च अतिसौम्यानामेषां पितृभक्तिरप्युल्लेखनीया—एभिः स्वपितृचरणानां स्मारकरूपे सहस्रमुद्राव्ययेन एका पाषाणप्रतिमा निर्मापिता । स्वीयविशालभवनमपि स्वपितृचरणानां नामतः अमृतभवनमिति संज्ञयालङ्कृतम् । एतेषां बहवश्छात्रा अपि आयुर्वेदनिष्णाताः श्रीश्रीनिवासशास्त्रि-दुर्गादत्तशास्त्रि—आप्पाशास्त्रि साठे रमाशङ्करदीक्षित-नन्दलालगौड़-प्रभृतयो नक्षत्राणीवाभान्तीति किं बहुना ।

तथापि सा वृद्धिर्न प्राकृती, अत एव रोगत्वेनाभिधीयते। रोगप्रशमे च अभिप्रेतत्वेनापतिते रोगाणां कारणभेदतः, लक्षणभेदतः अधिष्ठानभेदतः, बहुविधत्वात् कतमोऽसौ प्रकृतिविकार इति विनिश्चय आवश्यक एव, प्रतिविकारं चिकित्सायाः भिन्नप्रकारत्वेन रोगविनिर्णयमन्तरा चिकित्साकर्मणः कर्तुमशक्यत्वात्।

सोऽसौ विनिश्चयश्च रोगपरीक्षामन्तरा नतरां स्यादतोऽवहितमनसा भिषजा रोगपरीक्षा तथा विधेया यथा सन्देहलेशोऽपि नावशिष्येत। स एष रोगपरीक्षणप्रकारस्त्रिविधः—आप्तोपदेशप्रत्यक्षानुमानभेदात्। तत्राप्तोपदेशो नाम आप्तानामुपदेशः, आप्ता हि संतताचरिततपश्चर्याबलात् साक्षात्कृततत्वातत्वविवेकाः रजस्तमोभ्यामस्पृष्टमनसो, विशिष्टाः पुरुषास्तेषामेवंगुणयोगाद्यद्वचनं तत्प्रमाणम्।

प्रत्यक्षं नाम तत् यत्स्वयमिन्द्रियैर्मनसा च गृह्यते।

अनुमानं नाम—युक्त्यपेक्षस्तर्क एव।

तत्र एवंविधप्रकोपणो हि अयं रोगः, एवंयोनिः, एवमात्मा, एवंविधं च स्थानमधिष्ठाय वर्तते, एवंविधाश्चात्र वेदनाः, इमे चोपद्रवाः, इदं चास्य भावि फलमित्येतत् सर्वं गुरुमुखात् शास्त्राद्वाऽधिगम्य कृता परीक्षाऽऽप्तोपदेशेन परीक्षा। यत्र च स्वयं प्रत्यक्षीक्रियते अनुमीयते वा तत्र प्रत्यक्षेणानुमानेन वा परीक्षा। प्रत्यक्षतस्तु खलु भिषक् स्वैरिन्द्रियैरातुरशरीरगतान् तांस्तानिन्द्रियार्थान् परीक्षते—तद्यथा श्रोत्रेण अन्त्रकूजनं सन्धिस्फोटनमङ्गुलीपर्वणां चान्ये च स्वरविशेषाः अन्येऽपि वा केचिच्छरीरोपगताः ( हृत्फुफ्फुसादिषु जायमानाः डुपलुपप्रभृतयः ) शब्दविशेषाः स्युस्ते परीक्ष्यन्ते। एवं वर्णसंस्थानप्रमाणच्छायाशरीरप्रकृतिविकारौ यानि चान्यानि वा चक्षुर्वैषयिकाणि ( स्वातन्त्र्येण यन्त्रादिसाहाय्येन वा ) तानि सर्वाणि चक्षुःपरीक्षाविषयकाणि। एवमेव घ्राणेनातुरशरीरगताः प्रकृतिवैकारिकाः गन्धाः परीक्षणीया भवन्ति। स्पर्शनेन तु, आतुरशरीरगतं काठिन्यं, मार्दवमौष्ण्यम् शैत्यं धमनीस्पन्दनप्रभृतयो गतयश्च प्रकृतितो विकृतितो वा इत्येतत्सर्वं परीक्ष्यम्।

रसस्तु खलु आतुरशरीरगतो घृणितत्वात् तत्तद्व्याधिविषसंक्रमणभयाद्वा न प्रत्यक्षविषयः अतोऽनुमानेनैव ज्ञातुं शक्यते—तद्यथा मूत्रस्य क्षारप्रतिक्रियावत्त्वमम्लप्रतिक्रियावत्त्वं वा लिट्मसपेपरेण सुखमनुमीयते। अनुमानतः परीक्षणं यथा- जरणशक्त्या जाठराग्निं व्यायामशक्त्या बलम्, तत्तदिन्द्रियार्थग्रहणेन पञ्चेन्द्रियग्रहणशक्तिरनुमीयते।

यत्तु 'निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥'

इति निदानपञ्चकं रोगविज्ञानकारणत्वेनोक्तं तदपि उक्तत्रैविध्यान्नातिरिच्यते, सम्प्राप्तेरनुमाने रूपपूर्वरूपयोः प्रत्यक्षे हेतुरूपनिदानोपशययोश्च प्रत्यक्षेऽनुमाने चान्तर्भावात्।

वस्तुतस्तु निदानपञ्चकस्य आप्तोपदेशप्रत्यक्षानुमानत्रिकस्य च व्यापारस्य भिन्नविषयत्वात्तेषां पृथक्त्वमेव मनोरमम् इति गभीरविचारपरायणैः सहृदयैर्विचारणीयम्। तथाहि—आतुरशरीरगतव्याधेर्विज्ञानोपाया निदानपूर्वरूपरूपोपशयसम्प्राप्तयः निदानादयश्च वैद्येन कैरुपायैर्ज्ञातव्या इत्यपेक्षायां तज्ज्ञानोपाया आप्तोपदेशादय इति—अर्थात् वैद्येन आप्तोपदेशादिभिः पूर्वं निदानादयो बोद्धव्याः, ते च तथाऽवबुद्धा विकारान् बोधयन्तीति भावः।

अत्र केचिदाचार्याः 'निदानं पूर्वरूपाणि......विज्ञानं रोगाणां पञ्चधा स्मृतम्' इत्यत्र विज्ञानमितिपदं भावसाधनमाश्रित्य स्वोपज्ञसिद्धान्तनिदाने 'न हि

निदानादयो ज्ञानकरणानि किन्तु ज्ञानविषयाः, निदानादिभिरेव हि सुपरिज्ञातैर्विज्ञातोऽयं रोग इति व्यपदेशात् तज्ज्ञानव्यतिरिक्तस्य च रोगविज्ञानस्याप्रसिद्धत्वात्' इति वदन्तो निदानपञ्चके एव रोगत्वमापादयन्तस्तस्य व्याधिबोधकत्वे विप्रतिपद्यन्ते, तथा च तत्समर्थनाय युक्तिविरोधमार्षविरोधञ्च उपस्थापयन्ति तदेतन्नातिसुन्दरं रोचते। यतो यस्य हि (रोगस्य) निदानं पूर्वरूपं रूपं सम्प्राप्तिरुपशयश्चेति तदेतत्सर्वं तस्मात् (रोगात्) अन्यदेव, समुदायसमुदायिनोः पृथक्त्वेनैव व्यवहारात्। तथा 'तस्माद् व्याधीन् भिषगनुपहतसत्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत' इति चरकसूत्रे भावैरितिकरणनिर्देशाच्च। निदानपञ्चकस्य रोगत्वस्वीकारे तु 'भावान्' इति निर्देशः स्यात् इति।

किञ्च 'ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे।
व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः' ॥

इति पद्यस्यापि 'पूर्वरूपरूपादयो न केवलं व्याध्यतिरिक्ताः, किन्तु व्याधिबोधका अपि इत्यत्रैव स्वारस्यात्, अयमभिप्रायः—व्याधीनां ज्ञानार्थं प्रतिव्याधि यानि पूर्वरूपरूपात्मकानि लिङ्गिनो व्याधेर्बोधकानि लिङ्गानि निर्दिष्टानि तानि स्वातन्त्र्येण व्याधयोऽपि तदात्वे (प्रकृतरोगनिर्णयप्रस्तावे) 'लिङ्ग्यन्ते बोध्यन्ते व्याधयो यैस्तानि' लिङ्गानि बोधकान्येव न तु स्वतन्त्रव्याधयः इति। एवञ्च लिङ्गभूताः पूर्वरूपादयो यद्बोधयन्ति ततस्ते भिन्नस्वरूपा एवेति सिद्धम्। किञ्च 'अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्वरूपसञ्ज्ञः'—सु० सूत्र० अ० ३५। इति सुश्रुतवचनमपि व्याधेः पूर्वरूपादिभ्यः पृथक् सत्तां बोधकत्वञ्च कल्पयति, न तु पूर्वरूपादय एव रोग इति।

अथात्र विषये तैरेव य आर्षविरोधो युक्तिविरोधश्चोद्भावितः तत्र आर्षविरोधस्तु पूर्वम् 'आप्तोपदेशादिभिर्निदानादयो बोद्धव्याः, ते च तथाऽवबुद्धा व्याधीन् बोधयन्ति' इति पूर्वोक्तव्याख्यानेन सुखं परिहृत एव। इदानीं युक्तिविरोधः परीक्षणीयः—तत्र तेषां सैषा भवति युक्तिः, तथाहि—निदानादयो हि न व्याधिज्ञानकरणानि भवितुमर्हन्ति व्यापारवत्त्वाभावात्, व्यापारवत एव कारणस्य करणत्वस्वीकारात्। लिङ्गिनो व्याधेर्लिङ्गानाममीषामस्ति व्यापार इति चेत्तथात्वेऽपि नेष्टसिद्धिः, लिङ्गज्ञानस्य करणत्वेन लिङ्गानां करणत्वास्वीकारात्। तथा च 'अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि'। किञ्च निदानादीनां सर्वेषां लिङ्गत्वमपि नोपपद्यते। 'व्याधिस्वरूपं हि सम्प्राप्तिर्बोध्या न तु बोधिका' इति कृत्वा सम्प्राप्तेर्लिङ्गत्वाभावात् इति। तत्रेदं प्रतिविधानम्—

'श्रमोऽरतिर्विवर्णत्वं तथा स्वेदावरोधः सन्तापश्चेत्यादीनि लक्षणानि ज्वरे भवन्ति' इत्याप्तोपदेशादवबुध्यते। ततश्च यत्र यत्र श्रमादिस्तत्र तत्र ज्वर इति व्याप्तिर्जायते। एवञ्च व्याप्तिज्ञानादेव विकारज्ञानमिति व्याप्तिज्ञानमेव करणम्, निदानादयस्तु व्याप्तिज्ञाने कारणानि। ततश्च कारणे कार्योपचारान्निदानादीनामपि करणत्वव्यवहारो नाऽनुपपन्नः। उपचारबीजन्तु आर्षग्रन्थप्रसादनमात्रमिति।

एवञ्च सम्प्राप्तेर्व्याधिस्वरूपत्वमपि नोपपत्तिसहम्, यतः—सम्प्राप्तिर्हि उपादानकारणभूतानां दोषाणामाभ्यन्तरव्यापारोपलक्षिता व्याधिनिष्पत्तिः, सा च व्यापारवतां दोषदूष्याणां संयोगरूपा क्रियारूपा वा। यदुक्तं वाग्भटेन 'यथा दुष्टेन दोषेण इत्यादि' तथा एतैरपि सिद्धान्तनिदाने 'अशेषविशेषप्रकारोपलक्षिता व्याधिनिष्पत्तिः सम्प्राप्तिः' इति संक्षेप इति। एवं दोषाणां दूष्याणाञ्च संयोगरूपा वा क्रियारूपा वा स्यात्, उभयथाऽपि सम्प्राप्तिरसमवायिकारणमेव भवति। एवञ्च कार्यकारणयोः सुतरां पृथग्विधत्वात् सम्प्राप्तौ

व्याधित्वारोपो भ्रममूलक एवेति। किञ्च निदानादिज्ञानव्यतिरिक्तस्य रोगज्ञानस्याप्रसिद्धत्वमुक्त्वाऽपि तत्तल्लक्षणसमष्टिबोधिताऽऽभ्यन्तरविकृतिपरम्परा एव परमार्थतो रोगा इति यदुक्तं स एष पूर्वापरवचनविरोध एव निदानादीनां व्याधेः पार्थक्यमुपपादयति। तदेवं मधुकोप एव माधुर्यं तथा च तत्रैव विजयो रक्षित इति सर्वं सुस्थम्।

नव्यास्तु—व्याधेस्त्रिविधानि लक्षणानि भवन्ति—आतुरानुभवगम्यानि कानिचित्, चिकित्सकलक्ष्याणि कानिचित्, कानिचिदुभयानुभवविषयाणि चेति मन्वते। तत्राऽऽतुरानुभवगम्यानि यथा—भारबोधश्रमारतिवेदनादीनि। चिकित्सकलक्ष्याणि यथा—हृदयफुस्फुसादिविकृतयः। उभयानुभवविषयाणि यथा—ज्वरश्वासकासादयः। तत्र चिकित्सकलक्ष्याणि दर्शन—(Inspection)—स्पर्शन—(Palpation)—समाघात—(Percussion —श्रवणेत्येतैः (auscultation) चतुर्भिरुपायैरवगम्यन्ते।

१. तत्र दर्शनेन—रोगज्ञानं यथा—पाण्डु—कामला—अर्बुदादिषु।

२. स्पर्शनेन—रोगज्ञानं यथा—ज्वरं-प्लीहूनि-यकृद्वृद्धौ,-आमाशयस्थघातकार्बुदे, शरीरे आवस्य व्रणशोथस्य पाको जातो न वा इति सन्देहनिरासार्थञ्च स्पर्शनपरीक्षाऽऽवश्यकी।

३. समाघातो नाम परीक्ष्यप्रदेशोपरि समवस्थितकराङ्गुलीनामितरकराङ्गुल्या संताडनम्। समाघातेन च रोगपरीक्षा, यथा-स्वल्पजलोदकोदरे समाघातं विना न कोऽप्युपायो जलस्य परीक्षार्थम्। सति तु समाघाते यदि ध्वनिपूर्णगर्भः, तदा अनुमीयते अस्त्युदरे जलमिति—किञ्च प्लुरिसीरोगे कतमोऽयं प्रकारः प्लुरिसीरोगस्य, आहोस्वित् शुष्कप्रकारः (Dry-plurisy) उत वा सद्रवप्रकारः (Plurisy with effusion) इति समाघातपरीक्षामन्तरा न पार्यते निश्चेतुम्, इत्युपपन्नं समाघातपरीक्षाया आवश्यकत्वम्।

४ श्रवणेन—श्रवणपरीक्षा हि श्रवणयन्त्र-(Stethis-cope) द्वारा हृदयफुप्फुसश्वासप्रणालीनां शब्दविशेषैः क्रियते—यथा कासयुक्तजीर्णज्वरिणः पुरुषस्य यक्ष्मणः सन्देहे श्रवणयन्त्रद्वारा फुप्फुसपरीक्षा क्रियते। तत्र च यदि फुप्फुसविकृतिरुपलभ्यते तदा यक्ष्मेति विनिर्णयः क्रियते। फुप्फुसविकृतेरभावे च जीर्णज्वर इति, श्रवणपरीक्षामन्तरा नात्र विषये कथमपि विनिर्णयः कर्तुं पार्यते। यक्ष्मणस्तिसृषु अवस्थासु मध्ये कतमेयमवस्था इति निश्चितिस्तु दूरे एव। हृद्रोगेष्वपि बहुविधेषु सत्सु कतमोऽयं हृद्रोगः। द्विकपाटीयद्वारजन्येयं विकृतिरुत वा महाधमनीद्वारा जन्या। तत्रापि च संकोचजन्येयं विकृतिरथवा विस्फारजन्या इति विनिश्चेतुं न कोऽप्युपायः श्रवणपरीक्षामन्तरा। तथा च (Bronchial-pneumonia) श्वासप्रणालीनिष्ठनिमोनियारोगे (Lobular-pneumonia) फुप्फुसपिण्डगतनिमोनियारोगे च भेद एव कर्तुं न पार्यते। अतो रुग्विनिश्चये महत्त्वपूर्णं स्थानं श्रवणपरीक्षायाः। आतुरानुभवगम्यानां वेदनाविशेषादीनां भावानां परिज्ञानाय तु स आतुर एव प्रष्टव्यो भवति तदुत्तरेण च रोगविशेषो ज्ञायते।

एताश्च नव्यमतप्रतिपादिता दर्शन—स्पर्शन-समाघात-श्रवण—रूपाश्चतस्रः परीक्षा अस्मत्प्राच्याचार्यप्रतिपादितत्रिविधपरीक्षास्वेवान्तर्भवन्ति। तद् यथा-समाघातश्रवणयोः श्रवणेऽन्तर्भावः। एवमेव अभिनवाविष्कृतायाः अस्थिभङ्गादिषु विशेषतः प्रयुज्यमानायाः (X-Ray) एक्सरेपरीक्षायाः—चक्षुःसंदर्शन-

यन्त्र—( Opthalucscope ) - कर्णसंदर्शयन्त्र- ( Auroscope ) गलसंदर्शनयन्त्रादि- ( Laryngascope ) जन्यपरीक्षाणामपि दर्शनेऽन्तर्भावः । तस्मात्प्राच्याचार्यप्रतिपादितास्त्रिविधाः परीक्षा एव नव्यमतेऽपि, न ततोऽतिरिक्ता काचिच्चतुर्थीति साधूक्तम् "दर्शनस्पर्शनप्रश्नैः परीक्षा त्रिविधा स्मृता" इति ।

एतेन ये केवलं धमनीस्पन्दनस्पर्शमात्रेणैव व्याधिज्ञानं भवति, इति ब्रुवते तदप्यपास्तम्, आर्षसिद्धान्तविरोधात्। एवं च रोगपरीक्षायां प्रतिपादितायां तत्सहायत्वेन तत्संबन्धादधुना रोगिपरीक्षाऽपि प्रतिपाद्यते ।

रोगिणः परीक्षा च आयुषः प्रमाणज्ञानार्थं बलदोषप्रमाणज्ञानार्थञ्च क्रियते। तत्र आयुषः प्रमाणज्ञानार्थं रोगिपरीक्षा इन्द्रियस्थानेषूक्ता "यस्य वैकारिको वर्णः शरीर उपपद्यते। अर्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः" इत्यादि । अयं भावः—रोगिपरीक्षया यदि रोगिणः कानिचित् रिष्टलक्षणानि जातानि--रोगश्च न पुनर्बलवानसाध्यो वा--तथाऽपि स न चिकित्स्यः, तस्य मृत्योरवश्यंभावित्वात्। एवमेव पञ्चेन्द्रियेषु विकृत्या अर्थात् रिष्टलक्षणोत्पत्त्या आयुषोऽन्तरूपप्रमाणज्ञानं भवति । तत्रायुषः प्रमाणज्ञानं चिकित्साकर्मणि आवश्यकम्। रिष्टज्ञानाभावे मुमूर्षोश्चिकित्सया अर्थस्य हानेर्निन्दायाश्च सम्भवात्। तथा च चरकः—" अर्थविद्यायशोहानिमुपक्रोशमसंग्रहम्। नियतं प्राप्नुयाद्वैद्यो यद्यसाध्यमुपक्रमेत् ।" इति ।अतः आयुषः प्रमाणज्ञानार्थमवश्यं कर्तव्या रिष्टपरीक्षा । अथ आतुरपरीक्षायाः द्वितीयं प्रयोजनं बलदोषप्रमाणज्ञानम्, भेषजप्रयोगो हि दोषप्रमाणानुरूपः सन्नपि बलप्रमाणविशेषमपेक्षत एव । यतो दोषप्रमाणमेव केवलमपेक्ष्य प्रयुज्यमानं भैषज्यं बलवत्त्वात् हीनबलमातुरं सहसाऽतिपातयेदेव । न ह्यतिबलान्याग्नेयसौम्यवायव्यान्यौषधानि क्षाराग्निशस्त्रकर्माणि च शक्यन्तेऽल्पबलैः सोढुम्। तानि हि अविषह्यातितीक्ष्णवेगत्वात् सद्यः प्राणहराणि स्युः । विपर्यये च बलवति बलवद्व्याधिपरिगते चातुरे स्वल्पमौषधमकार्यकरं भवति। तस्मादातुरपरीक्षाया अनिवार्यत्वम् ।

सा च प्रकृतिविकृत्यादिभेदात्-दशविधा-तथा च चरकः—"तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च सारतश्च संहननतश्च प्रमाणतश्च सात्म्यतश्च सत्त्वतश्च व्यायामशक्तितश्च वयस्तश्चेति बलप्रमाणविशेषग्रहणहेतोः" इति ।

तत्र प्रकृतिस्तावत् "शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु । यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥" इति बोध्या। अर्थात् शुक्रासृजोः, गर्भिणीभोज्यचेष्टादिषु च बाहुल्येन यो दोषस्तेन प्रकृतिर्जायते, सा च सप्तधायथा वातला-पित्तला-श्लेष्मलाद्वन्द्वजाश्च तिस्रः सन्निपातात्मिका चैकेति । वातलादीनाञ्च लक्षणानि आकरे द्रष्टव्यानि ।

तत्र प्रकृतितः परीक्षायाः प्रयोजनमेतत् यद्-यद्दोषप्रकृतिको मनुष्यस्तद्दोषजन्यो व्याधिस्तस्य प्रबलः स्यात्। अल्पेनैव च प्रकोपणेन उत्पद्यते च इति। एवं च सप्तविधभेदभिन्नाऽपि प्रकृतिः पृथक् षोढा जात्यादिभेदाद् भवति। अत्र प्रकृतिर्हि स्वभावः। तथाह चरकः- "अत्र प्रकृतिर्जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च, कालानुपातिनी च, वयोऽनुपातिनी च, प्रत्यात्मनियता चेति षोढा। जातिकुलदेशकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति" इति ।

तत्र जातितः प्रकृतिर्यथा—अत्र 'आकृतिग्रहणा जातिः' इति जातिलक्षणेन स्त्रीत्वपुरुषत्वरूपा जातिर्विवक्षिता। जातितश्च प्रकृतिर्यथा—स्त्रीषु सौकुमार्यं भीरुत्वं चलस्वभावादयो गुणा भवन्ति। पुरुषेषु च साहसविचारशीलताम्थैर्यादयः। तथा च सन्ति केचिद् रोगाः ये स्त्रीष्वेव उत्पद्यन्ते, यथा हरिद्रोगः (Chlarasis) हिस्टीरियाप्रभृतयः। एवमेव पुरुषेष्वेवोत्पादशीला अपि केचिद्रोगाः, यथा अन्त्रवृद्धि-एण्डवृद्धिश्चेति—

तत्र कुलप्रसक्ता प्रकृतिर्यथा—किञ्चित्कुलं कुष्ठयक्ष्मादिवशवर्ति। किञ्चित्कुलं मद्यसेवि-मांसाशि था, इत्यादिकुलप्रकृतिज्ञानेन रुग्विनिश्चये साहाय्यं चिकित्सायां वैशिष्ट्यं च भवति। तत्र रुग्विनिश्चये साहाय्यं यथा--कस्यचित्कुलं यक्ष्मणो वशवर्ति, तत्कुलजानां यक्ष्मणः प्रवृत्तेर्वर्तमानत्वात् यक्ष्मणोऽधिकसम्भावना। एवमेव चिकित्सायामपि वैशिष्ट्यं भवति।

देशानुपातिनी प्रकृतिर्यथा—तत्तद्देशीयानां ते ते रोगविशेषाः प्रादुर्भवन्ति। यथा वङ्गदेशे एव कालाआजार (Kaloazar) मलेरिया-मसूरिकाप्रभृतयो व्याधयः उत्पद्यन्ते, प्रायो बलवन्तश्च भवन्ति। 'नहरुआ' नामव्याधिः प्रायो राजपूतानाप्रान्त एव प्रादुर्भवति। श्लीपदश्च वाराणस्यादिषु अनूपप्रायेषु देशेषु विकासमाप्नोति इति।

कालानुपातिनी प्रकृतिर्यथा—प्राक्तना हि प्रायेण निरातङ्का आसन् संयमित्वात्! अधुनातनाश्च असंयमितया बहुविधव्याधिपरीतकलेवराः। अयं संयमश्च कालप्रभावजन्यो बहुशो दर्शनात्, न हि दृष्टेरनुपपन्नं नामेति व्यवहारश्च।

वयोनुपातिनी प्रकृतिर्यथा—वयश्च बालमध्यस्थविरभेदेन त्रिधा। तत्र तत्तद्विशेषवयसि तत्तद्व्याधीनामुत्पत्तिर्नियता। यथा अजगल्लिकोत्फुल्लिकातालुकण्टकप्रभृतयो बाल्ये, शुक्राश्मरीफिरङ्गोपदंशादयो यौवने, पक्षाघातादयः प्रायो वार्धके, इति।

प्रत्यात्मनियता प्रकृतिर्यथा—सन्ति केचिद् येषां रक्तिद्वयकुनैनसेवनेनापि शरीरे स्फोटादयो जायन्ते। अन्येषां तु माषकत्रयमपि न दोषावहमिति।

२ विकृतितः परीक्षेत—अत्र विकृतिर्विकारः। तत्र विकारं हेतुदोषदूष्यप्रकृतिदेशकालबलविशेषैर्लिङ्गतश्च परीक्षेत। न हि हेत्वादीनां बलविशेषपरिज्ञानमन्तरा व्याधिबलविशेषोपलब्धिः। यस्य हि व्याधेर्दोषदूष्यप्रकृतिकालबलसाम्यं भवति—हेतुलिङ्गबलं च महत् स व्याधिर्बलवान् भवति। तद्विपर्यये च क्षीणबलः। मध्यबलस्तु दोषादीनामन्यतमसामान्यात् हेतुलिङ्गमध्यबलत्वाच्चेति।

३ सारतश्च परीक्षेत—तत्र सारो हि नाम विशुद्धतरो धातुः। धारणात् धातुरिति सत्त्वमपि इह धातुशब्देनोच्यते। स च त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वविभेदेन अष्टविधः। तैश्च सारविशेषैः परिज्ञातैः, महाशरीरत्वान्महाबलोऽयमल्पबलश्चायं कृशत्वादिति भिषग्विमोहो न स्यात्। लक्षणानि च तेषां सारविशेषाणामाकरे द्रष्टव्यानि।

४ संहननतश्च परीक्षेत—संहननं हि संघातः। शरीरावयवसंघटनमित्यर्थः। तत्र समसुविभक्तास्थिसुबद्धसन्धिसुनिविष्टमांसशोणितं शरीरं सुसंहतं भवति। सुसंहतशरीराश्च पुरुषा बलवन्तः विपर्ययेणाल्पबलाः, मध्यमत्वाच्च संहननस्य मध्यबलाः इति।

५. प्रमाणतश्च परीक्षेत—तत्र प्रमाणं नाम सर्वतोभावेन अङ्गप्रत्यङ्गविभागेन वा उत्सेधविस्तारायामैः कृत्वा स्वाङ्गुलिभिः शरीरस्य मानं प्रमाणम्।

तच्च चरकादिग्रन्थेषु बहुविस्तरेण प्रतिपादितम्। ततोऽधिकं हीनं वा निन्दितम्। तत्र प्रमाणवति शरीरे आयुर्बलमोजःसुखमैश्वर्यं वित्तं च इष्टाश्चापरे भावा भवन्त्यायत्ताः।

६ सात्म्यतश्च परीक्षेत—सात्म्यं नाम तत् यत्सातत्येनोपसेव्यमानमुपशेते। तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च ते बलवन्तः क्लेशसहाश्चिरजीविनश्च भवन्ति। रूक्षसात्म्याः-पुनरेकरससात्म्याश्च प्रायोऽल्पबलाः क्लेशसहा अल्पायुषोऽल्पसाधनाश्च भवन्ति—व्यामिश्रसात्म्याः पुनर्मध्यबलाः।

७ सत्वतश्च परीक्षेत—सत्त्वं हि मनः, तच्च आत्मसंसर्गात् शरीरं तन्त्रयते-तत् प्रवरावरमध्यभेदात्रिविधम्-तत्र प्रवरसत्त्वजुषः पुरुषा महत्तीष्वपि निजागन्तुव्यथासु अविचलितधियोऽदीनाश्च, मध्यसत्वास्तु परदृष्टान्तानात्मनि आरोपयन्तो वेदनां सहन्ते, अवरसत्वास्तु-महाशरीरा अपि सन्तः स्वल्पानामपि वेदनानामसहा भवन्ति।

८ आहारतश्च परीक्षेत—अभ्यवहरणशक्त्या, पाचनशक्त्या आत्मीकरणशक्त्या च आहारशक्तिः परीक्षणीया, आहाराधीनं हि बलं चायुश्च।

९ व्यायामशक्तितश्च परीक्षेत—व्यायामशक्तिरपि कर्मशक्त्या परीक्ष्या, कर्मशक्त्या हि अनुमीयते बलत्रैविध्यं प्रवरावरमध्यरूपम्।

१० वयस्तश्च परीक्षेत—कालप्रमाणविशेषापेक्षिणी हि अवस्था वय उच्यते। तद् यथा-स्थूलभेदेन त्रिविधं बालं मध्यं जीर्णमिति। तान्येतानि प्रकृत्यादीनि वयोऽन्तानि सम्यक् परीक्ष्य कृता चिकित्सा नूनं सफला भवत्येवेति नात्र संशयः।

नव्यास्तु रोगिपरीक्षां वाऽन्यां न मन्यन्ते। तथा च तत्परीक्षणप्रकारः—तत्र वयो, लिङ्गम्, व्यवसायो, विवाहितत्वाविवाहितत्वे-वासस्थानं, कौलिकवशवर्तिता-पूर्वेतिहासवर्तमानव्याधेः, पूर्वं रोगिणः स्वास्थ्यपरिचयो, वर्तमानपीडनोत्पादनप्रकारः, आतुरशरीरव्यवस्था चेत्येतैर्भावैः परीक्षणं क्रियते।

१ तत्र वयः—सन्ति हि केचिदेवंविधा व्याधयो ये वयोभेदेन विभिन्नस्वरूपतामापद्यन्ते।

किं च केचिद् व्याधयो वयोविशेषेष्वेव प्रादुर्भवन्ति। यथा रिकैट्स (अस्मिन् रोगे बालानामस्थिमार्दवं जायते। तेन शिशूनां हस्तपादादिषु अवयवेषु आकृतिविसदृशता सम्पद्यते। अयं च रोगः षण्मासतो द्विवर्षपर्यन्तमेव प्राकट्यमेति) एकूथियोसिसप्रभृतयः शैशवे। हरिद्रोग (Chlovosis) सिफलिस्प्रभृतयस्तारुण्ये। धमन्यर्बुदप्रभृतयः प्रौढावस्थायाम्। एवं एपोप्लेक्सी-(Angina pectosis) (विशेषप्रकारकमुरःशूलम्)-प्रभृतयो वार्धके संभवन्ति। एवं च केचिदामया वयोभेदेन सांघातिकस्वरूपतां सामान्यस्वरूपतां वाऽऽपाद्यन्ते। यथा अतिबाल्यकाले अत्यन्तवृद्धावस्थायां च कैशिकश्वासनलीप्रदाहः प्रायः सांघातिकतां भजते। तथा च शैशवे, अपस्मारजन्यद्रुताक्षेपः (Epileptie Connubtiens) चिन्ताया अकारणं भवन्नपि वार्धके मारको भवति।

२. लिङ्गभेदेन परीक्षणं यथा—केचिद् व्याधयः स्त्रीषु, केचिच्च पुरुषेष्वेव विशेषेण प्रादुर्भावं लभन्ते। यथा हिस्टीरिया—कोरिया, क्लोरोसिसप्रभृतयः स्त्रीष्वेव। शुक्राश्मरी-शूकदोषप्रभृतयः पुरुषेष्वेव प्रायोभाविनः।

३. व्यवसायतः परीक्षा—यथा अलसपुरुषापेक्षया व्यायामनित्यः कर्मठश्च पुरुषोऽधिकं स्वास्थ्यमश्नुते। भवति च व्यवसायविशेषापेक्षी केषांचिद् रोगाणां प्रादुर्भावः। यथा—येषां हि व्यवसाये मस्ति-

क्शक्तिरधिकं व्याप्रियते ( यथा-मन्त्रिगणन्याया-धीशाध्यापकनेतृगणाः ) तेषां हृदयफुफ्फुसव्याधयो विशेषेण जायन्ते । एवञ्च न्युब्जभावेनावस्थानशीलानां रथकार-सूचिकापादुकानिर्मातृणामन्त्रपीडा विशेषतो भवति । पाषाणशिल्पिनामिङ्गालखनिषु कार्यकर्तृणां फुफ्फुसवेदनाः, मुद्रापणयन्त्रेषु श्रमोपजीविनां सीसविषम्, हस्ताङ्गुल्याघातश्च ( Poraigsis )-कागदरञ्जकानां गौरीपाषाणविपलक्षणानि च प्रादुर्भवन्ति । धात्रीचिकित्सकप्रभृतिषु तत्तत्संक्रमणशीलजीवाणुजन्यरोगस्योपचारात् सिफलिस्—मसूरिका (Small pox ) प्रभृतयो व्याधयः संक्रामन्ति । अतो रोगिणो व्यवसायेनापि रोगपरीक्षायां प्रभूतसाहाय्यं भवति ।

४ विवाहितत्वाविवाहितत्वे—विवाहितत्वे, उभयोः सहवासे जननेन्द्रियाणां क्रियावृद्धिः । ततश्च दम्पत्योरेकतरे स्पर्शाक्रामकव्याधिना ग्रस्ते, अन्यतरस्मिन्नपि तत्संक्रमः संभावनीयः । स्त्रीणां विषये–कति सन्ततयः, कियन्तश्च गर्भस्रावाः । प्रतिगर्भस्रावं च कियान् रक्तस्रावः, इति सम्यगवबुद्धे बलाबलं व्याधेः, रोगिणः प्रतिकारक्षमत्वं चानुमितं भवति ।

५–वासस्थानम्–वासस्थानावगतौ अयं पुरुषो यद्देशीयस्तत्र देशे अमुको रोगो ( प्लेग—विसूच्यादिः) जनपदोध्वंसकत्वेन वर्तते, अतोऽयमपि पुरुषस्तेन रोगेण पीडितः स्यादित्यवगम्यते । किं च ते ते रोगाः तेषु तेषु देशविशेषेष्वेव विकासमाप्नुवन्ति । यथा-काला-आजारनामव्याधिर्वङ्गभूमौ । यलोफीवर-( पीतज्वरः ) चीनदेशे प्रायोभावी । किं च स एव व्याधिः पत्तन-पल्लीग्रामादिवासस्थानभेदेन, प्रबलहीनतामापन्नः प्रत्यक्षीभवति ।

६ कौलिकवशवर्तिता—यस्य कुलस्य कश्चित् पूर्वपुरुषः केनचित् कुलानुवर्तिना व्याधिना ग्रस्तः, तस्य कुले सर्वैर्भावैरवयवेन वा स व्याधिरनुवर्तते । यथा साक्षेपश्वासकास-रक्तस्राव-कुष्ठादिव्याधयः । किं च दृश्यते-यत्-दम्पत्योर्मध्ये-पतिः केनचित् कुलानुगामिना मधुमेहकुष्ठप्रभृतिना रोगेण पीडितः, तस्य स्त्री चेत् बलवती रोगप्रतिकारक्षमा च, तदा तयोः सन्ततिर्वंशावलीक्रमेण अनुवर्तनशीलैरपि रोगैर्न पीड्यते । तत्र कुलानुगामिनो रोगा द्विविधाः । तत्राद्येऽस्मिन् प्रकारे रोगाणां विषं सन्ततिशरीरे लभ्यते । यथा—सिफलिस्-रोगस्य ।

द्वितीये च प्रकारे—रोगाणां विषं तु शरीरे न लभ्यते किन्तु शरीरे रोगप्रवृत्तिर्दृश्यते- यथा यक्ष्म—उन्माद—प्रभृतयः ।

कचिच्च रोगान्तरमपि दृश्यते यथा–हिस्टीरिया-रोगपीडितायाः–कस्याश्चित् सन्ततिरपस्मारेण पीडिता दृश्यते ।

७ वर्तमानव्याधेः पूर्वं स्वास्थ्यपरिचयः–स्वास्थ्यविषये प्रथमतः इति ज्ञातव्यं यद् वर्तमानव्याधेः पूर्वं रोगिणः स्वास्थ्यं कीदृगासीत् । कास्काः पीडा अधुना वर्तन्ते । का च तासां पीडयति रोगिणं भृशम् । यदि चिकित्सको रोगिवर्णनद्वारा यकृत्स्फोटमनुमिमीत तदा प्रष्टव्यम्–आमातिसारः कदाचिज्जातो न वा, यदि चेत्स रोगी पूर्वमामातिसारपीडित आसीत्–तदा यकृत्स्फोटस्याधिकं सम्भावना । एवमेव चर्मपरीक्षया यदि सिफलिसविषयकमनुमानं भवेत् तदा स प्रष्टव्यः,–'यत्तव शरीरे कियता कालेन अस्य रोगस्यास्तित्वम् । 'न तु प्रष्टव्यमयं रोगः कदाचिदभून्न वा' इति । यतः सिफलिसरोगविषये प्रायः आतुराः स्वीयं वृत्तान्तं गोपयितुमिच्छन्तोऽसत्यभाषणादपि न बिभ्यति । अथ च स्वास्थ्यविषये इत्यपि ज्ञातव्यम्–यत्के के रोगाः पूर्वमुत्पन्नाः । अस्य प्रयोजनं ह्येतत्–यत्केचिद् व्याधयः प्रायः

एकवारं प्रादुर्भूय न पुनर्विकासं लभन्ते। यथा—मसूरिका-( Small-pox ) नाम व्याधेः, वैरियोलावीरा-वैरियोलासीला—नामानौ द्वौ भेदौ आन्त्रिकज्वरः-कुकुरकासः—टायफिसज्वरप्रभृतयः। केषांचिच्च व्याधीनामेकदोत्पादे रोगस्य पुनरपि प्रवृत्तिर्जायते, अर्थात् वारं वारं रोग उत्पद्यते शाम्यति च। यथा—निमोनिया-श्वासप्रणालीशोथः—अर्धावभेदकप्रभृतय.—

८ वर्तमानपीडोत्पादनप्रकारः—पीडा कदा कथं चोत्पन्ना इति ज्ञानमपि रुग्विनिश्चये आवश्यकम्। यतः सति हि तस्मिन् रोगस्य तारुण्यं पुराणत्वं वा अवगतं भवति। तेन चावगतेन तरुणव्याधिः सहसा आरभ्य स्वल्पेनैव कालेनोपरमति। उपरमश्च तस्य स्वास्थ्ये मृत्यौ परिणमति। यथा क्रुपासनिमोनियाप्रभृतयः। तथा च व्याधेस्तारुण्ये पुराणत्वे वा विनिश्चीयमाने इदमप्यवधेयम्—यद् वर्तमानस्तरुणो व्याधिः कस्यचित् पुराणस्य व्याधेरुपद्रवत्वेन वर्तते, आहोस्वित् स्वतन्त्रः? अस्योदाहरणम्—यत्पुरातनपाकाशयविदारणवशतोऽन्त्रावरणप्रदाहः। तथा च पुराणवृक्कशोथस्योपद्रवस्वरूपस्तरुणवृक्कशोथः इति। अस्य ज्ञानस्य प्रयोजनं च मूलरोग एव प्रधानत्वेन चिकित्स्यः। तत्तद्विशेषावसरेषु एवमपि दृश्यते यद् वर्तमानव्याधेर्विकसितावस्थायां मूलभूतरोगोऽन्तर्धत्ते। तदा च वर्तमानपीडा एव रोग इति चिकित्सको भ्राम्यति। तस्मिन्नवसरे 'वर्तमानपीडा पूर्वं कथमुत्पन्ना? तत्र च कानि परिवर्तनानि जातानि' इति ज्ञानेन रोगविनिश्चये साहाय्यं भवति। यथा-आन्त्रिकज्वरटायफसज्वरनाम्नोर्व्याध्योः सामान्यतो लक्षणसाम्ये, यदि ज्वरः प्रथमसप्ताहे १०३ डिग्रीतोऽधिको नास्ति तदा (Typhus) टायफसज्वरसंदेहो व्यपगच्छति। यदि चेत् १०३ डिग्रीतोऽधिकस्तदा आन्त्रिकज्वरो नास्ति इति विनिश्चयो भवति। एवमेव कस्मिंश्चिद् रोगे वेदनायाः सहसाक्रमो भवति। क्वचिच्च वेदना शनैः शनैर्वर्धते। तत्र सहसाक्रमणप्राप्तवेदनाया विनिश्चये स्वभावत एव शनैः शनैर्वर्धमानपीडायाः संदेहोऽपैति। यथा-वृक्काश्मर्यां ज्ञायमानायां हेत्वन्तरेण जातस्य कटीशूलस्य संदेहोऽपक्रामति। एवं च रोगविनिश्चये साहाय्यं भवति।

आतुरशरीरव्यवस्था—तत्रातुरशरीरव्यवस्था द्विविधा सार्वाङ्गिक-स्थानिकभेदात्। सार्वाङ्गिकव्यवस्थायाम् शरीरदैर्घ्यम्, अनुप्रस्थभावः,-स्थौल्यम्, शरीरभारः—शरीरसंघटनम्, देहे च पाण्डुता-शोथ-नीलिमा-पूर्वाघातादीनि अस्वाभाविकचिह्नानि, मुखमण्डलभावाः,-रोगिणोऽवस्थानावस्था उत्ताप इत्येते भावाः परीक्ष्यन्ते। तत्र शरीरभारः—अस्ति न वा शरीरभारस्य दैर्घ्येण प्रस्थेन वा साकं सामञ्जस्यम्, देहभारस्य ह्रासः क्रमशो भवति न वा, इति ज्ञानमपि आवश्यकम्। केषुचिद्रोगेषु शरीरभारस्य ह्रासः शीघ्रं भवति। यथा-यक्ष्म-मधुमेह-कैन्सर (Cancer) प्रभृतिषु। केषुचिद्रोगेषु सप्ताहान्तरम्, केषुचित्पक्षान्तरं मासान्तरं वा शरीरभारो मेयः। अस्य प्रयोजनं हि शरीरपोषणं साधु भवति न वेति ज्ञानम्। प्रकृतौ तु सामान्यतः शरीरभारस्य दैर्घ्येण प्रस्थेन च साकं सामञ्जस्यं भवति।

मुखमण्डलभावाः—मुखमण्डलभावेनापि बहूनां रोगाणां परीक्षणं भवति। यथा—विषूचिकायां मुखमण्डलं पिच्चितमतीव दीनं शवस्येव च प्रतिभाति। आन्त्रिकज्वरे मुखं मलिनं शून्यदृष्टियुक्तं नेत्रे चार्धमुद्रिते भवतः। द्विकपाटीयपीडायां गण्डदेशो नीलाभः कृष्णवर्णो वा मुखमण्डलं स्फीतं मलिनं च, एवं श्वासकृच्छ्रे चक्षुषी पूर्णोन्मीलिते मस्तकं च पश्चान्नतं भवतीति।

**अवस्थानावस्था**—रोगिणः स्थितिविशेषेणापि रोगविशेषस्य परिज्ञानं भाविफलनिर्णयश्च भवति। यथा—यदि रोगी एकपार्श्वेनैवानवरतं शेते, अपरपार्श्वशयनेन च दुःखमनुभवति, तदा येन पार्श्वेन शेते तत्पार्श्वीयफुप्फुसविकृतिरनुमिता भवति। यथा—निमोनियारोगे। यदि रोगी सर्वाङ्गानि संकोच्य एकपार्श्वेन शेते तदा मस्तिष्काघातोऽनुमीयते। यदि आसीनः सुखं लभते शयानस्तु दुःखीयति-तदा तमकश्वास इति निर्श्चीयते। निमोनिया—तरुण-फ्रेनाइटिस-प्रभृतिरोगेषु रोगिणो निष्प्रयोजनमितस्ततो हस्तपादसंचालनं सांघातिकलक्षणम्।

**उत्ताप**:-मांसाशिनां शरीरस्य प्राकृत उत्तापः प्रायः ९८-६ तापमानांशो भवति। शाकाहारिणां पुनः ९७-६ सामान्यतो भवति। प्राकृतोत्तापे वृद्धिर्हानिर्वा विकृतिः। स चाघातेन तत्तद्रोगजन्यविषैश्च वर्धते। यथा-यक्ष्म-निमोनिया—अभिघातज्वरादिषु। तापहानिश्च रक्तस्थजलभागक्षयेण मस्तिष्कीयौष्ण्योत्पादककेन्द्रस्य कर्मनाशात् दौर्बल्येन वा भवति। यथा विशूचिकादिषु। केषुचिद्रोगेषु उत्तापबाहुल्यं न शङ्कायाः कारणं जायते। यथा-मेलेरियाज्वरे, किन्तु सन्तते मलेरियाज्वरवदुत्तापवृद्धिः शङ्कां जनयति। येषु रोगेषु संतापवृद्धिः प्राकृती तेषु संतापावृद्धिर्मङ्गलावहा। यथा-यक्ष्मणि, येषु च सन्तापहानिः प्राकृती तेषु सन्तापवृद्धिः शुभलक्षणम्। यथा—विशूचिकायाम्।

**अथ स्थानिकपरीक्षा—**

स्थानिकपरीक्षायां च—श्वासप्रश्वास-रक्तसंचालन-परिपाकयन्त्र—मूत्रयन्त्र—जननेन्द्रियसंस्थान—स्नायुविधान-संचलन—चर्माणीत्येते भावाः परीक्ष्यन्ते। तद् यथा—

(क) श्वासप्रश्वाससंस्थानम्—तत्र दर्शनेन वक्षस आकृतिः क्रियाश्च द्रष्टव्याः। स्पर्शनेन—स्वरोत्कम्पनम्। श्रवणपरीक्षया श्वासप्रश्वासयन्त्रस्य स्थायित्वम्, प्रकारः, स्वभावः, आगन्तुकशब्दः, वातपूतिध्वनि', इत्येते ज्ञायन्ते।

(ख) रक्तसंचालनविधानम्—दर्शनेन हृत्प्रदेशाकारावयवदर्शनम्। स्पर्शेन—हृदोऽभिघातस्थानं च स्वभावश्च। समाघातेन—मन्दो निनादितो वा प्रतिघातशब्दो हृत्पिण्डसीमा च। श्रवणपरीक्षया—द्विकपाट-त्रिकपाट-बृहद्धमनी-फुप्फुसीयधमनी,—हृदयप्रदेशानां शब्दः परीक्ष्यते।

(ग) परिपाकयन्त्राणि—तत्र दर्शनेन-ओष्ठ-दन्त-दन्तवेष्ट- जिह्वा-लालारस—तालु—उदराध्मानमलादीनि। स्पर्शेन—उदरप्राचीर—उदराभ्यन्तरीययन्त्राणां यकृत-प्लीहान्त्रादीनां प्राकृती वैकृती वा अवस्था। समाघातेन—पूर्णगर्भः शब्दः, शून्यगर्भो वा, तस्य सीमा-यकृतादियन्त्राणां सीमानिर्णयः। प्रश्नेन च-क्षुधा-पिपासा, अनशनाव थाया अनुभवः, मुखास्वादः, विष्टम्भः, उदरशूलम्, उदरे भारबोधः, हृल्लासः, इत्यादयो भावा ज्ञातव्याः।

(घ) मूत्रयन्त्रम्—वृक्के-मूत्रवहस्रोतसोः-मूत्राशये वा वेदना, प्रस्रावे परिमाणम्-वर्णः-गन्धः-अम्लक्षारान्यतरा प्रतिक्रिया-तरलत्वम्-गाढत्वमित्यादयो भावाः, मूत्रयन्त्रविषये परिज्ञेयाः।

(ङ) जननेन्द्रियसंस्थानम्—तत्र पुरुषजातौ अण्डग्रन्थि, प्रोस्टेटग्रन्थि—पौरुषग्रन्थिर्वा—मूत्रप्रणालीप्रभृतीनामवस्था। स्त्रीजातौ तु मासिकर्तुः-कस्याऽपि तरलद्रव्यस्यास्वाभाविकं निःसरणम्, योनिगर्भाशययोश्च परीक्षा। डिम्भाशय-( ovaries )-परीक्षा च।

(च) स्नायुविधानम्—(अ) चैतन्यविधायकक्रिया—तत्र ज्ञेयम्-स्पर्शबोधः-उत्तापः, नानाविध-

वेदनानुभवः, इन्द्रियाणां स्वार्थग्रहणसामर्थ्यं तद्विरहो वेति। (इ) संचलनक्रिया—तत्रेदं ज्ञेयम्—यान्त्रिकप्रतिफलितक्रिया, चर्मप्रतिफलितक्रिया, अनैच्छिकपेशीनां (हृदययकृत्प्लीहादिषु वर्तमानानाम्) अन्योन्यं समनियोगता—इति। (उ) रक्तप्रणाल्याः संचालनक्रिया पोषणक्रिया च। तत्र ज्ञेयम्-स्थानिक-रक्तसंग्रहः-मलिनता, शोथः, पच्यमानक्षतप्रभृति। (ए) मस्तिष्कक्रिया—तत्र ज्ञेयाः-बुद्धिवृत्तिः, अलीकज्ञानम्, जड़ता, अचैतन्यम्, स्मरणशक्तिः, धारणा, निद्रा-इत्यादि। (ऋ) सञ्चलनविधानम्—तत्र परीक्ष्याः-अस्थिवेदना, सन्धिवेदना, पेशीनां दृढता शैथिल्यं वा, रक्तसंचयश्च, इत्यादि। (लृ) चर्मपरीक्षा-तत्रेमे ज्ञातव्या भावाः—शुष्कता आर्द्रता वा, मेदः, संचयः शीर्णता, शोथः, अरूंषि, संकोचप्रसारयोः शक्तिः, इत्यादि।

ता एताः परीक्षाः प्राच्यप्रतीच्याचार्यैः समुद्दिष्टा याः सम्यग्विविच्यैव रोगं याथातथ्येन विनिश्चेतुं प्रभवति। तदनन्तरं च प्रयुक्ता चिकित्सा सफला भवत्येवेति नात्र शङ्कावसरः।

ये तु धमनीस्पर्शमात्रेणैव व्याधेः पूर्णं ज्ञानं भवति, नास्त्यावश्यकता दर्शनप्रश्नादीनामित्युच्चैः पटहवादमुद्घोषयन्ति। न केवलं ते व्याधीनामसम्यग्ज्ञानादातुरानतिपातयन्ति, अपि तु रोगिणामायुर्वेदविषयिणीं श्रद्धां शिथिलयन्ति। तथा व्यपगतरजस्तमोभिरबाधितत्रिकालज्ञानवद्भिर्महर्षिभिरुपदिष्टं तमेतमायुर्वेदमपि, आयुर्वेदे कौशल-(art) मात्रदृशां पाश्चात्यविदुषां कटाक्षविषयतामापादयन्ति।

ततस्तेषां "धमनीस्पर्शमात्रेणैव व्याधिर्विज्ञायते" इत्येतद्वचनमनार्षत्वात् प्रत्यक्षविरोधाच्च हेयम्।

तत्र, अनार्षत्वं च "षड्विधो हि रोगाणां विज्ञानोपायस्तद्यथा-पञ्चभिः श्रोत्रादिभिः प्रश्नेन च" इति सुश्रुतवचनात्।

"त्रिविधं तु खलु रोगविज्ञानं भवति। तद्यथा आप्तोपदेशः, प्रत्यक्षमनुमानं च" इति चरकवचनाच्च स्फुटमेव।

प्रत्यक्षविरोधसाधिका चातुरातिपातनस्वरूपा विप्रतिपत्तिः पूर्वं प्रतिपादितैव।

पाश्चात्यपथप्रदर्शितरोगविज्ञानप्रणालीनां तु पूर्वोक्तप्रकृत्यादिदशविधार्षपरीक्षाप्रणालीष्वेव बहुशः समावेशः। अनिवेशनीयानां च कासांचित् प्रत्यक्षसिद्धत्वाद् युक्तिसिद्धत्वाच्च मान्यार्हत्वमस्त्येव। तथा च चरकवचनम्—"न चैव ह्यस्ति सुतरामायुर्वेदस्य पारम्'— इत्युपक्रम्य'वृत्तसौष्ठवमनसूयता परेभ्योऽप्यागमयितव्यम्" इतिपर्यन्तम् इति।

किं च ताः परीक्षा अपि आप्तागमेऽन्तर्भवन्ति। तथा च महर्षिरात्रेयः-"तत्राप्तागमस्तावद्वेदः, यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः" इति।

तस्मात् प्राङ्निर्दिष्टप्राच्यप्रतीच्योभयशास्त्रप्रतिपादितरोगपरीक्षाभिरेव यथायथं चिकित्सासाफल्यप्रदो रोगविनिश्चयो भवतीति सर्वा अपि परीक्षा रोगविनिर्णयार्थं प्रयोजनीयाः स्युरिति भद्रं भूयात्।





पं० श्रीदयानिधिस्वामी आयुर्वेदाचार्यः
ऑनरेरीमैजिस्ट्रेट, हृषीकेश ।



वैद्य श्री मणिरामशर्मा आयुर्वेदाचार्यः
जम्बू ।

# आयुर्वेद-महत्वम्

( लेखकः—सोमदेवशर्मा शास्त्री आयुर्वेदाचार्य इन मेडिसिन एण्ड सर्जरी ( फाइनल )
काशी हिन्दूविश्वविद्यालयः )

[ १ ]

पूषा प्राप नवान् रदाननुपमान् यस्य प्रसादात्पुरा
यक्ष्मग्रस्तकलेवरो हिमकरः स्वास्थ्यञ्च लेभे पुनः।
वृद्धोऽपि च्यवनो युवा समभवद् वेदस्य यस्यायुषो
योगैस्तेन महत्वमस्य विपुलं व्याप्तं स्वयं भूतले ॥

[ २ ]

वेदानामुपवेद एष कथितो नित्यत्वमप्यस्य च
प्रोक्तं सादरमक्षि*पादमुनिना न्यायाख्यशास्त्रे निजे ।
सर्वेष्वेव युगेषु यस्य फलदैर्योगैः प्रजा लेभिरे
स्वास्थ्यं तेन महत्वमस्य विपुलं व्याप्तं स्वयं भूतले ॥

[ ३ ]

वेधोदत्तपरम्पराप्रकरणाद् †दस्रावधीत्याथ तौ
देवेन्द्रं सुधियं महामतिमतामध्यापयामासतुः ।
आनीतस्तत एष पुण्यमतिना मध्ये मुनीनां भर-
द्वाजाख्येन महत्वमस्य च पुनः प्रोक्तं स्वयं भूतले ॥

[ ४ ]

अष्टाङ्गोऽयमतीवयुक्तिसहितो लेभे महद्गौरवं
शल्येऽद्यापि यदीय‡गूढरचना जागर्ति धन्वन्तरेः ।
विख्यातश्चरकश्चिकित्सितविधौ सूत्रस्थले वाग्भटो
नैदानेऽस्य महत्वमत्र विततं श्रीमाधवाद् भूतले ॥

[ ५ ]

दुर्दैवाभ्रसमावृते रविनिभे ज्ञानेऽस्य लुप्ते तथा
ह्रासोऽकारि भिषग्भिरस्य च निजे त्यक्ते शुभे कर्मणि ।
पाश्चात्यं मतमाश्रयत् पुनरथो शारीरशास्त्रे हितं
विज्ञानेन महत्वमस्य सुधियः! प्रख्याप्यतां भूतले ॥



---

* गौतममुनिना †अश्विनीकुमारौ ‡धन्वन्तरेरुपदेशस्वरूपा सुश्रुतसंहिता ।

# रसशास्त्रम्

( निबन्द्धा—वैद्यश्रीमणिरामशर्मा आयुर्वेदाचार्यः, प्रधानायुर्वेदाध्यापकः—
श्री० ह० रा० रू० संस्कृतकालेजस्य, रामगढ़ )

गुरुर्माता गुरुस्तातो गुरुरिष्टं गुरुर्धनम् ।
गुरुर्विद्या गुरुर्बन्धुस्तस्मै श्रीगुरवे नमः ॥

## रसशास्त्रस्यावश्यकता—

दृश्यते हि परिवर्त्तनशीले पाञ्चभौतिके संसारे प्राकृतिकनियमेनैव जडचेतनभूतानां न्यूनाधिक्येन गुणपरिवर्त्तनम् । तत्त्वमेवैतद्यत्प्रलयान्ते शान्तायामुर्वराभूमौ समुत्पन्नान्यन्नादीनि बलीयांसि भवन्ति । अद्यत्वेऽप्येतद्दृष्टिपथमायाति यत्कृषकैरफालकृष्टा वर्षं वर्षाधिकं यावद्भूमिः पुनरुप्ता बहुफलवती भवतीति । नैकस्मिन् वर्षे वारं वारं फालकृष्टायां तादृशि बलवन्ति जायन्त इति विदितमेव चक्षुष्मताम् । किं बहुना, कार्यानुमेयानां धर्माणामप्येतेनैव नियमेन परिवर्त्तनं जातं, यथा—कृते युगे धर्मस्य चत्वारः पादास्त्रेतायां त्रयो द्वापरे द्वौ कलियुगे चैक इति परिवर्त्तनं चरके सुस्पष्टीकृतं तद्यथा— "आदिकाले ह्यदितिसुतसमौजसोऽतिविमलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्मयज्ञविधिविधानाः शैलसारस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबलजवपराक्रमाश्चारुस्फिचोऽभिरूपप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्जवानृशंस्यदानदमनियमतपउपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषः । तेषामुदारसत्त्वगुणैः कर्मणां धर्माणां चाचिन्त्यत्वाद्रसवीर्यविपाकप्रभावगुणसमुदितानि प्रादुर्बभूवुः शस्यानि सर्वगुणसमुदितत्वात्पृथिव्यादीनां कृतयुगस्यादौ । भ्रश्यति तु कृतयुगे केषाञ्चिदत्यादानात्सांपन्निकानां सत्त्वानां शरीरगौरवमासीत् । शरीरगौरवाच्छ्रमः, श्रमादालस्यम्, आलस्यात्सञ्चयः, सञ्चयात्परिग्रहः, परिग्रहाल्लोभः प्रादुरासीत् । ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात्कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः । ततस्त्रेतायां धर्मपादोऽन्तर्धानमगमत् । तस्यान्तर्धानाद्युगवर्षप्रमाणस्य पादह्रासः, पृथिव्यादेश्च गुणपादप्रणाशोऽभूत् । तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्यरसवीर्यविपाकप्रभावगुणपादभ्रंशः । ततस्तानि प्रजाशरीराणि हीयमानानि हीयमानगुणपादैर्हीयमानगुणैश्चाहारविहारैरयथापूर्वमुपष्टभ्यमानाग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तानि । अतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति ।" भवति चात्र—"युगे युगे धर्मपादः क्रमेणानेन हीयते । गुणपादश्च भूतानामेवं लोकः प्रलीयते ।" इति

सिद्धान्तितं प्रकृतिनियमेनैव यत्परिणाममयानामुत्पत्तिमतां चेतनभूतानामधिकं परिवर्त्तनं, जडानां पाषाणादीनां न्यूनमिति । एवं क्रमशो गुणह्रासे सञ्जाते वनस्पत्यादिभेषजसमुदाये सिद्धाचार्यैर्लोके काष्ठादिभेषजापेक्षया गुणबहुलानां रसोपरसानां धातूपधातूनाञ्च प्रयोगपरिकल्पनेनाऽऽदिदेवेन महादेवेन प्रकाशितस्य रसशास्त्रस्य बाहुल्येनाविर्भावः कृतः, यस्य इतः सहस्रवर्षपूर्वं भारते बहवो रसाचार्या लब्धप्रतिष्ठा लब्धप्रसाराश्चासन् ।

### रसशास्त्रस्यार्थः—

रसशब्दस्यानेकेष्वर्थेषु वर्त्तमानत्वेऽपि रसमिश्रित-काष्ठौषधीनां चिरस्थायित्वेन षड्गुणबलिजारितमकर-ध्वजादे रोगहरत्वेन, जारणान्वितेन संस्काराष्टकेन जराव्याधिविध्वंसकत्वेन, सर्वसंस्कारसंस्कृतेरचिन्त्याद्भु-तप्रभावत्वेन च रसायनाचार्यैं रसः पारद एव समनु-गीयते। उक्तं हि—"रसायनार्थिभिर्लोके पारदो रस्यते यतः। ततो रस इति प्रोक्तः स च धातुरपि स्मृतः।" इति। अतः सृष्ट्युत्पत्तौ कारणभूतानां चतुर्विंशतितत्त्वा-नां मध्ये सारभूतो रस इति प्राच्यप्रतीच्यविदो मन्य-न्ते। सोपकरणस्य तस्याभिधायकं शास्त्रं रसशास्त्रम्।

### रसशास्त्रस्य पुरुषार्थचतुष्टयाभिधायकत्वम्—

ते हि सिद्धा उपकरणहीनाय रोगिणे निःशुल्कौ-षधदानेन धर्मप्रदां, प्रभूतधनराशिशालिनां चिकित्सनेन धनदाञ्चेष्टानां विषयाणामुपभोग्यत्वेन च कामदां भौति-कीम्, "यावन्न हरबीजं तु भक्षयेत्पारदं रसम्। ताव-त्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम्।" इति रसार्ण-ववचनेन मोक्षाभिधायिकामाध्यात्मिकोन्नतिमाचक्षाणाः पुरुषार्थचतुष्टयोपजनकत्वञ्चास्य प्रतिपादयन्ति स्म।

### चरके रसप्रयोगाभावः—

प्रायो वर्षसहस्रत्रयात्पूर्वमात्रेयसम्प्रदाये रसमन्तरा धातूनां कतिपयानामुपरसानाञ्च प्रयोगाः क्रियन्ते स्म। "सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा। मनः शिलाले मणयो लवणं गैरिकाञ्जने।" इति चरकव-चनादेवावगम्यते। धातूनां प्रयोगरीतिश्च चरके यथा—

"त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि वापयेत्।
चतुरङ्गुलदीर्घाणि तिलोत्सेधसमानि च॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेनामलकस्य च॥
युक्तानि लेहवत्कुम्भे स्थितानि घृतभाविते।
संवत्सरं निधेयानि यवपल्ले तदेव च॥
दद्यादालोडनं मासे सर्वत्रालोडयन् बुधः।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा॥
प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम्।
एष एव च लोहानां प्रयोगः संप्रकीर्तितः।"

अनेनैव विधानेन "हेम्नश्च रजतस्य च।" इति। उपरसानाञ्च प्रायो धूमपानादिषु व्यवहार इति सुवि-दितमेव वैद्यविद्याविदाम्। केचिदभिदधति यच्चरकेऽपि पारदव्यवहारोऽस्ति, यथा—"गन्धकयोगसुवर्णमाक्षिक-योगादेव। सर्वव्याधिनिवर्हणमद्यात्कुष्ठी रसञ्च निगृही-तम्।" व्याख्यानयन्ति च—निगृहीतो रसो मकरध्वजा-दिरिति। परं प्रक्षिप्तोऽयं पाठः। "सुवर्णं समलाः पञ्चे" ति—उद्देश्यसूत्रेऽनभिधानात्।

### रसचिकित्सायाः प्राधान्यम्—

एवं गच्छति काले रासायनिका आचार्याः स्वर्णा-दिधातून् काष्ठौषधीश्च चिकित्सोपकरणत्वेन मन्यमानाः सकलदुःखपारदस्य पारदस्यैव प्राधान्यं स्वीचक्रुः। अत एव रस-मूलिका-शस्त्रनामधेयासु तिसृष्वपि चिकित्सासु सुखोपभोग्यास्वारोग्यदायित्वेन रसचिकित्सामेवाभिन-न्दन्ति स्म। तद्यथा—

"स्वल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः।" इति

### बौद्धयुगे रसशास्त्रस्य प्रचुरः प्रचारः—

बौद्धयुगे रसशास्त्रस्याधिकः प्रचार आसीदिति युक्त्येतिहासेन चानुमीयते। युक्तिश्चायत्वेऽपि बौद्ध-मतावलम्बिनः पञ्चविधकषायादिकल्पने सूक्ष्मकीटादि-

हिंसां मन्यन्ते, तदपेक्षया वैद्यनिर्मिताल्पमात्रारसादिगुटिकाभक्षणं न दोषावहमिति स्वीकुर्वन्ति। अत एव "स्तम्भे पाटलिपुत्रके" इत्यादिवचनैरनुमीयते यद्बौद्धयुगे रसशास्त्रस्य प्रचुरः प्रचार इति। बौद्धसमये सिद्धाः प्रशंसन्ति स्म रसशास्त्रं यथा—

"साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिना।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते।"

यद्यपि "साधनं न त्वसाध्यानां व्याधीनाम्" इत्यादिवचनैरसाध्यानां साधनं नास्ति तथापि सत्यनियतायुषि रोगिणि रससंस्कारप्रभावो बोध्यः।

### रसे गुणाधानम्—

एतादृशी शक्तिश्च रसे संस्कारैरेव सम्पाद्यते, संस्कारो हि गुणाधानं, गुणाधानेनैव शक्तिर्न त्वाकरजनागादिदोषयुतेऽसंस्कृतपारदे। अतोऽस्मिन् समये प्रौढैः सिद्धै रसवैद्यैः सर्वे संस्कारा विधीयन्ते स्म। अतः पारदसंस्कारसम्पादनमेव सिद्धिमूलं यथा—

"विपिनौषधिपाकसिद्धमेतद्घृततैलाद्यपि
दुर्निवारवीर्यम्।
किमयं पुनरीश्वराङ्गजन्मा घनजाम्बूनद-
चन्द्रभानुजीर्णः।" इति

एवं भौतिकीमाध्यात्मिकीं चोन्नतिं समीहमानैर्व्यपगतरागद्वेषलोभमोहमानैर्लोककल्याणाय कौपीनधारिभिरष्टादशसंस्कारकरणैकत्रतैः रसशास्त्रस्य परं महत्त्वं करामलकवत्प्रत्यक्षं प्रदर्शयद्भिः—"आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः। कपाली मत्तमाण्डव्यौ भास्करः सूरसेनकः।" इत्यादिभिः प्राचीनसिद्धाचार्यैः प्रदर्शितः सिद्धेरुत्कृष्टो मार्गः। इदानीं दुःसाध्या येऽष्टादशसंस्कारास्तदानीं वामहस्तस्य क्रीडनमिव सुसाध्याः प्रतीयन्ते स्म।

### रसानां विचित्राः प्रयोगाः—

अत एव ते रसवैद्या एकनेत्राञ्जनेनार्द्धाङ्गस्य द्विनेत्राञ्जनेन च सर्वाङ्गस्य ज्वरमुत्तारयन्ति स्म। नस्येन संज्ञाप्रबोधनमिच्छाभेदिनेच्छया भेदनं तालभस्मना चासाध्यमपि गलितकुष्ठं साधयामासुः। किं बहुना यथाऽऽधुनिका डाक्टरमहोदया इंजेक्शनप्रयोगेण रोगांश्चिकित्सन्ति तथैव रसचिकित्साप्रचारसमये रसवैद्या अपि इन्जेक्शनविधया सूचीद्वारा रसानां सक्तुकादिविषाणाञ्च प्रयोगै रोगांश्चिकित्सन्तो यशोराशिं लभन्ते स्म। एवं सूचिकाभरणरसादिभिर्विचित्रैः प्रयोगैर्मृतप्रायानपि रोगिणो जीवयन्तः सर्वत्र भारते लब्धप्रसारा विशेषतो राजगृहादौ सम्मानभाजो बभूवुरिति रसेन्द्रचिन्तामणेः समाप्तिश्लोकेन प्रतीयते, यथा—

"अश्रान्तोच्छ्रितसिद्धयोगविभवाः कारुण्यपात्रं रस-
ग्रन्थग्रन्थिलबुद्धयः प्रतिदिनं नन्दन्तु योगीश्वराः।
प्रामाण्यं परिवर्द्धयन्तु भिषजामुद्दामधामश्रियो
राजानः करिदन्तकुन्तकुलिशक्रीडाविरूढद्रुमाः॥"

सूचीद्वारा प्रयोगो यथा—

"विषं पलमितं सूतः शाणिकश्चूर्णयेद्द्वयम्।
तच्चूर्णं सम्पुटे कृत्वा काचलिप्तशरावयोः॥
मुद्रां कृत्वा च संशोष्य ततश्चुल्ल्यां निवेशयेत्।
वह्निं शनैः शनैः कुर्यात्प्रहरद्वयसंख्यया॥
तत उद्घाट्य तन्मुद्रामुपरिस्थशरावकात्।
संलग्नो यो भवेत्सूतस्तं गृह्णीयाच्छनैः शनैः॥
वायुस्पर्शो यथा न स्यात्तथा कूप्यां निवेशयेत्।
यावत्सूच्या मुखे लग्नं कूप्या निर्याति भेषजम्॥
तावन्मात्रो रसो देयो मूर्छिते सन्निपातिनि।
क्षुरेण प्रच्छिते मूर्ध्नि तत्राङ्गुल्या च घर्षयेत्॥
रक्तभेषजसंपर्कान्मूर्च्छितोऽपि हि जीवति।
तथैव सर्पदष्टस्तु मृतावस्थोऽपि जीवति॥"

तथा च-"एतानि सक्तुकाद्यानि वातरक्ते त्रिदोषजे। मोहोन्मादापस्मृतिषु कुष्ठेषु च नियोजयेत्। एतानि सक्तुकाद्यानि वातादौ रक्तोन्मेलनेनोन्मादसन्निपातादौ च प्रयोज्यानि" इति। सर्वे रसवैद्याः पुस्तकस्थान् बहून् विशिष्टरसप्रयोगान् जानन्त्येव किं बहुभिरुदाहरणैः।

रसशास्त्रस्य हीनावस्था—

एवं रसवैद्योन्नतिशालिनि भारतेऽस्माकं दुर्दैववशात्—हिन्दुविद्वेषिणि यवनसाम्राज्ये सुखोदकस्नानाय चुल्ल्यां सहस्रशः प्रज्वालितानि ग्रन्थरत्नानीन्द्रप्रस्थे इति प्रसिद्धमेवेतिहासविदाम्। तत आरभ्य पञ्चनदवास्तव्यैर्वैद्यै रसचिकित्सां विहाय यावनी चिकित्सा प्रारब्धा येदानीमपि प्रचलिता दृश्यते। परं निर्भयै रसग्रन्थान्वेषणतत्परैर्वङ्गनिवासिभी रसचिकित्सा न परित्यक्ता। येषाञ्च महानुभावानामुद्योगेनाद्यापि रसग्रन्थानवलोकयामः।

रसशास्त्रस्य पुनरुज्जीवनप्रक्रमः—

एवं शुष्यमाणं रसशास्त्रतरुं भारतमातुः सुपुत्राः केचन वैद्यराजा यतस्ततः पुस्तकालयेभ्यः सर्वसाधारणालभ्यमानानि रसग्रन्थरत्नानि महता परिश्रमेणानीय मुद्रापयित्वा च सर्वसाधारणप्रचारवृद्ध्या संसिच्य प्ररूढाङ्कुरं वर्द्धयितुमभिलषन्तो दृश्यन्ते। इति

रसशास्त्रस्य सम्बन्धे वैद्यानां कर्त्तव्यम्—

अस्मिन् समये सर्वैर्वैद्यैर्वैद्यसम्मेलनादिषु सङ्घीभूयैका महती रसशाला समुद्घाटनीया, यत्र मकरध्वजादि सगन्धमूर्च्छनं, रसकर्पूरादि निर्गन्धमूर्च्छनं जारणान्विताः पारदस्याष्टौ संस्काराः सावधानतया क्रियेरन्। निखिलैर्वैद्यमहाशयैराबालवृद्धं नियतमूल्यलभ्यानि रसभेषजानीत एव रसशालाया ग्रहीतव्यानि, एवमस्माकं रसशास्त्रं पूर्ववद् रसशास्त्रं भविष्यति। अद्यत्वे कैश्चिद्रसवैद्यैस्तोलकमितस्य मकरध्वजस्याशीतिरूप्यकाणि गृह्यन्ते, कैश्चित् षष्टिः, कैश्चिच्चत्वारिंशत्कैश्चिद्विंशतिः कैश्चित्पञ्चैवेति। एतैः स्वार्थपरायणैः शास्त्रोक्तं पारदकर्म किमपि न क्रियते। परं सूतस्योदारगुणविज्ञापनेन यथाऽस्माकं मकरध्वजो बहुभिः प्रतिष्ठितमहोदयैः सेवितो येनापूर्वो लाभः समजनीतीमं श्लोकार्थं चरितार्थयन्ति यथा—"अजारयन्तः पविहेमगन्धं वाञ्छन्ति सूतात्फलमप्युदारम्। क्षेत्रादनुप्तादपि सस्यजातं कृषीबलास्ते भिषजश्च मन्दाः।" एवं वञ्चकवैद्यानामेतादृशं निन्दितं कर्मानया रसशालया विनंक्ष्यति।

जारणान्विताः पारदस्याष्टौ संस्कारास्त्विमे—

स्वेदनं नाम—काञ्जिकपूरितहण्डिकातलेनास्पृष्टा प्रोच्यमानभेषजकल्कमध्यस्था पारदपोट्टली।

मर्दनं नाम—पारदात्षोडशांशैस्तत्तदौषधैः कुट्टितैर्यथासंभवद्रवैश्च खल्वे मर्दनेन मर्दनम्।

मूर्च्छनं नाम—मर्दनसंस्कारोक्तैरेव भेषजैः पारदस्य नष्टपिष्टत्वापादनम्।

उत्थापनं नाम—उष्णारनालादिना शोधनेन नष्टपिष्टरसस्य पूर्वावस्थापादनम्।

पातनं नाम—डमरुयन्त्रेणोर्ध्वमधस्तिर्यग्वा त्रिधा पातकरणम्।

बोधनं नाम—पूर्वोक्तसंस्कारैः कदर्थितस्य पारदस्य षण्ढभावान्मोचनम्।

नियमनं नाम—संस्कारोक्तभेषजस्वेदनेन चपलत्वनिवारणम्।

दीपनं नाम—तत्तद्भेषजस्वेदनेन ग्रासार्थं दीपनशक्तेरुत्पादनम्।

अनुवासनं नाम—दीपितपारदस्य जम्बीरादिरसे स्थापनम्। अस्यानुवासनस्य तु बोधनभेदत्वादष्टावेव संस्काराः। उक्तं हि रसप्रकाशसुधाकरे—"सूतस्याष्टौ च संस्काराः कथिता देहकर्मणि" इति। एतेषामष्टसंस्का-

राणां फलं कञ्चुकादिजनितकुष्ठगलगण्डादिविनाशकत्वं ज्ञेयम् ! एते संस्काराः सर्ववैद्यैः कर्त्तु शक्यन्ते परं दुःसाध्यायां जारणायामभ्युद्योगो विधेयः ।

जारणा हि नाम-पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थाप्रतिपन्नत्वम् । अयं भावः—कज्जल्यां पारदो न दृश्यते परमूर्ध्वपातनेन स्वरूपावस्थापन्नो भवति, एवं पारदः स्वर्णपत्रं चरति वस्त्रपूतश्च स्वर्णात्पृथग्भवति, एवमुभयत्र पारदस्य पूर्वावस्थाप्रतिपन्नत्वं दृश्यते । परं न त्वियं जारणा, जारणा हि यत्र सम्यग्जीर्णे घनहेमादौ पारदे पातनगालनसंस्कारकरणाकरणयोरपि पूर्वावस्थाप्रतिपन्नत्वमेव दृश्यते न स्वर्णादीनां पृथग्भाव इति ।

भौतिकीमुन्नतिं समीहमानैर्वैद्यैर्जारणान्विता इमे पारदस्याष्टौ संस्कारा विधेया एव । इयतैव रसायनत्वपर्यवसितिः ।

उक्तं हि कलिकाताषष्ठवैद्यसम्मेलनाध्यक्षासनमलङ्कुर्वद्भिर्गुरुचरणैः—

"तत्र रसस्य चतस्रोऽवस्थाः—शुद्धो मूर्च्छितो बद्धो मृतश्च । तत्साधकाश्चाष्टादश संस्कारास्तत्र स्वेदनमर्दनमूर्च्छनोत्थापनपातनबोधननियमनदीपनानुवासनानि शोधनोपयोगीनि । शुद्धश्च रसो मूर्च्छयितव्यो भवति । तत्प्रकाराश्च बहवो वर्णिता रसशास्त्रे । तेषु सगन्धनिर्गन्धभेदेन रससिन्दूररसकर्पूररूपो द्विविध एव प्रयुज्यते प्रायश्चिकित्साकर्मसु । गन्धकजारणञ्च तदुपयोगि बहिर्धूमान्तर्धूमभेदेन द्विविधम् । तत्र बालुकायन्त्रकच्छपयन्त्रभूधरयन्त्रगर्भयन्त्रादिभिरन्तर्धूमजारणं विधीयते । बालुकायन्त्रेण तु बहिर्धूमजारणम् । अन्तर्धूमजारणप्रभावश्च—

"अन्तर्धूमविपाचितशतगुणगन्धेन रञ्जितः सूतः स भवति सहस्रवेधी तारे ताम्रे भुजङ्गे च ।"

इत्थं वर्णितः ।

तथा—"षड्गुणे गन्धके जीर्णे रसो भवति रोगहा ।" इत्यादि । ततश्च गन्धकजारणेन प्रकारान्तरेण वा बुभुक्षितः पारदो बन्धनार्थमुपयुज्यते । तदर्थञ्च हेमाभ्रसत्त्वादिजारणं विधीयते । तत्र च गगनादिग्रासप्रमाणचारणगर्भद्रुतिबाह्यद्रुतियोगजारणाख्यानि कर्माण्युपयुज्यन्ते । जारणञ्च पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थाप्रतिपन्नत्वमित्युक्तलक्षणम् । अभ्रजीर्णस्य लक्षणञ्च रसार्णवे एकादशपटले—

"कपिलोऽथ निरुद्गारी विप्लुषश्चैव मुञ्चति ।
अग्नौ तिष्ठति निष्कम्पो व्योमजीर्णस्य लक्षणम् ।" इति ।

तत ऊर्द्ध्वञ्च रञ्जनसारणक्रामणाख्याः संस्कारास्तदुत्कर्षाधायकाः । ततश्च वेधः शरीरलोहयोरिति ।

अधुना च गन्धकजारणान्तं कर्म प्रायो विधीयते वैद्यैः । तदुत्तराणि च हेमाभ्रसत्त्वजारणादीनि विधातुं तज्ज्ञान्वेषणपुरःसरं महान्तमपि परिश्रममवलम्ब्य रसशास्त्रोक्तसाधकलक्षणमनुसृत्य च प्रयत्नपरैरस्माभिर्भाव्यमित्यादि ।"

तथा चास्यां रसशालायां वैद्यराजा अधः प्रदर्शितविषयाणां निश्चयं कुर्युः ।

तलस्थचन्द्रोदये जारितं स्वर्णमूर्ध्वपातनयन्त्रेण पृथक् क्रियतेऽस्यापृथक्त्वभावे यत्नः । सुवर्णगर्भतलस्थचन्द्रोदयासुवर्णगर्भचन्द्रोदययोः परस्परं गुणभेदः प्रभावभेदश्च । चन्द्रोदय–रससिन्दूर–तालसिन्दूर–ताम्रसिन्दूर–मल्लसिन्दूराणां नियतेषु रोगेषु प्रयोगाः । बहुषु रसेषु विद्यमानेषु विशिष्टानां रसानामन्वेषणं तत्तद्रोगेषु द्रव्यगुणरसवीर्यविपाकप्रभावनिर्देशपुरःसरं प्रयोगरीतिश्च । नवीनानां द्रव्याणां गुणकथने संयुक्तानाञ्च विश्लेषणे सरला रीतिः । द्राक्षरीयचिकित्सायामुक्तानां

नामान्तराणां रसभेषजानामायुर्वेदोक्तरसभेषजैः साम्यसम्पादनं यथा—"केलोमेल" इत्यनेन भेषजेन रसकर्पूरं साम्यमावहति । जर्मनदेशे क्रियमाणानां पारदभेषजानामिव सारल्यमन्वेषणञ्चेति ।

असाधारणां भौतिकीमाध्यात्मिकीञ्चोन्नतिमिच्छद्भिर्वैद्यराजैस्त्वशिष्टा अपि दशसंस्काराः संपाद्याः । उक्तं हि रसेश्वरदर्शने—"अपरे महेश्वराः परेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्यास्थाय पिण्डस्थैर्योपायं पारदादिपदवेदनीयं रसमेव संगिरन्ते । रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन। "संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः।" "आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् । श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ।" अजरामरीकरणसमर्थश्च रसेन्द्र एव । उक्तं हि—"एकोऽसौ रसराजः शरीरमजरामरं कुरुते ।" इति । कथं शरीरमजरामरं करोतीत्याशंक्याह—"अष्टादशसंस्कारवशात्तदुपलब्धिर्भवति" इति । ते हि यथा—"स्वेदनमर्दनमूर्च्छनोत्थापनपातनबोधननियमनसंदीपनानुवासनगगनादिग्रासप्रमाणचारणगर्भद्रुतिबाह्यद्रुतियोगजारणरञ्जनसारणक्रामणवेधना ( भक्षण ) नि ।" इति ।

एवं प्ररूढनवाङ्कुरम् "एकान्तात्यन्ततश्च पुनस्त्रुपायाः खलु हरिहरब्रह्माण इव तुल्या एव संभवन्ति। ज्ञानयोगः पवनयोगो रसयोगश्चेति ।" "तत्राद्ययोः केवलं पक्वकषायाणामपि कथञ्चन साध्यत्वाच्चरमे तु पुनर्भोगलोलुपानामप्यधिकारित्वात्ताभ्यां समीचीनोऽयमिति कस्य न प्रतिभाति ।" इतिवचनेनेह चामुत्र हितकरम्—"रुद्रस्य मूत्रमस्यमृतस्य नाभिः" इत्यथर्ववेदोक्तेन मन्त्रेण "रसशास्त्रोक्तप्रकारेणेश्वरवीर्यस्य रसस्याऽऽसेवनेन हि सिद्धा अजरामरत्वं लभन्ते इति तदभिप्रायेणोक्तं रुद्रस्य मूत्रमसीति" इत्यादि सायणभाष्यवचनेन चोपबृंहितमनाद्यायुर्वेदरसायनाङ्गं परिपोषणीयं रसशास्त्रं नाम ।

---

# आतुरोपचारपद्धतिः।

निबन्धा—भिषग्वरः पं० चन्द्रशेखरशर्मा चौमूंनरेशाश्रितः।



## "आकस्मिकोपचारचातुर्यम् ।"

रात्रौ नववादनावसरे शरच्चन्द्रिकायां मन्सूरीशैलशृङ्गस्थभव्यभवनस्य प्राङ्गणे काचिद् 'बैरिस्टर' कन्या प्राकृतिकसुषमामवलोकयन्ती परिभ्रमति, निम्नाङ्कितञ्च मधुरस्वरेण गायति—

भगवन् ? दयादृगेषा मयि दीयतां दयालो !<br>
अधुनावहेलना मे न विधीयतां दयालो !<br>
करितो न पीनकाया गिरितो गुरुर्न चाहम्<br>
दुरितोपरोधतो मे न निलीयतां दयालो !<br>
विषयाटवीषु बाढं भ्रमितातिदुःखिताहम्<br>
अयि नाथ ! वेदना मे व्यपनीयतां दयालो !<br>
बहुधा भवे भ्रमन्त्या ननु नाथ ! वीक्षितोऽसि<br>
अधुना तु मे समीपान्न निलीयतां दयालो !

निगमैस्तवावबोधे कियदङ्ग ! गीयते स्म
अयि 'मञ्जुनाथ'वाचा कति गीयतां दयालो !

"गीतिवीथिः ।"

गानकाल एव दैववशात्कृष्णवृश्चिको निस्सरति, कन्यायाः पादतलञ्च दशति । वृश्चिकस्य स्पर्शनादेव कन्या सचीत्कारमेवं प्रलपति…"तात रे तात ! मृताहं मृताहम्, न जाने केन दष्टम् ! कन्याया रोदनमाकर्ण्य सर्वे पारिवारिकाः सोद्वेगं धावन्ति, पश्यन्ति च दूरतो गच्छन्तं कालवृश्चिकम् ।

वैरिस्टरः—हा हन्त वृश्चिकेन दष्टेयम्, अधुना किं विधेयम् ?

वैरिस्टरात्मजः—तात ! शीघ्रतरमाहूयतां कश्चित् 'सिविलसर्जनः' ।

इदमाकर्ण्य सेवकमाज्ञापयति—रामदीन ! मोटरेण झटिति 'डाक्टरम्' आनय ।

भृत्यः—'यथाज्ञापयति स्वामी' इत्युक्त्वा मोटरेण गच्छति । किञ्चित्कालानन्तरमेव भृत्यः आगत्य निवेदयति—स्वामिन् ! रुग्णालये, शल्यागारे, डाक्टरभवने च मया 'सर्जनो' बहुधान्विष्टः परं न लब्धः । न जाने पर्यटनार्थं क्व गतः ।

इति श्रुत्वा वैरिस्टरः—अधुना कथमुपचरामः ? इदमाकर्ण्य तत्पत्नी अवोचत्—नाथ ! अद्य सायंकाले परिभ्रमणार्थं यदाहं गता तदा श्रुतम्-कश्चिद् वनस्पतिपरिचायको वृद्धवैद्यः स्वान्तेवासिगणपरिवृतोऽत्र समागतः, यश्चास्माकं निकटवर्त्तिनि भवने तिष्ठति । स एवामन्त्रणीयो भवद्भिः ।

वैरिस्टरः—( सेवकं प्रति )—अयि भोः त्वयेदं श्रुतं न वा ?

सेवकः—स्वामिन् ! इदमप्यनुभूयताम् ।

वैरिस्टरः—तर्ह्यामन्त्रय ।

सेवकः—'यथाज्ञापयत्यार्यः' इत्युक्त्वा बहिर्याति । स्वल्पेनैव कालेन पञ्चाशद्वर्षीयो वैद्यः सेवकेन साकमायाति ।

आयान्तं तं विलोक्य—

वैरिस्टरः प्रणमति, निवेदयति चैवम्—'वैद्यराज ! इयं कन्या कालवृश्चिकेण दष्टा । दष्टोपर्यधुनेयं स्पर्शमात्रमपि न सहते । सततं च विलपति । व्यथया च शरीरमितस्ततः क्षिपति । यदि भवदनुभवे किञ्चिदुभक्षणेनैव शान्तिर्भवेत्तर्हि प्रयुज्यतां तद् द्रव्यम् ।'

वैद्यः—किञ्चित्कालपर्यन्तं धैर्यमवलम्ब्यताम् ! भक्षणस्यापि कावश्यकता, मदोषधिस्पर्शनादेव शान्तिर्भविष्यति । इत्युक्त्वा स्वकीयवस्त्रसंपुटात् किंचित् द्रव्यं निस्सार्य कन्यां प्रति 'वत्से ! हस्तेनेदं संधार्यताम् । शीघ्रतरमेव सुखं प्राप्स्यसि' इत्यकथयत् । कन्या तथैव करोति । किञ्चित्कालानन्तरमेव—

कन्या—'तात ! नाधुना पूर्ववत्पीडामनुभवामि' इति साश्वासमवदत् । इदमाकर्ण्य सर्वे परिजनाः वैद्यं बहुमानचक्षुषा पश्यन्ति । पुनरुच्चार्यते कन्यया—'सांप्रतं तु दष्टोपरि दाहमात्रमेवानुभवामि, न काचिदपि पीडावशिष्टा विद्यते ।' इदमाकर्ण्य—

वैद्यः—महाशय ! अधुना तु गच्छामि । शैलशृङ्गेऽत्र पक्षमेकं स्थास्यामि । मदुचितकार्ये आमन्त्रणात्पुनरागमिष्यामि ।

वैरिस्टरः—अयि धन्वन्तरिकल्प: ! कोटिशो धन्यवादार्हो भवान् । साधुतरमिदमृषिविज्ञानम् । कुतूहलजनिकेयमातुरपरिचर्या । रात्रौ मदर्थमेव भवता कष्टमनुभूतम् । भवद्गमनं नाभिलषाम्यहं, किन्तु गन्तुं यदि काम्यत एव श्रीमद्भिस्तर्हि भवत्विति । पुनरपि कदाचिदयं जनो दर्शनेन कृतार्थो विधीयताम् ।

अन्यदपि—

दन्तधावनावसरे 'इञ्जीनियर' पदभूषितस्य कस्यचिन्महाशयस्य जिह्वा बहिर्निर्गता। बहिरागत्य पुनर्नान्तः प्रविष्टा। अत्र 'जिह्वानिर्गमनामये' महाभागस्यास्य कृते बहवो डाक्टराः-वैद्याः-हकीमाश्च' एकत्र बभूवुः। सर्वैरेवानेकधोपचरितम्, किन्तु नान्तर्याता जिह्वा।

सर्वेषु वैफल्यं गतेषु केनचिद्वृद्धवैद्येनोपदिष्टम्—

अयि सज्जनाः! 'अम्लवेतसम्' आनीय तद्रसोऽत्र जिह्वोपरि निक्षिप्यताम्। अनेनाम्लरसप्रभावेण रसनेन्द्रियस्य स्वाभाविकी क्रियोद्भविष्यति। तत्क्रियया स्वत एवान्तर्यास्यति रसनेति मया संभाव्यते।

वृद्धवैद्यस्य वचनं सर्वैरेव मतम्, तदुपदेशानुकूलमेव विहितम्। अम्लवेतसस्याम्लरसेन शनैः शनैः स्वल्पेनैव कालेन स्वत एव जिह्वा स्वस्थाने समागतेति।

शुश्रूषा-पद्धति।

"यस्य कस्य तरोर्मूलं येन केनापि पेषितम्।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति॥"

इत्यादि सपरिहासमुपक्षिपन्तः केचिदाधुनिकाः कथयन्ति—भारतीयायुर्वेदे 'आतुरोपचर्या' यथाविधि नास्ति। भारतीयवैद्यानां रोगनिश्चयप्रकारस्तु रोगिणो नाडीग्रहणमात्रे एव पर्याप्तिं याति। दन्तकरण्डकान्निस्सार्य श्वेतकृष्णवर्णभस्मादिवितरणमेवोपचर्यायाः परा काष्ठा। यत्रायुर्वेदे एवंभूता वैद्या भवन्ति तत्रातुरालयनिर्माणे, परिचारकपरिचर्यादिविषये कथं नाम व्यवस्थाप्यते!

इतो विपरीतं पाश्चात्यानामातुरोपचर्यायाम्—

आतुराणां कृते—पवनार्कचन्द्रनक्षत्राणां प्रचारयुक्तेषु, दूर्वाङ्कुरपल्लवितभूप्रदेशेषु नगरतो नातिसन्निकृष्टविप्रकृष्टेषु वनस्थलेषु भव्यभवनानि निर्मीयन्ते। दुग्धफेनवदतिसमुज्वलानि विष्टरास्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि च प्रदीयन्ते। स्फटिकमणेरप्यतिभासुराणि पात्राचमनीभृङ्गारप्रतिग्रहाण्युपयुज्यन्ते।

पाश्चात्यानाम्—यन्त्रशस्त्रव्रणबन्धनप्रभृतीनां स्वच्छता, तेषां यथाविधि स्थापनगोपनच्छेदनोपयोगादिकार्यजातन्त्वादर्शरूपेण विलोक्यतेतराम्। किं बहुना पाश्चात्यैः कार्यमेव देशकालानुरूपं मनोहारि च विधीयते। उपर्युक्तप्रकारेणाक्षिपतामाधुनिकमहाशयानां पुरतः किञ्चिन्निवेद्यते—

महाभागाः! "रोगिणो नाडीग्रहणमात्रमेव रोगनिश्चयस्य पर्याप्तिः" इत्यत्र चेद्विस्तारेणोत्तरयामस्तर्हि "आयुर्वेदे निदानपद्धतिः" इति शीर्षकमवलम्ब्य महानिबन्धो रचनीयो भवेत्। किन्तु 'विषयातिक्रमदोषभयात्तत्परिहाय आतुरपरिचर्याविषये सङ्क्षेपतो निवेद्यते-

भारतस्य प्राचीनातुरोपचर्या द्विधा विभक्तास्ति। एका शल्यकर्मप्रधाना सौश्रुतीया सरणिः। अपरा कायकर्मकामुका चरकीया पद्धतिः। राजकीयातुरालयेषु (हास्पिटल Hospital भवनेषु) पाश्चात्यचिकित्साजन्यमिदं यच्चाकचक्यं महताडम्बरेण विलोक्यते तत्सर्वं सौश्रुतीयसिद्धान्तानुसारमेवानुभूयते। परमत्र प्रतिभाशीलैः पाश्चात्यैः परिष्कृततया स्वपाटवमङ्कितमिति त्ववश्यं मन्यामहे।

तद्यथा—यन्त्र शस्त्रव्रणबन्धनशिरामोक्षणशल्यकर्मप्रभृतिष्वनेकधाविष्कृता प्रतिपदं स्वच्छता, विभागाः, नियमाः, कालस्योपयोगित्वम्, तन्नियतिश्चाङ्गीकृताः। दृष्टान्तरूपेणाधुनिकातुरालयेषु समीक्ष्यताम्। यथा—'ड्रैसिङ्गरूम, ओप्रेशनरूम, डिस्पेन्सरीरूम, एक्सरेरूम इत्यादिभिरनेकधा भवनविभक्तिर्विलोक्यते। आतुरविभक्तिरपि-एकतोऽर्शोरोगिणो निवसन्ति। अपरतोऽश्मरीपीडितास्तिष्ठन्ति। अन्यतः नेत्रकर्णार्त्ताः शुश्रूष्यन्ते। एवमेव पृथक् पृथक् स्थानेषु महता कौशलेन यथाक्रमयुदरभगन्दरभग्नव्रणितप्रमुखा उपास्यन्ते। यन्त्र-

शस्त्रव्रणग्रन्थनादिकं तदीयावश्यकं वस्तुजातम्, द्राक्तरकम्पौण्डरादयश्चापि तत्तत् पृथक्स्थानेष्वतिसमीपतो व्यवस्थाप्यन्ते। किमधिकजल्पनेन 'होस्पिटलव्यवस्था' श्रीमद्भिः प्रतिदिनं निरीक्ष्यत एव। सौश्रुतीयशुश्रूषासूत्रं लक्षीकृत्य देशकालपरिकल्पनया परिकल्पितेयं पाश्चात्यानां परिचर्यापद्धतिराधुनिकशिक्षाशिक्षितांस्तु मोहयत्येव, किन्तु शास्त्रविदो विचारशीलास्त्वत्र नाश्चर्यं यान्ति।

महोदयाः! राष्ट्रीयसाहाय्येन यदि चरकसुश्रुतसूत्रानुसारमातुरालयादिकं रचयामस्तर्हि—अनेकक्रोशपरिमिते भूमिभागेऽस्माकमातुरालयस्य व्यासो भवेत्। तत्र च शतशो वृद्धत्रयीमर्मज्ञा विद्वांसश्चिकित्सका भवेयुः। सहस्रशश्च सर्वकर्मपर्यवदातारः परिचारका भवेयुः। अनेकशकटभारपरिमितानि च पात्र्याचमनीभृङ्गारप्रतिग्रहादीनि संभारवस्तूनि भवेयुः। केवलेन सुश्रुतशुश्रूषासूत्रजन्येन किञ्चिन्मात्रवैभवेनैव मोहङ्गता आधुनिकाः कथयन्ति—भारतीयायुर्वेदशुश्रूषायामातुरालयनिर्माणादिकं नास्ति। यदि चरकसुश्रुतोक्तपद्धतिद्वयेन समयानुकूलमातुरालयनिर्माणादिकं व्यवस्थाप्येत तर्ह्येषामाधुनिकानामाश्चर्यस्य सीमैव का? सुश्रुतोक्तशल्यप्रधानात्मकोपचारचमत्कारस्तु पाश्चात्यानां कृपया प्रतिदिनं 'हास्पिटल' भवने नूतनाविष्कारेण दरीदृश्यत एव। अतः सौश्रुतीयोपचर्याविषये नाधिकं निवेदयिष्ये। किन्तु 'कायचिकित्साप्रधानेषु चरकप्रमुखेष्वपि परमवैशद्येनातुरालयनिर्माणादिकं प्रतिपादितम्'—इति दर्शयन् आधुनिकजनसंतोषार्थं चरकपद्धत्यनुसारं नूतनप्रकारेण किञ्चिन्निवेद्यते—

मान्याः! कायकर्मकार्मुकायां 'चरकोक्तातुरोपचर्यायाम्' शरीरजन्यदोषमपहर्तुं 'वमनविरेचननिरूहानुवासनशिरोविरेचनानि' इमानि पञ्चकर्माण्युपदिष्टानि सन्ति। तत्क्रमस्त्वेवम्—आमाशयस्थान् दोषानपहर्तुं 'वमनम्'। पक्वाशयस्थानां च कृते 'विरेचनानुवासननिरूहाः' तथोर्ध्वजत्रुस्थदोषनिस्सारणार्थं 'शिरोविरेचनञ्चोपदिष्टम्'। किन्तु अत्र पञ्चकर्मणः पूर्वं स्नेहनस्वेदनात्मकविधानं विहितम् तत्साध्वेवास्ति यतः लोकेऽपि दरीदृश्यते—यथा हस्तपादस्थमलापहरणात्पूर्वं तैलादिस्नेहेन मार्दवं विधाय तत उष्णोदके घर्षणादिभिः प्रक्षाल्यते। तथा हि रजका अपि वस्त्रप्रक्षालनावसरे पूर्वं तैलक्षारादिना वस्त्रस्थं मलं पृथक्कृत्य पुनरुष्णोदकादिभिः प्रक्षालयन्ति।

अनेनैव स्वाभाविकेन नियमेन शरीरस्थमलं पूर्वं स्नेहेन मृदूकृत्य स्वेदेन च द्रवीकृत्य ततः कोष्ठमानीय वमनादिभिर्बहिष्क्रियते। तथा हि वाग्भटस्य टीकायां रामराज्यस्य प्रधानामात्यो हेमाद्रिः—

"देशभ्रंशभयाद्विचाल्य लयिनः स्नेहैः प्रतापैः परान्
विद्राव्य प्रसृतान् प्रवेश्य परितो दुर्गोदरं द्राक् ततः।
ऊर्ध्वाधोगतिभिर्गमय्य मदनैर्दन्त्यादिभिर्विद्विषो
दोषानद्रढि रामराज्यमगदंकारेण हेमाद्रिणा॥

श्लेषेण पद्यमिदं नीतिनये भिषक्तन्त्रे चावगम्यते।

अन्यदपि—

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निह्रियन्ते॥२५॥

अनेन पद्यद्वयेन सिध्यति—पञ्चकर्मणः पूर्वं स्नेहनस्वेदनात्मके विधाने परमावश्यके लोकशास्त्रविहिते च विद्येते।

अयि ज्ञानधनाः!

आधुनिकप्रकारेण चरकीयशुश्रूषासूत्रमादर्शीकृत्य स्नेहनस्वेदनात्मकपञ्चकर्मणां कल्पनामातुरालयसरण्या

चेत् कल्पयामस्तर्ह्यस्मदीयातुरालयोपि सांप्रतिक 'हास्पिटल' वत् विशालतामतिक्रमेत। यथा स्नेहनोपचार एव कल्पनीयः—"समुपस्थितोयं पुरुषः स्नेह्यो न वेति, यदि स्नेह्यस्तर्हि कस्मिन् स्थले, कदा, केन स्नेहेन, कया कल्पनया, कथं स्नेह्यो भवेत्। तत्र च स्नेहमात्रा कीदृशी। स्नेहव्यापत्तौ किं विधेयम्। स्नेहनात्पूर्वं कथमादेशः कर्त्तव्यः" इत्यादिकं विचारयितुमातुरालयेऽनेकवैद्यानामावश्यकता भवेत्। परिचारकशुश्रूषागारसंभारास्त्ववश्यं गणनीयाः। एवमेव स्वेदनावसरेप्यूह्यम्।

तथा हि—स्वेदनोपयोगिदेशपरीक्षायां भगवान् पुनर्वसुः—

"तत्र पूर्वस्यां दिशि, उत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे।"

अनयैव पद्धत्या वमनविरेचनबस्तिशिरोविरेचनेष्वपि तर्क्यम्—

यथा "अमुकपुरुषस्य कृते एतावती मात्रा वमने, विरेचने, बस्त्यादिषु समुचितास्ति, समानातिहीनमिथ्यायोगानामयं परीक्षणप्रकारः, व्यापदूयेवं विधीयते इत्यादिकं परिज्ञातुमनेके वैद्याः कल्पनीया भवेयुः। परिचारकसंभारास्तूह्या एव। आधुनिकीं परिचर्यामनुसृत्य प्रतिकार्यमल्पशोऽपि यदि कल्पयामस्तर्ह्यपि त्रयाणां वैद्यानामावश्यकता भवेत्। यथा प्रत्युपचारमेकः साधारणप्रतीकारकुशलोपरस्तत्र विशेषज्ञः, तृतीयस्त्वाकस्मिकव्यापन्निवारकः एवं स्नेहनस्वेदनात्मक-पञ्चकर्मणां कृते अस्मदीय "हास्पिटल" भवने एकोत्तरविंशतिवैद्यानामावश्यकता भवेत्।

ज्वरातीसारशोथरक्तपित्तग्रहणीपाण्डुरोगपीडितानां कृते वैद्याः पूर्ववत् व्यवस्थाप्यन्ते चेत् तर्हि हास्पिटलभवने वैद्यानां महती सङ्ख्या भवेत्। परिचारकशुश्रूषागारसंभाराणान्तु कथैव का, वैद्यानां कल्पनयोपकल्प्यताम्।

अस्माकमातुरालयस्थभेषजागारे 'डिस्पेन्सरीरूमे' औषधजातमेवं सङ्ग्रहीतव्यम्। तद्यथा—वमनोपगविरेच्यवस्त्युपगवातघ्नपित्तघ्नकफघ्नशूलघ्नजीवनीयबृंहणीयरक्तरोधकमलरोधकमलमूत्रविरजनीयगर्भपोषकशिरोविरेचनीयहृद्यचक्षुष्यनस्यकर्णादीनां गणानां सङ्ग्रहः कर्त्तव्यः।

अस्मदीयातुरालयेऽग्निदग्धविषार्त्तानां कृते आकस्मिकशुश्रूषागारसम्भाराणां प्रबन्धः पृथक्तया कर्त्तव्यः।

महोदयवराः! भारतीयायुर्वेदोपचारस्य माहात्म्यन्त्वकथनीयम्, अहो! यत्र परिचारकपरिचर्यादीनामावश्यकता नास्ति। तत्रायुर्वेदोक्तप्रकारेण निर्मितेषु भवनेषु केवलं निवासमात्रेणैव सुतरां रोगमुक्तिर्भवति। किन्तु पुनरपि भारतीयायुर्वेदे 'हास्पिटला'दिनिर्माणं यथाविधि नास्ति—इति कथनात्मकं लाञ्छनं त्वस्माकं भागधेयम्!

केवलं निवासमात्रेण रोगमुक्तिर्यथा भवति तत्प्रकारस्त्वेवम्।—

शोथज्वरातीसाररक्तपित्तादिरोगार्त्तानां कृते शुश्रूषागारे तत्तद्रोगप्रत्यनीकद्रव्यजातेन रङ्गकलिकाव्यजनदीपस्नेहधूपनद्रव्यादिषु संस्कारः कर्त्तव्यः। निदर्शनेत्र परममहिमशालिनामस्मदीयगुरुगुरूणां वैद्यवंशावतंसभूतानां कविवरश्रीकृष्णभट्टानां ज्वरोक्तं पद्यं समुपन्यस्यते। तद्यथा—

"भूनिम्बनीरविकसत्कलिकारसेन<br>
वासः सुतेन परितो धवलीकृतान्ते।<br>
ह्रीवेरगुम्फिततिरस्करिणीसुगन्धे<br>
सौधे शयीत सुखमुष्णतरज्वरार्त्तः।

एवंविधोपचर्यान्यत्रापि कुत्रचित्समुपलभ्यते किम्?

इति नव्या निदर्शयन्तु। परमस्त्विति, एवं मया शरीरस्योपचर्यैव निवेदिता। किन्तु शरीरमानसयोर्द्विधा रोगा भवन्ति। अतो द्विधैवोपचरणीयमित्यनेन हेतुना रोगिणां मानसोपचर्यापि निवेदनार्हा मन्यते, अस्मात् कारणात् सापि निवेद्यते—

रोगिणां मनोविनोदाय आतुरालये उपवनान्यपि विधेयानि, तत्र चोपवनेषु पुण्डरीकोत्पलशतपत्रारविन्दादिपूर्णानि पुष्करवापीतडागतीर्थादीन्यपि रचनीयानि स्युः। पुष्करादिषु हंसकारण्डवचक्रवाकबकसारसादयः पक्षिणोऽपि पालनीयाः स्युः।

तथा चाशोकवाटिकावर्णने वाल्मीकिः—

"हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव॥"

रोगिणो विनोदार्थम् 'आतुरालये' गीतवाद्यानामप्यावश्यकता। तथा हि भगवान् पुनर्वसुः—"गान्धर्वशब्दाश्च सुगन्धमाल्याः" इत्यादिनोपदिशतीति।

पाठकमहाभागाः! यथा 'आतुरोपचर्या' विषये यथामति सर्वथैव निवेदितम्, किन्तु पुनरपि यदि काचित्त्रुटिः सम्भाव्येत तर्हि सा निभाल्यतां श्रीमद्भिः। मदीयबुध्या तु निवेदितम्, किन्तु 'उपर्युक्तः सर्वप्रपञ्चो मनोमोदकत्वेन वर्णितः किमत्र प्रमाणम्' इत्याशङ्कायामाधुनिकानां कृते प्रामाण्येनापि निवेद्यते। तद् यथा—चरकोक्तोपकल्पनीयाध्याये आतुरालयसम्बन्धे—

"दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यं धूमातपरजसामनभिगमनीयमनिष्टानां च शब्दस्पर्शरसरूपगन्धानाम्, सोदपानोदूखलमुशलवर्चःस्थानस्नानभूमिमहानसोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत्पूर्वमुपकल्पयेत्"।

"धूमातपरजसामनभिगमनीयम्" इत्यत्रानागतोपचारस्य महानादर्शः प्रकटीकृतो मुनिना।

"ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नान्" इत्यादिनारभ्य, "सङ्ग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समाख्यातानि" इतिपर्यन्तं परिचारकसम्भारानुपदिशति।

एवंप्रकारेण राष्ट्रीयातुरालयनिर्माणपद्धतिः कथिता, परं चिकित्सोपजीविनां वैद्यानां स्वतन्त्रातुरालयनिर्माणविधाने तु सिद्धभेषजमणिमालाकार-परममाननीय-गुरुगुरुकविवरभट्टश्रीश्रीकृष्णरामोक्तशुश्रूषाभवनमेव समीचीनतयानुभूयते। यथा—

'सुधाद्रवक्षालितभित्तिभाग-
रोचिष्णुधन्वन्तरिचारुचित्रम्।
उच्चावचप्रोज्ज्वलकाचकूपी-
विन्यस्ततत्तद्रसदर्शनीयम्॥
यथाभिषक्तन्त्रविचित्रयन्त्रां
कोशस्फुरत्कङ्कमुखादिशस्त्रम्।
दीप्तद्विपेन्द्रादिपुटं प्रलम्बि-
शिक्यस्थनानाविधलेह्यभाण्डम्॥
पवित्रपट्टासनराजमान-
श्रीवैद्यराजेक्षितरुग्णहस्तम्।
उपर्युपर्यापतदार्तसार्थ-
प्रदीयमानोचितजायुजातम्॥
विशालवातायनमन्दमन्द-
प्रवातवाताङ्कुरजोषजुष्टम्॥
लघुत्रयीं हन्त बृहत्त्रयीं वा
स्पष्टं पठद्भिर्बटुभिः प्रघुष्टम्॥
आच्छादनालम्बितलोहशङ्कु-
विलोलकाचद्रुचमत्कृताढ्यम्।

शिलाविभङ्गैश्चतुरस्रबद्ध-
चतुष्कचश्चत्कदलीकदम्बम् ॥
सर्वत्र सर्वर्तुसुखप्रदेशं
समीपतः कूपतटीनिवेशम् ।
प्राचीमुखं तद्वदुदङ्मुखं वा
तत्तादृगुत्सेधविरुद्धखं वा ॥
उदूखलाभ्यर्णनिषण्णखल्वं
ततान्तरं तत्तदुपस्करौघैः ।
अप्युच्चशालं परितो विशालं
बुधाश्चिकित्सागृहमीदृगाहुः ॥'

महोदयवराः ! आयुर्वेदस्योपचारपद्धतिरतीवाश्चर्यकरी । साधारणदर्शनेन तन्मूलं नाभिज्ञायते, परं मर्माभिनिविष्टैस्तत्तत्त्वमधिगन्तुं शक्यते। वृद्धेभ्यः किलैवं निशाम्यते—

यवनशासनसमये कश्चिद् यवनसम्राट् 'बादशाहः' केनचिदपि रोगेण पीडितो बभूव । बहवो "हकीमाः" तच्चिकित्सायां विफलप्रयासा बभूवुः । आतङ्काधिकारेण 'बादशाहः' मरणासन्नतां गत इति विलोक्य प्रधानामात्येनेयं सूचना प्रकटीकृता—"यः कश्चिदपि हकीमो वैद्यो वा दिल्लीश्वरस्य चिकित्सां करिष्यति स एव सादरं 'शाही-हकीम' पदवीं प्राप्स्यति ।" सूचनामिमां श्रावं श्रावं देशदेशान्तरीया बहवो वैद्यहकीमाः एकत्र बभुवः ।

तत्र वैद्यसङ्घे केनचिदपि वैद्येनोक्तम्—"अहमुपचरिष्यामि, चेन्नोपचरिष्यते तर्हि यथेच्छया दण्डो दीयताम् । वैद्यवचनं श्रुत्वा हकीमसमुदाये ईर्ष्या जाता यदयं 'काफिरः' दिल्लीश्वरस्य राजवैद्यतां याति। हा हन्त ! अधुना कश्चिदप्युपायोऽवलम्बनीयः । एवं विचार्य ते सर्वे हकीमाः 'मौलबीनाम्' समीपे गताः । गत्वा चैवं निवेदितम्—"अयि भोः! अस्माकं धर्माचार्याः मौलवीमहाभागाः ! साम्राजमुपचर्यायां विधर्मी वैद्यः 'शाही-हकीम' इति विशालपदमभिलषति । अतः केनचिदपि धर्मद्वारेणापनीयतामयं जनः" इति । निशम्य 'मौलवी' प्रमुखेनोक्तम्—'भवतां कृते प्रयत्नः करिष्यते ।' एवमुक्त्वायं बादशाहसमीपे गतवान् । एवञ्चोपदिष्टम्—'जहाँपनाह !' शरीरस्य तु नाशः कदाचिदपि भविष्यत्येव । किन्तु धर्मस्तु सदैवाविनाशी । अतः केवलस्य शरीरस्य कृत एव विधर्मिवैद्योपचर्यावशाद् भवद्भिर्धर्मो न हेलनीयः । पुनश्च विधर्मी वैद्यो भवदुपचर्यायां सफलतामेव प्राप्स्यति इत्यपि चिन्तनीयमस्ति। श्रीमतां ग्रहगतिरपि मया प्रतिकूलैवानुभूयते । अतो मद्विचारेण तु वैद्यस्योपचर्या भवद्भिर्नैव कार्येति ।' धर्माडम्बरेण मौलवीवचनमङ्गीकृत्य सम्राजा वैद्यं प्रत्याज्ञप्तम्—मत्कृते भवतामुपचर्याया नास्त्यावश्यकता। विधर्मिणामौषधोपरि मे श्रद्धा न भवति । अतो यथास्थानं गम्यतां भवद्भिः । श्रुत्वैवं वैद्यः खिन्नतां गतः, किन्तु द्वितीयदिने स्वकुशाग्रबुद्ध्या वैद्यमहोदयेन 'हकीम—मौलवीनां' षड्यन्त्रं सम्यक् परिज्ञातम् । परिज्ञाय च राजसभायामेवं निवेदितम्—

जहाँपनाह ! न काम्यते मया 'शाहीहकीमपदवी' । न चैषां पुरःस्थितानां 'हकीम' महोदयानां प्रतियोगित्वम् । किन्तु 'प्रयत्नेन म्रियमाणस्याकिञ्चनस्यापि प्राणरक्षा यथाशक्ति कर्त्तव्या' इत्यस्माकमायुर्वेदस्याविचलो नियमोऽस्ति, अतो मयोपचरितुं काम्यते । मदौषधस्योपरि चेद्भवद्भिर्विश्वासो न विधीयते । तर्हि नात्रौषधेनोपचरिष्यामि, किन्तु शब्दमात्रेणैव श्रीमतामुपचर्यां विधास्ये। अहम्—दुन्दुभिवादनं करिष्यामि तच्छब्दश्रवणमात्रेणैव भवद्रोगस्य शान्तिर्भविष्यति । इदं श्रुत्वा सर्वे पारिषद्या आश्चर्यचकिता बभूवुः । यवनसम्रा-

जा साश्चर्यमाज्ञप्तम्—चेदेवं तर्ह्यस्मद्विधानामत्र का हानिः ? झटिति विधीयतां भवदुपचर्या । 'यथाज्ञापयति देवः' इत्युक्त्वा वैद्येन चिकित्सा प्रारब्धा । दुन्दुभिस्वनश्रवणमात्रेणाचिरादेव 'बादशाहः' स्वास्थ्यमुपजगाम । वैद्यश्च जयलक्ष्म्यालं बभूवेति ।'

सेयं मनोरञ्जनी केवलमाख्यायिकैव न ज्ञायतां श्रीमद्भिः । आयुर्वेदीयमूलग्रन्थेषु तदेतद्रहस्यमुपलभ्यते मार्मिकैः । सुश्रुतकल्पस्थाने प्रोक्तमाचार्येण "यन्महतो दुन्दुभेर्मुखे विषघ्नमगदमुपलिप्य चेत्कोणेन स दुन्दुभिराहन्यते तर्हि ये ये तं स्वमाकर्णयन्ति ते विषामयान्मुच्यन्ते ।" इति

तथाहि—

'धवाश्वकर्णशिरीष' इत्यादिना प्रारभ्य 'लोहकुम्भे निदध्यादिति पर्यन्तमुपदिशति दुन्दुभिस्वनीयकल्पम् ।

'श्रवणाद्दर्शनात् स्पर्शात्, विषात् संप्रति मुच्यते'

इत्यादिना च प्रशंसति । इति ।

भिषजां साधुवृत्तानां भद्रमागमशालिनाम् ।
अभ्यस्तकर्मणां भद्रं, भद्रं भद्राभिलाषिणाम् ॥

---

# चिकित्सा-पादचतुष्टयम् ।

( लेखकः—महामहोपाध्यायः शास्त्री हाथीभाईशर्मा " जामनगराभिजनः " )



आयुर्वेदगौरवमपलपमानाः साम्प्रतिकाः केचन जना वैदेशिकवैद्यविद्यासु व्यामोहभाजो भणन्ति—यदास्माकीनायुर्वेदे शस्त्रक्रियाशास्त्रमतीव ग्रामीणदेश्यम्, पाश्चात्याः पुनः शस्त्रक्रियासु महतीं काष्ठामारूढा इति । तन्नात्यन्तं दूरं तथ्यात्, तथापि सुश्रुतीया शस्त्रप्रक्रिया पाश्चात्यानपि विस्मापयतीति न विस्मरणमर्हति।

सन्दंशप्रकारेषु कङ्कमुखादयस्तत्तत्पङ्क्तिसमाख्यया निर्दिष्टा विशेषाः पाश्चात्यैः सुश्रुतादेव समधिगता इत्यतिरोहितमुत्पक्ष्मणाम् । किञ्च पाश्चात्यवैद्यविद्यायां व्यवह्रियमाणाः "नर्सा"ऽऽदिशब्दाः कांश्चिन्मुखरयन्ति यदायुर्वेदे तादृशं किञ्चिन्नादिष्टमिति पाश्चात्यमस्मदीयापेक्षया समृद्धमिति । तैरपि चरकसंहितासु निरूपितं खुड्डाकचतुष्पादीयमधिकरणमवश्यं लोचनगोचरीकरणीयम् ।

तत्र हि—

भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
गुणवत्कारणं ज्ञेयं विकारव्युपशान्तये ॥

भिषक्, द्रव्याणि, उपस्थाता, रोगी च इत्येतच्चतुष्टयं गुणवत् सत्, विकाराणां रोगाणां व्युपशान्तये भवति । अत्र भिषगादीनां गुणवतामेव तत्तत्पदव्यपदेश्यतार्हेति तदप्यनुपदमेवाह—

चतुर्णां भिषगादीनां शस्तानां धातुवैकृते ।
प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ।

चतुर्णामप्येतेषां मध्ये प्रथमं तावद् भिषक् कीदृशो गुणवान् उच्यते तन्निवक्ति—

श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥१॥

श्रुते-शास्त्राध्ययने, पर्यवदातत्वम् = परितः साकल्येन पदपदार्थवाक्यार्थतात्पर्यादिसमधिगमे, अवदातत्वं नाम संशयविपर्ययादिराहित्येन यथार्थबोधशालित्वम्। तच्च साम्प्रदायिकप्राणाचार्याणामदम्भोपासनव्यतिरेकेण ऽसमधिगम्यम्। यतोऽत्रैवाऽग्रे शिष्यलक्षणे 'तीर्थाधिगतशास्त्रार्थः' इत्युक्तम्। तीर्थं नाम = अविच्छिन्नगुरुपारम्परीलब्धविद्य आचार्यः। यो हि स्वयमेव केवलं पुस्तकवाचनमात्रेण पण्डितम्मन्यो विचिकित्साभारभग्नसत्त्वः मनागपि चिकित्सामारभते वोढुमुपक्रमते स भिषक्पाशः सद्य एवाऽर्हति राज्ञः सकाशादवरोधमनादरे च दण्डमर्पीति लोकशास्त्रोद्घोषः। रसचिकित्सायां तु सुतरां तीर्थाधिगतशास्त्रार्थत्वमपेक्ष्यते। तदाह—ढुण्ढुणीनाथः—

अध्यापयन्ति यदि दर्शयितुं क्षमन्ते
सूतेन्द्रकर्म गुरवो गुरवस्त एव।
शिष्यास्त एव रचयन्ति गुरोः पुरो ये
शेषाः पुनस्तदुभयाभिनयं भजन्ते ॥ १ ॥

अत एवोच्यते "श्रुते पर्यवदातत्वम्"। अपर्यवदातत्वे सन्देहानिवृत्तौ, रोगविज्ञाने पूर्वरूपसम्प्राप्त्याद्यनिर्णये, पदार्थेषु च मूलत्वक्पत्रफलाद्यनिर्णये प्रवर्तमानो भिषङ् मृत्युमेवोपढौकयेत्।

अपि च सत्यपि शास्त्रार्थावगमे कर्मकौशलाभावे प्रसङ्गे मुह्यत्येव, तदर्थमुक्तं 'बहुशो दृष्टकर्मता'। शाब्दं सावत्परोक्षं ज्ञानं नात्यन्तायार्थसाधकमिति दृष्टकर्मतामाह—कर्मणामौषधप्रसाधनानां शस्त्रप्रक्रियायां स्फोटन-पाटन-भेदन-दारण-व्यादानादीनामाचार्यैः क्रियमाणानां साक्षादवलोकनम्, स्वयञ्चाचार्यसन्निधौ स्वहस्तेन निर्वर्तनम्। तदपि 'बहुशः', सकृत्प्रयुक्तं घुणाक्षरकल्पमल्पमपि नानुभवमापादयतीति असकृदनुष्ठानेन सिद्धहस्ततापादनपर्यन्तमावृत्तिरपेक्ष्यते।

दाक्ष्यं—दक्षता, प्रत्युत्पन्नमतितेति यावत्। यथा सिरामोक्षणादौ रक्तस्रावस्यात्यविच्छेदे तद्रोधकप्रकारोपस्थितिमत्वम्, तदर्थं पुरत एव तादृशोपायपरिकल्पनसंरक्षणम्। व्रणोत्पाटनादिषु च पट्टबन्धादिप्रकारेषु तिर्यगधऊर्ध्वसन्नहनकर्मप्रतिपत्तिज्ञता, रोगिणामपि प्रथमत एव शस्त्रादिदर्शनेन अभापनम्, कार्यकालेऽपि सान्त्ववचनैराश्वास्य फलनिष्पादनम्। एवंविधविचारचातुरी, दाक्ष्यमुच्यते। शौचं नाम वैद्यस्य स्वपरोभयभयापनयनेऽवश्यापेक्षो गुणः। तच्च शौचमाभ्यन्तरबाह्यभेदाद् द्वेधा। आभ्यन्तरं तावत् निर्लोभता, रोगिणाऽऽक्रुष्टेऽपि क्रोधराहित्यमवैरता चेत्यादि। बाह्यं शौचमपि भिषजामवधानदानयोग्यमेव। यतो विषसम्पर्कयुजामार्तानां शस्त्रोपचारे जन्तुघ्नद्रवेण तत्स्थानमार्जनादौ, स्वहस्तादेरवयवस्यापि तादृशद्रवेण प्रक्षालनादौ चाऽवहितो भिषङ् न व्यापत्तिमृच्छति। अस्मिन्नेव विषये प्रमादेन "वकील" डाक्टरस्य सद्योमरणं जामनगरे साक्षाद् दृष्टचरम्। अतो बाह्यशौचे पूयादिसंसर्गे तत्स्थानादेर्जन्तुघ्नद्रवेणाऽप्रमादेन मार्जनप्रक्षालनादि शौचं वैद्यानामातुराणां तत्परिचारकादीनाञ्चावश्यकम्, भिषजस्त्वतितराम्।

एतद्गुणचतुष्टयसम्पन्नो भिषक् प्राणाचार्यपदवीमद्वीयसीं भजते।

द्रव्याणि—पुनरौषधानि, रोगिणामास्तरणाद्युपकरणानि, पथ्यार्थं यूषयवागूषष्टिकौदनादीनि, गव्याऽऽजादीनि पयांसि च। तेषामेतेषामायथातथ्ये, समर्थोऽपि प्राणाचार्यश्चिकित्सायामातुरमुपकर्तुमसमर्थ एव। यत्र मृगमदोऽपेक्ष्यते तत्र तदलाभे द्रव्यासान्निध्यप्रयुक्तं द्वितीयपादवैगुण्यं सत्या अपि त्रिपादसम्पत्तेरफलायकम्। अतो द्रव्याणामातुरचिकित्सायामपेक्षितानां प्रागेव चिकित्सारम्भात् सम्पादनमावश्यकम्। यथा

वा व्रणविशोधने पट्टबन्धार्थं चीरचीवरादेरार्तावयवसन्नहने पर्याप्तस्य, रोहणौषधादेश्च दारणादितः प्रागेवाऽसम्पादने पाटनानन्तरमार्तस्य दीर्घकालं पीडानुभवोऽसह्यो भवेत्तदेतद् द्रव्यवैगुण्यप्रयुक्तं भिषजोऽयोग्यत्वमाविष्कुर्यादिति द्रव्यसामञ्जस्य एवाहितश्चिकित्सासाफल्यलक्षणो भरः। तदेतदाह—

बहुता तत्र योग्यत्वमनेकविधकल्पना।
सम्पच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥

बहुता-द्रव्याणां पौष्कल्यम्, यावदपेक्षितपरिमाणकत्वम्। अल्पस्यासाधकतया पर्याप्तमेव सकलं द्रव्यमौषधादिफलजनकम्। यत्र क्वाथाद्यर्थं प्रचुरमुपयोगावहं भवति तत्र द्वित्राणि पत्राणि मूलकणिका वा कमुपयोगमावहेदिति (बहुता)। "तत्र योग्यत्वं" नाम चूर्णाद्यर्थं शुष्कम्, स्वरसकल्कपुटपाकाद्यर्थमार्द्रमिति तत्तत्कल्पनायोग्यमेव द्रव्यमुपयोगमावहतीति "अनेकविधकल्पना" अर्थात् चूर्णम्, क्वाथः, स्वरसः, पुटपाकः, कल्कः, गुटिका, अवलेहः, पानकमित्यादि यथेष्टं सिद्धद्रव्यसम्भारः, सम्पत् जीर्णं शीर्णं कीटकवलितमित्यादिदोषैरस्पृष्टं द्रव्यं द्रव्यसम्पदुच्यते। एवमेव यूषयवाग्वादिकमपि न मृदुपाकं नापि खरपाकं किन्तु मध्यमपाकम्। एवमास्तरणादिकमपि सुखस्पर्शतयाऽनुद्वेगकरं द्रव्यसम्पदेव। एतद्गुणचतुष्टयं द्रव्याणां साध्यसिद्धेरुपोद्बलकं भण्यते। अतो विपरीतैर्द्रव्यैरुपक्रम्यमाणं साध्यं सिद्धिं न विन्दतीत्येतावदेव न, अपि तु साध्यसिद्धिं विहन्यातर्कितमनर्थमपि जनयतीति द्रव्याणां गुणवत्ता परिपूर्णावधानदानेन निश्चेतुमर्हा।

तृतीयपाद उपस्थाता=परिचारकः। अस्मिंस्तृतीयपाद एव आधुनिक" नर्स "प्रभृतीनां समावेशः। पिरचारककौशलायत्तमारोग्यमार्तस्य। यतः स्वयमशक्नुवन्नार्तः परिचारकाधीनप्रवृत्तिको दुःखतानवमाकाङ्क्षते, अतस्तत्रापि गुणचतुष्टयमपेक्ष्यते।

यथा—उपचारज्ञता दाक्ष्यमनुरागश्च भर्तरि।
शौचं चेति चतुष्कोऽयं गुणः परिचरे जने ॥

परिचारके जनेऽपेक्षितं गुणचतुष्टयम्। तत्र उपचारज्ञता प्राथम्यमञ्चति। भिषजाऽऽदिष्ट उपचारस्तथा प्रयोज्यो यथाऽऽतुरस्य दुःखं नोपबृंहयेदपि तु ह्रासयेत्। एतदर्थं हि रोगिणः, शीलस्य, स्वभावस्य, हेवाकस्य, सुखदुःखहेत्वोः प्रियाप्रिययोः स्थानासनस्वपनोत्थानाद्यानुकूल्यस्य मूत्रपुरीषादिकाले जायमानावस्थाप्रतिपालनस्य च तथाऽभ्यासः कर्तव्यो यथाऽऽतुरस्य कदापि प्रातिकूल्यानुभवो न भवेत्। किञ्च केचित् क्वाथद्वेषिणः केचित् पुनर्भक्तादिपथ्यद्वेषिणस्ताँस्तथा परिचरेत् यथा वैद्यादिष्टमन्यथा न भवेत्। तदर्थं वैद्यानुमत्या क्वाथस्थाने चूर्णादिप्रयुक्त्या भक्तस्य च लवङ्गैलादिसंस्कारापादनेन रुचिकरत्वसम्पत्त्या च रोगिणोऽनिष्टतापनयनं हि परिचारकबुद्धिफलम्। इदमेव उपचारज्ञत्वं भिषज्यपि नियतापेक्षं तदन्तरेणार्तोपचरणं क्वचिद् दुष्करमिव भवति। सति च तस्मिन्नविलम्बिता भवति सिद्धिः। एकदा शुभस्मरणावशिष्ट 'बाबा भाई' भिषक्प्रकाण्डस्यापि खेतडीनरेशचिकित्सायामप्रतिपत्तिरभूत्। नरेशस्य तस्य शोषसम्प्राप्तिदशोपेता। तदा तदाहूतेन वैद्यवरेण वासापुटपाक आदिष्टः। रोगिणोक्तमेतदौषधमहं नैव पास्यामि। एवंविधे व्यतिकरे भिषजोक्तं "यदजाक्षीरेण सह रसायनमात्रां तु लास्यसि? तदङ्गीकारात् परतः प्रच्छन्नमेवाजां वासां भक्षयित्वा तदीयपयःसेवनेनेष्टसिद्धिः सम्पादिता। सेयमुपचारज्ञतापरिणतिः। एवमेव परिचारकस्यापि भिषगादिष्टक्रियानुष्ठाने रोगिण आनुकूल्यापादनेन युक्त्या परिचरणमुपचारज्ञता।

उपचारानुष्ठाने दाक्ष्यमपि गुणः परिचारके नियतापेक्ष एव। दक्षता हि प्राप्तकालं प्रतिपत्तिकौशलम्। यथा 'अन्त्रगलोपद्रुतस्य बलान्मलेरणे अन्त्राधःसरणे महान् पीडोपजनो भवति, अतः शौचावसरे पट्टबन्धादिना अन्त्रस्याधःसरणप्रतिरोधविधानम्, विहितेऽपि प्रतिरोधे अन्त्राधःसरणे जाते पुनरन्त्रगलस्योपरि सञ्चारणप्रकारज्ञता इत्यादि। एवं शस्त्रप्रयोगे पट्टबन्धार्थमपेक्षितं दैर्घ्योपपन्नं वस्त्रम्, रोहकद्रव्योपलेपादिसामग्रीसान्निध्योपकल्पनमित्यादि दक्षतानुबन्धि परिचारककृत्यम्।

सर्वतोऽपि नितरामपेक्षितः परिचारकगुणो"ऽनुरागश्च भर्तरि", अत्र भर्तृपदमार्तपरम्। यदि परिचारको भर्तरि भक्तिरिक्तस्तदा रोगिणो नाऽऽरोग्यप्रत्याशा। प्रायेणार्ता निजव्याध्युपद्रुताः क्लिष्टाः कोपनान्तरङ्गा दुराराध्या भवन्ति, ततः परिचारको यद्यार्तवचनेन उद्विजते तदा परिचर्याया अयथातथ्येन आर्तस्य दुःखनिवृत्तिर्निराशापराहतैव। रोगिणि भक्तिमान् परिचारको रोगिणो बहूपकरोति। रोगिणि क्रुद्धे स्वयं शान्तो, रोगिणि प्रमादिनि स्वयमप्रमाद्यन्, रोगिणाऽपेक्षितं वस्तुजातमनादिष्ट एवोपस्थापयन्, यथाकालं यथायोगं च भेषजादि उपाहृत्य सेवयन् परिचारकः कष्टावकृष्टमप्यातुरं परिचर्यापरिचयेन रञ्जयन् भिषग्द्रव्यादीनितरांस्त्रीनपि चिकित्सापादानतिशेते।

एवंविधेऽपि परिचारके भिषजीव शौचं नाम गुणो विशेषापेक्ष एव। तत्राभ्यन्तरं शौचं निर्मायता, रोगिकृताक्रोशेऽपि निरुद्वेगता, ताडनावधिप्रसक्तावपि निर्वैरता इत्येवमादि। बाह्यं शौचं पुनर्मृज्जजादिना पावित्र्यम्, शयनादीनां स्वच्छतापादनम् प्रच्छदपटादेः पौनःपुन्येन परिवर्तनं प्रक्षालनं च। निष्ठीवनभाजनस्य सर्वदा निर्मलता,श्लेष्मादिदूषितानामुपवस्त्रादिनां क्षारादिद्रव्यमर्दनेन प्रक्षालनम्, मूत्रमलादिसंसृष्टस्य घृणापरिवर्जनेन विमलीकरणे दत्तावधानता, पूयादिदूषितपटानामुत्करे त्यागः, एवंविधगुणचतुष्टयोपपन्नपरिचारकलाभो हि रोगिणो भाग्यसम्पदं व्यनक्ति।

उक्तञ्च—

क्षमी दाता गुणज्ञश्च स्वामी भाग्येन लभ्यते।
दक्षः शक्तोऽनुरक्तश्च भृत्यस्त्वत्यन्तदुर्लभः॥

यद्येतादृशः परिचारको (Narse) रोगिणमुपचरेत्तर्हि रोगिणो व्याधेरर्धं तु तत्परिचर्ययैवोपशाम्यति, शिष्टार्धे पृथक् प्रत्येकं चतुर्थांशयशोभागिनौ द्रव्यभिषजौ भवतः।

एवञ्च उपचाराणां यथावज्ज्ञानं-दक्षता, शिक्षितादपि विषयात्प्रकारान्तरप्रसङ्गोपनिपाते स्वबुद्धिवैभवेन सुकरप्रकारकल्पनासामर्थ्यम्, दृढहस्तता,रोगिणि भक्तिः, स्वच्छता चेत्यादयो गुणाः परिचारकमितरेभ्यस्त्रिभ्योऽपि पादेभ्यो विशिनष्टि।

चतुर्थे रोगिलक्षणे पादेऽपि गुणचतुष्टयं दर्शयति—

स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च।
ज्ञापकत्वञ्च रोगाणामातुरस्य गुणाः स्मृताः॥

स्मृतिर्नाम—स्वशरीरे जायमानानां विकाराणां स्मरणम्, "ह्यः किमुक्तम्" इति प्रश्ने ह्यस्तनवृत्तस्मरणेनोत्तरप्रतिपत्तिः, निदेशकारित्वञ्च-वैद्येनादिष्टस्याचरणादेर्यथावदनुवर्तनम्, अभीरुत्वम्—भीरुतापरित्यागः, यतो भीरुत्वं रोगमुपोद्बलयति—कुत्रचित् तु उन्मादादौभयदानेन उद्धृतदंष्ट्रसर्पादिना भयजननेन उन्माद—तानवं भवति, एवमेव ऐकाहिकज्वरादौ स्मृत्यपोहेन ज्वरव्यपगमोऽपि भवति, तथापि रोगिसामान्यमुद्दिश्यैतत् स्मृत्यादिचतुष्टयमुपवर्णितमस्ति।

अपि च "ज्ञापकत्वं रोगाणाम्" अर्थात् दिवा रात्रौ वा यद् यद् यावच्च उपद्रवादि भूतं भवच्चोपल-

क्ष्यते तत् सकलं भिषजे निवेदनीयम्। एवं कृते उद्भूतोपद्रवाणामुपशमने वैद्योऽपि दत्तावधानः प्रवृत्तिमातिष्ठमानः पुनः प्रकारान्तरेणौषधोपचारं परिवर्तयन् रोगिणो व्याधिपरिज्ञाने पीडोपशमने च प्रयतेत।

एवं यथोक्तपादचतुष्टयोपपन्ना चिकित्सा सङ्कल्पितसिद्धिमुपजनयतीति रोगिरोगियोगिभिः सम्यगाकलनीयम्।

अन्यच्च—यथा विषुवदुपलक्षिते "केलिमाञ्जारो" प्रदेशे तपनकिरणानामूर्ध्वपातेन तत्र महिष्यादीनां जीवनासम्भवेन दुग्धप्रतिनिधितया तत्र स्थितैर्जनैः स्वधितिच्छिन्नत्वचीरिवृक्षत्वक्क्षीरमुपयुज्यते; तेषामेवोदरे तादृक् पित्तसद्भावात्तत् क्षीरं जीर्यति। एतद्देशीयेन तत्क्षीरं पातं चेत्तादृशपित्तस्य विरहेण तदजीर्णेन सद्यो म्रियते। तेन स्पष्टमुपलक्ष्यते यद् यो जनो यस्मिन्देशे समुत्पन्नस्तद्देशे तदर्थमपेक्षितं वस्तुजातं दैवेनैवोपस्थाप्यते। अतश्च तस्य तद्देशीयमेव भोज्यं वस्त्रमौषधं जलादिकं च पथ्यं सात्म्यं च भवति, इतरदपथ्यमसात्म्यमेवेति मत्वा स्वदेशीयौषधादिषु पदार्थेषु समादरविधानमात्मश्रेयस्करमिति शिवम्।

# आयुर्वेदे-ज्यौतिषम्।

लेखकः—पं०श्रीगिरिजाप्रसादद्विवेदी 'ज्यौतिषाचार्यः'
( संस्कृतकालेजज्यौतिषाध्यापकः, जयपुरम् )



सूर्य आत्मा जगतः तस्थुषश्च।
( यजु० अ० ७ मं० ४२ )

अथ खलु ज्यौतिषायुर्वेदयोरन्योन्यसम्बन्धविचारः संक्षेपेण पाठकानां पुरस्तादुपस्थाप्यते। आयुर्वेदो हि चिरादुपवेदेषु परिगणितोऽष्टादशविद्यास्वन्यतमः, तथा च पठ्यते विष्णुपुराणे—

'अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयम्।
अर्थशास्त्रं चतुर्थं तु विद्या अष्टादशैव ताः॥'

यथाङ्गोपाङ्गानामुपकार्योपकारकभावनिबन्धनः सम्बन्धो भगवतो वेदपुरुषस्य, तथास्यापिनिर्विवादमवसीयते। अथर्वसंहितायां बहुधा प्रपञ्चित आयुर्वेदविषयः। चरकादौ दार्शनिकाः सृष्ट्युत्पत्तिव्यवस्थाकाराः सूक्ष्माः प्रकृतिप्रमुखानुस्यूता गुणत्रयजुष्टाः पञ्चभूतपरिणामिताः पदार्थजाता एकैकशः सूक्ष्मेक्षिकया विचारिताः, परिष्कृताः, पल्लविताश्च दृश्यन्ते। एषां समवायाः शरीरघटनानिदानभूताः स्थावर-जङ्गमात्मका विश्ववैचित्र्यसाक्षिणः समर्थिताः परीक्षिताः जगति कार्यकारणभावमापन्नाः प्रतिक्षणं धीमतां मतिमुकुरे प्रतिफलन्तः समन्तात् परिवर्तन्तेऽनुभूयन्ते—आब्रह्मस्तम्भपर्यन्तम्। चिकित्सानिदानप्रस्तावे सुश्रुतस्य प्रथमाध्याये भगवान् धन्वन्तरिः सुश्रुतमुपदिशति—

"तत्र चतुर्विधो भूतग्रामः, स्वेदजाण्डजोद्भिज्ज-

जरायुजसंज्ञः। तत्र पुरुषः प्रधानम्, तस्योपकरणमन्यत् तस्मात्पुरुषोऽधिष्ठानम्। तद्दुःखसंयोगाद् व्याधय उच्यन्ते। ते चतुर्विधाः—आगन्तवः, शारीराः, मानसाः स्वाभाविकाश्चेति।''''''त एते मनःशरीराधिष्ठानाः।''

''शरीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः।'' पुनश्च—

''प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च, स षट्सु रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयाः, द्रव्याणि पुनरोषधयः। तास्तु द्विविधा स्थावरा जङ्गमाश्च। तासां स्थावराश्चतुर्विधाः वनस्पतयो वृक्षा वीरुध ओषधय इति। तासु अपुष्पाः फलवन्तो वनस्पतयः, पुष्पफलवन्तो वृक्षाः, प्रतानवत्यः स्तम्भिन्यश्च वीरुधः, फलपाकनिष्ठा ओषधय इति।''

एभिस्तथान्यैस्तत्र तत्रोपलभ्यमानविवरणैरेवं गम्यते यत् चतुर्विधभूतग्रामेषु केवलः पुरुष एवायुर्वेदविज्ञाने प्रधानभूतोऽभ्युपगतः, शिष्टास्तु तदुपकरणानि। छान्दोग्यश्रुतिर्निर्दिशति चापि—

''एतस्मादात्मनः सकाशादाकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधिः, ओषधिभ्योऽन्नम्, अन्नात्पुरुषः, पुरुष एव अन्नरसमयः''। क्वापि वैद्यकार्षनिबन्धेषु—'पञ्चभूतशरीरिसमवायः कर्मपुरुष एवात्र चिकित्साऽधिकृतः।' इति वाक्यम्। तेन पञ्चभूतात्मकः पुरुषदेह एवात्र कर्मपुरुषवाच्यो निखिलामयाधिष्ठानत्वेन व्यपदिष्टः। पुनश्च प्रवात-निवातातप-प्रकाशान्धकार-शीतोष्ण-वर्षाऽहोरात्र-पक्ष-मासर्त्वयन-संवत्सरादीनां वर्णनमुपलभ्यते, येन स्वाभाविकं वातादिदोषाणां संचय-प्रकोप-प्रशमन-प्रतीकारादिना मनोवाक्कायकर्मणां वैषम्यघटनमुपपद्यते। एवं वात–पित्त–कफरूपैरादान–विक्षेप-विसर्गादिकर्मकारिणी काप्यनिर्वचनीया शक्तिर्जीवनशक्तिरित्युच्यते। इयमेव दोषकुपिते शरीरे रोगापनुत्तये रक्तसंचार–क्षुधा–पिपासादिरूपेण बहुधा विचेष्टते। एवमादिभिर्विविधैर्विचारैः पुरा भुवनगुरुभिर्महर्षिभिरयमायुर्वेदवृक्ष उपबृंहितः कालक्रमेण विज्ञानभूमावावर्तमानो नानाकारतां दधत् विश्वजनीनतया च सांप्रतमनल्पफलकल्पनाकवलितोऽपि भारतीयैः पाश्चात्यैश्च सम्भूय पार्थक्येन वा संरक्षितः संवर्धितः पुष्पितः फलित आस्वाद्यमानतया लोकाकर्षणमनुरञ्जनं च कुर्वन् शक्त्युत्पत्तिकेन्द्रायमाणत्वेनासंशयं सम्मानसिंहासनमधितिष्ठन् जाज्वलीति। अस्मिन् शास्त्रे प्राकृतिकनियमजातमवलम्ब्यैव वस्तूनां संकोचविकाशानुरूपं परस्परमानुगुण्यं महता क्षोदेन निरूपितमिति तु विदुषां प्रत्यक्षभूतमेव। तदनुषङ्गेण च शास्त्रान्तरप्रतिपाद्यावपयाणां यावदुपयुक्तस्तान्त्रिको धर्मशास्त्रीयश्च मन्त्राराधनशौचाचारादिसहकृतो दैवोपायसाध्यः प्रतीकारोऽपि रोगस्य साध्यासाध्यतारतम्येन बहुत्र परिगृहीतः, किमुत ज्यौतिषस्यानिवार्यसम्बन्धिन एव समादरातिशयः।

अथ प्रकृते किं तावज्ज्यौतिषम्, किं वा तदभ्यर्हितत्वे बीजमिति जिज्ञासायाम्—ज्योतिः—सूर्यादिगोलमधिकृत्य कृतो ग्रन्थो ज्यौतिषम् 'अधिकृत्य कृते ग्रन्थे ४।३।८७' इत्यण्। तत्सिद्धान्त-संहिता-जातकरूपेण स्कन्धत्रयेण शासकत्वाच्छास्त्रमिति व्यपदिष्टम्। एषां भिन्नाकाराणि लक्षणानि सन्ति। जातकस्कन्ध एव 'होरा' शब्दवाच्यत्वेन होराशास्त्राभिधेयः। अहोरात्रशब्दस्य पूर्वापरयोः 'अ' 'त्र' वर्णयोर्लोपे निष्पन्नोऽयं शब्द इति वराहमिहिराचार्यो (४२७ शके) बृहज्जातकस्यादौ व्यवस्थापयति। जातमुत्पन्नम्, उपचारात्तत्प्रतिपादकं शास्त्रमपि जातकपदव्यवहार्यम्। प्रत्येकस्य जननमहोरात्रान्तर्गत-

मेव जायते । अत्रैव यवनाचार्येण प्रचारितस्य पारसीभाषयोपनिबद्धस्य वार्षिकादिफलादेशफलकस्य ताजिकस्य समावेशमुशन्ति तदभिमानिनः । नात्र स्कन्धलक्षणादीनां विशिष्य व्याख्यानावसर इति गणितफलितभेदेनैव निर्वाहः सर्ववादिसंमतो ज्ञेयः । गणितफलितयोरन्वयव्यतिरेकी सम्बन्धः । गणिततरोः फलस्वरूपं फलितम् । लोके हि फलहीना वृक्षा यथा न शोभन्ते, तथेदमपि केवलं कथंकारं सुखयेत् । कल्प्यतां केनापि प्रतिमासमेकरूप्यककलान्तरानुगातेन सार्द्धवर्षचतुष्टयकृते मुद्राशतं दत्तम्, तदोत्तमर्णेन नियतकाले चतुःपञ्चाशद्रूप्यकाणि लभ्स्य इति गणितेन पूर्वमेव विज्ञायते । एवमेव भावि सूर्याचन्द्रमसोर्ग्रहणं ग्रहादयास्तादीनां च ज्ञानमपि गणितैकसाध्यं निर्व्यूढम् ।

अथ सङ्क्षेपेण प्राच्य-प्रतीच्यज्योतिर्विदां मूलसिद्धान्तानां सामञ्जस्येन सूर्यादीनां गतिस्थितिर्निरूप्यते—प्रथमं ऋग्वेदे ( ८ । ५८ । २ ) श्रुतिः—'एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनुप्रभूतः । एकैवोषा सूर्यमिदं विभाति ।' सूर्यसिद्धान्तस्य भूगोलाध्याये—

'हिरण्यगर्भो भगवानेष च्छन्दसि पठ्यते ।
आदित्यो ह्यादिभूतत्वात्प्रसूत्या सूर्य उच्यते ॥
परं ज्योतिस्तमः पारे सूर्योऽयं सवितेति च ।
पर्येति भुवनान्येष भावयन् भूतभावनः ॥
प्रकाशात्मा तमोहन्ता महानित्येष विश्रुतः ।
ऋचोऽस्य मण्डलं सामान्युस्रा मूर्तिर्यजूंषि च ॥
त्रयीमयोऽयं भगवान् कालात्मा कालकृद्विभुः ।
सर्वात्मा सर्वगः सूक्ष्मः सर्वमस्मिन् प्रतिष्ठितम् ॥
रथे विश्वमये चक्रं कृत्वा संवत्सरात्मकम् ।
छन्दांस्यश्वाः सप्त युक्ताः पर्यटत्येष सर्वदा ॥'

इदमखिलं रूपकालङ्कारनिदर्शनेन वर्णितमपि 'सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा (ऋग्वेदे १ । १६४ । २ ) इत्याद्यनुरूपम् । अयं सूर्यो ब्रह्माण्डस्य केन्द्रमिति कोपर्निकस ( Copernicus 1530 A. d. ) सिद्धान्तः । औष्ण्यप्रकाशाकर्षणानां केन्द्रभूतो दूरदर्शक–वर्ण-लेखकयन्त्रतोऽपि दुर्निश्चेयप्रकृतिः प्रभामण्डलतेजःशृङ्गकचावरणादिघटनाघटितः कोषान्तरित आत्मेव भगवान् सूर्यः कथमवबुध्येत ? भट्टोत्पलेन ( ८८८ शकः ) लिखितम्–"तेजसो गोलकः सूर्यो ग्रहर्क्षाण्यम्बुगोलकाः । प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिप्रदीपिताः ।" इत्याद्यनेकैर्वाक्यैः सकलभुवनजीवातुरपरिच्छिन्नतत्तत्पदार्थाविर्भावतिरोभावशक्तिकेन्द्रभूतस्यास्य पारे गिरां महिमा । अस्य गुरुत्वाकर्षणशक्त्या सर्वे स्वस्थाः ग्रहत्वेन व्यपदिष्टाः भूम्यादयः पिण्डाः स्वस्वदीर्घवृत्ता-( Ellipse = अण्डाकारा ) नुकारिणीषु भ्रमणमार्गकक्षासु स्थिताः सूर्यं परितो निरन्तरं भ्रमन्ति । आकर्षणशक्तिरेवाकाशस्थपिण्डानां स्थितिस्थापिका, अनयैवान्योन्यं लघुत्वगुरुत्वमानमर्यादया समाकृष्टा एते संख्यातीता ग्रहनक्षत्रपिण्डाः कथमपि प्राकृतिकनियमाद् न च्यवन्ते । अस्याकर्षणसिद्धान्तस्याविर्भावः केपलर ( Kepler 1664 A. d. ) गाणितिको व्याख्याता च सुगृहीतनामधेयो न्यूटननामा ( Newton 1739 A D. ) महामतिः । आकर्षणशक्तेः परिचयस्तत्फलं च भारते वैदिकयुगादेव विदितमासीदत एव भास्कराचार्य-( १०३६ शकः ) प्रमुखैर्ग्रहचारेषु विवेचितम् । एवमत्र ग्रहकक्षाकेन्द्रं सूर्य इति ग्रहाद् भिन्नः सूर्यः । अमरकोषादौ 'ग्रहपतिः' 'त्विषां पतिः' इत्यादिनामानि । ग्रहाः सूर्यं ( भुवं वा ) परितो भ्रमन्ति, उपग्रहास्तु ग्रहं परितः । अस्माकं चन्द्रस्तु-भुवं परितो भ्रमतीति भूमेः,

चन्द्र उपग्रहः । भूश्चतुर्विंशत्या होरा-( घंटा )भिः स्वाक्षं परितो भ्रमन्ती, एकेन सौरवर्षेण ( ३६५ दिन ५ घं० ४८ मि० ५१.६ से० ) सूर्यं परिक्रामति । भुवः स्वाक्षोपरि भ्रमणं पूर्वतः पश्चिमायां भवति । तेन सूर्यादयः पूर्वतः पश्चिमायां गच्छन्त इव प्रतीयन्ते । एवं भुवः पश्चिमभ्रमणहेतुका ग्रहनक्षत्राणामुदयास्ताः । अश्विन्यादिनक्षत्रसंचारस्तु भुवः पूर्वगमनहेतुक इति पाश्चात्यानां राद्धान्तः । एवमिह्योपर्युपरि ग्रहकक्षाक्रमः पाश्चात्यगोलगणितनिबन्धेषु ( Plane & spherical Astronomy ) सप्रपञ्चं प्रकटीकृतः । अत्रायं संग्राहकः श्लोकः—

'बुधः शुक्रो मही भौमो गुरुः शनिरथापरे ।
भ्रमन्ति परितः सूर्यं, सूर्यो ब्रह्माण्डमध्यगः ॥"

अत्र 'अथापरे' इत्युक्त्या शनेरुपरि ग्रहत्वेनाभ्युपगतौ युरेनस् नेपच्यूनाभिधानौ । अनयोः कथा दूरे तिष्ठतु । भारतीयाः सप्त किंवा नवग्रहसंख्यैव विचारचर्वणायै पर्याप्ता ।

इत्थमत्र—'सूर्यरश्मिश्चन्द्रमा गन्धर्वः' तैत्ति० सं० ३।४।७।१' तथा वराहमिहिरकृतबृहत्संहितायाम्—

'नित्यमधःस्थस्येन्दोर्भाभिर्भानोः सितं भवत्यर्धम् । स्वच्छाययान्यदसितं कुम्भस्येवातपस्थस्य । सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहता इव मन्दिरस्यान्तः ।'इत्यादि-प्रवचनैः प्राधान्येन चन्द्रस्य ग्रहणेन सर्वो लोकः सूर्यरश्मिभिरेव प्रकाशं लभते न तु केऽपि खस्थाः पिण्डाः स्वतः प्रकाशशीलाः । चन्द्रो हि भूप्रदक्षिणां स्वाक्षोपरि ( दिन० २७ घं० ७ मि० ४३ से० ११.५ ) इयता कालेन पूरयति । एवमितरेषामपि भौमादीनां स्थितिः । नात्र पार्थक्येन सर्वविषयाणां समन्वयावकाशः ।

अथेदमपि विज्ञेयं यदियं चराचरविश्ववैलक्षण्याधारभूता भूमिः, रवेः परितः स्वाक्षे भ्रमन्ती दिनरात्रिघटनां जनयन्ती वसन्तादीन् ऋतूनपि पर्यायेणोत्पादयति इयमाकाशे निराधारा स्वशक्त्यैव तिष्ठति—यथा ऋग्वेदे 'उत्त दाधार पृथिवी मुत द्याम्' 'स दाधार पृथिवीम्' यजुर्वेदे तथा 'सत्येनोत्तम्भिता भूमिः' इत्यथर्ववेदः । किं च तैत्तिरीयब्राह्मणे ( ३।४।११ )

'मित्रो जनान्यातयति प्रजानन् मित्रो दाधार
पृथिवीमुत द्याम् ।'

एवमादिलेखेन सूर्य एवाकर्षणमहिम्ना पृथिवीं द्युलोकं चोत्तम्भयति । अत एव सूर्यसिद्धान्तीयभूगोलाध्याये—

'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥'

इत्यभिहितम् । तदेतदखिलं प्राचीनार्वाचीनाचार्यैरैकमत्येन सयुक्तिकं निर्विचिकित्सं च संप्रधारितम् । एवं भुवो गोलत्वमाख्याति स्वीये सिद्धान्ते आर्यभटः ( ४२१ शकः )

'वृत्तभपञ्जरमध्ये
कक्ष्यापरिवेष्टितः खमध्यगतः ।
मृज्जलशिखिवायुमयो
भूगोलः सर्वतो वृत्तः ॥
यद्वत्कदम्बपुष्पग्रन्थिः
प्रचितः समन्ततः कुसुमैः ।
तद्वद्धि सर्वसत्त्वै—
र्जलजैः स्थलजैश्च भूगोलः ॥'

एतदनुरूपमेवाचार्यवराहमिहिर—भास्कराचार्यादयोऽपि स्वं चक्रुः ।

सांप्रतं पूर्वोद्दिष्ट ऋतुभेदक्रमः प्रदर्श्यते—भुवो

दक्षिणोत्तरध्रुवात्समानान्तरे भूगोलस्य समानं भागद्वयमुत्तरदक्षिणगोलार्धसंज्ञं विदधद् यद्वृत्तं तन्नाडीवृत्तं निरक्षवृत्तं ( Equator ) वा कथ्यते । तथा रविः स्वीयदृश्यमानगत्या स्थिरनक्षत्रेषु चलन् तदधोभुवि निरक्षवृत्तेन सह २३।२७ प्रमितं कोणमुत्पादयन् यस्मिन् महावृत्ते भ्रमति तत्क्रान्तिवृत्त-( Ecliptic ) मिति परिभाष्यते । सूर्यकेन्द्रादयमेव भ्रमणमार्ग आकलितश्चेद् भूभ्रमणमार्गः संपद्यते । नाडीवृत्तक्रान्तिवृत्तयोः संपातबिन्दुः क्रान्तिपातो निरक्षबिन्दुर्वा व्यपदिश्यते । निरक्षसमानान्तरं तथा तस्मात् २३।२७ अन्तरे यद् वृत्तद्वयं तदयनवृत्तमुच्यते। उत्तरस्थः कर्कादितो दक्षिणायनबिन्दुर्दक्षिणस्थो मकरादित उत्तरायणबिन्दुर्निगद्यते । क्षेत्रमितिरीत्या द्वयोर्वृत्तयोः संपातो बिन्दुद्वय एव भवतीति नाडी-क्रान्तिवृत्तयोर्मेषादिबिन्दुर्वासन्तविषुवन् तुलादिश्च शारदविषुवदिति ज्ञेयम् । अस्मिन् बिन्दुद्वये वर्तमाने रवौ भुवि सर्वप्रदेशे दिनरात्र्योः समत्वं वेध-गणिताभ्यां विस्पष्टमेव । वेदेषु देवयान-पितृयानशब्दौ 'तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेण' इति तैत्तिरीयब्राह्मण ६।५।३ लेखेनोत्तरायणदक्षिणायनापरपर्यायौ ज्ञेयौ । एवं गोलक्रमेण मेषादिकाः षडुत्तरास्तुलादयः षड्दक्षिणा राशयो भवन्ति ।

द्वादशमासानां नक्षत्रसंयोगानुसारं चित्रया सहिता पौर्णमासी चैत्री, सा यत्रान्वेत्यसौ चैत्रः,'नक्षत्रेण युक्तः कालः ४।२।३' इति पाणिनिसूत्रेण समर्थितानि सांप्रतं चैत्र-वैशाखादीनि नामानि तु रूढिमुपगतानि । परं वेदे किंवा ब्राह्मणग्रन्थेषु मधु-माधवसंज्ञया मासनामानि ऋतुलक्षणलक्षितानि सन्ति, यथा यजुर्वेदे— 'मधुश्च माधवश्च वासन्तिकावृतू । शुक्रश्च शुचिश्च ग्रैष्मावृतू । नभश्च नभस्यश्च वार्षिकावृतू ...'इत्यादि ।

तथा च शतपथब्राह्मणे ( २।१।३ ) पठ्यते—

'वसन्तो ग्रीष्मो वर्षाः । ते देवा ऋतवः । शरद्धेमन्तः शिशिरस्ते पितरः । स यत्रोदगावर्तते देवेषु तर्हि भवति । यत्र दक्षिणावर्तते तर्हि पितृषु भवति ।' तैत्तिरीयब्राह्मणे (११।२।६।७) 'मुखं वा एतदृतूनां यद् वसन्तः ।' एवमत्र शतपथानुसारिणी मासद्वयवर्तिनी ऋतुस्थितिरेवाधुनिकपाश्चात्यज्योतिर्विद्भिरपि स्वीकृता । सा च रविं परितो दीर्घवृत्तकक्षायां भुवं परिभ्राम्याधोलिखितक्षेत्रे प्रदर्श्यते—




अस्मिन् क्षेत्रे 'भूः' भ्रमन्ती निर्दिष्टकाले केन्द्रगरवेः परमसमीपे 'अ' बिन्दावेवं परमदूरे 'ब' बिन्दौ भवति, एवं अ-बरेखा नीचोच्चरेखा किं वा बृहदक्ष इति । ख-परेखा अयनान्तगा तत्र बिन्दुद्वये निर्दिष्टकाले भूः ( रविर्वा ) भवति । ख-प रेखोपरि 'क-य' लम्बः कृतस्तेन 'क'-'य'बिन्दू क्रमेण वासन्तिकशरत्सम्पातबिन्दू स्तः, तत्र च भूस्थितिर्ज्ञायते। एवमिह रवेः परितो भूभ्रमणकक्षायाः क्रमेणातुल्यं क-ख,ख-य, य-प,प-क इति भागचतुष्टयं जायते। एत एव क्रमेण वसन्त-ग्रीष्म-शरत्-शिशिरसंज्ञया भारतवर्षे मुख्यतया ऋतुकाला निर्दिष्टाः। एषु वसन्त-ग्रीष्मयोः स्थितिर्मिलित्वा २१ मार्च आरभ्य २३ सितम्बरपर्यन्तं तथा शरत्-शिशिरयोः २३ सितम्बर आरभ्या-

गामि २१ मार्चपर्यन्तं प्रजायते। अत्र प्रथमविभागे दिनचतुष्टयसमः कालोऽधिकः। अत्र केपलरसिद्धान्तेन परिज्ञातानि ऋतुदैर्घ्यदिवसान्यतुल्यानि सिद्ध्यन्ति। गणनया चतुर्णामपि ऋतूनां स्थितिरियम्—

वसन्तः—९२ दिन, २०॥ घण्टा।

ग्रीष्मः—९१ दिन, १४॥ घण्टा।

शरत—८९ दिन, १८॥ घण्टा।

शिशिरः—८९ दिन, ॥ घण्टा।

अनेन निश्चीयते मेषादिराशिषट्के वसन्त-ग्रीष्म-वर्षर्तुः यत्र सम्भूय दिनानि १८६॥ एवं तुलादिषट्के शरद्-हेमन्त-शिशिरर्तुः यत्र १७८ दिनानि भवन्ति। एवं भारतीयो विभागोऽप्युपपद्यते।

इयता सन्दर्भेण सूर्यचन्द्रभुवां गणितशास्त्रेण सिद्धाः सम्बन्धाः आयुर्वेदविदां पुरस्तात् सङ्क्षेपेण सारल्येन च यावदुपयुक्ता उपस्थापिताः। सकलोऽपि जीवलोकः प्रात्याह्निकेनेदृशेन ग्रहव्यापारेण समन्तादवगुण्ठित आवर्तते। गणितक्रियामन्तरा फलितशास्त्रस्य दुरूहा सरणिः कथमपि नावबुध्यते। त एते सूर्यादयः पिण्डा प्राकृतिकघटनाया आधारभूताः परस्परं न्यूनाधिकभावेन विरुद्धगुणधर्माणः फलितशास्त्रे मनुष्य-पशु-पक्षिणां स्थावराणां चान्योन्याकर्षणोत्सारण-प्रभृतिभिर्यैरनुकूलप्रतिकूलवेदनीयत्वेन विविधरूपानुभूतिफलकाः चिराद् भारते शासकत्वेन विश्रुता असीमश्रद्धाविश्वासास्पदतां समारूढा आपामरान्तं हृदयमन्दिराधिदेवतात्वेन प्रतिष्ठिता इति विज्ञानशालिनामपि किन्तु-परन्तुवाद-सागरोत्तीर्णा अप्रतिहतविभूतयः क्रोडीकृतभूमण्डलाः दुर्ज्ञेये दुर्मेये च गगने नक्तंदिवं विभ्राजन्ते। अहो महच् चित्रम्!

प्रकृतमनुसरामः। पूर्वोक्तसंहितानामके ज्यौतिषस्कन्धे ग्रहाणां तत्तत्कालिकसंस्थानवशेन सुभिक्ष-दुर्भिक्षादिसार्वभौमफलसूचिका विविधाकाराः प्राकृतिकघटनासहकृताः फलव्यपदेश्याः प्रभावोत्पादिकाः स्थितयः साकल्येन निर्दिष्टाः। आचार्यवराहमिहिररचितबृहत्संहितायां तदखिलं पार्थक्येन विभज्योपवर्णिताः। सूक्ष्मधिया निर्ध्यातानि तत्तन्निमित्तकारणानि सम्यगवगमयन्ति यत्प्राचीनैर्विद्युदुल्कानिर्घातपरिवेषाशनीन्द्रधनुषादीनामुत्पत्तिस्थितिस्तत्तद्ग्रहाणां भूवायुरावहप्रवहादिसप्तस्कन्धभेदैर्निसर्गसंयोगसम्बद्धा विभिन्नधातुगुणधर्मानुसारिणी नाभसी व्यवस्थितिः सुदूरमाकलिता। वर्तमानविज्ञानपरीक्षकैर्यन्त्रानुमोदिताः किरणविकिरण-(Spectrum Analysis)ज्ञाननिश्चिताः सूर्यस्य विविधवर्णाः वेदोक्तसप्ताश्वेति सूर्यनामहेतुका रूपकदिशाम्नाता वर्णघटकाः पदार्थाः प्राचीनोक्तिमनुरुन्धाना एव प्रतीयन्ते। दूरवीक्षणयन्त्रमहिम्ना किरणानां विवर्तन-परावर्तना-(Refraction & Reflection) दीनां प्रत्ययस्तत्सायुज्यभावेन च खनिजवस्तूनां प्रभवस्तथोद्भिज्जेषु विभिन्नवर्णाकृतयः फलपुष्पजाताः प्रत्यक्षीक्रियन्ते। एतेषां सप्तकिरणानामेव मेघप्रतिफलनादिन्द्रधनुषाकृतिश्चन्द्रबिम्बस्य परितो मण्डलाकारो रजःपरिधिरूपः परिवेषश्च सम्भवति। बृहत्संहितायां पठ्यते—

**'सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे।**
**वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥'**

विद्युत् (Electricity) त्रिविधा-पार्थिवी, जलीया, वायवी च प्राचीनैरुद्घोषिता, याऽद्यापि बहुभेदजनितापि न हि साकल्येन भिद्यते। पाश्चात्यैरवगता विद्युन् Sinuous, Ramified. Meandering नामभेदैरुन्मिपति। सेयं जल-स्थलान्तरिक्षाधिष्ठाना कपिलाऽतिलोहितापीतासितादिनाम्नी स्वप्रभाववशी-

क्षतदिध्यान्तरिक्षभौमपरिसरा महदाश्चर्यचर्या चकितचकितं विश्वग् विश्वमनुवर्तत एवेति किमु वक्तव्यम् ।

एवंप्रायैरसङ्ख्यैरनिर्वचनीयकार्यकारणभावैरनुल्बणसम्बन्धसनाथीकृतैर्ग्रहपिण्डैराशातीतान् प्रभावान् चलाचलान् प्राण्यादिवर्गनिवहेषु मुख्यतो गुरुत्वाकर्षणकारणेनान्योन्यं सङ्क्रामन्तीति पिष्टपेषणेनालम् ।

अथेदमाकलनीयं यद् ग्रहपतिः सूर्यः क्रान्तिवृत्ते स्वगत्या क्रामति । तत्र कल्पिताश्विन्यादिसप्तविंशतिनक्षत्रेषु 'चु-चे-चो-ला' इत्यादिना चतुश्चरणात्मकेषु द्वादशधा विभक्तेषु प्रत्येको राशिर्नवचरणात्मकः सिध्यति । द्वादशात्मा दिवाकरः इत्यपि ध्येयम् । यतः२७×४=१०८÷१२=९ एवं १०८÷९=१२ । प्रत्येकनक्षत्रसंख्यामानं भिन्नं तेन मिथोविभिन्नप्रमाणानां भानामेकपुञ्जत्वेन विभागो राशिरित्यन्वर्थसंज्ञयैव व्यवहारः प्रववृते । त एते स्वस्वसंस्थानाकारानुरूपं मेषवृषादिसंज्ञां वहन्तो भारते तदन्यदेशेष्वपि चिराय स्थिरीकृता अभियुक्तैः । इत्थमेतद् भचक्रं स्वाधः पर्यटतश्चन्द्रादीनपि संगृह्य भ्रमति, तत एवोक्तं सूर्यसिद्धान्ते—

'भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥'

वराहमिहिरकृतबृहज्जातके ग्रहपिण्डानां पञ्चभूतात्मकत्वेऽपि प्राधान्येन प्रकृत्यंशादिविषयकं विवेचनमेकैकशः कृतमिति ज्ञेयम् । तद्यथा—पुरुषग्रहाः रविभौमगुरवः । स्त्रीग्रहौ चन्द्रशुक्रौ । नपुंसकौ शनिबुधौ । सूर्यो रक्तश्यामवर्णः, चन्द्रो गौरः, भौमो रक्तगौरः, बुधो दूर्वावर्णः, गुरुः पीतः, शनिः श्यामश्च । रविः स्थिरः, चन्द्रश्चञ्चलः, भौम उग्रः, बुधो मिश्रः, गुरुः क्षिप्रः, शुक्रो मृदुः, शनिर्दारुणस्वभावश्च । रविचन्द्रगुरवः सत्वगुणप्रधानाः, बुधशुक्रौ रजोगुणप्रधानौ, भौमशनी तमआत्मकौ च । रविभौमयोरग्नितत्वम्, चन्द्रशुक्रयोर्जलतत्वम्, बुधस्य भूमितत्वम्, गुरोराकाशतत्वम्, शनेर्वायुतत्वम् । इत्थंगुणभाजो ग्रहा मेषादिद्वादशराशिषु क्रमेण तत्तत्प्रदेशावच्छिन्नस्य रविवर्त्मनो महाकाशप्रदेशस्य स्वामिनः । यथा रविः—सिंहस्य, चन्द्रः—कर्कस्य, भौमः—मेषवृश्चिकयोः, बुधः—कन्या-मिथुनयोः, गुरुः—धनुर्मीनयोः, शनिः—मकरकुम्भयोश्च ज्ञेयः । द्वादशराशीनां स्थानपरत्वेनाधो निर्दिष्टक्षेत्रे नामानि—

२ धनम्
१
१२ व्ययः
३ सहजः
तनुः
११ आयः
४ सुहृत्
१० कर्म
५ सुतः
७ जाया
९ धर्मः
६ रिपुः
८ मृत्युः

राशितत्वानि यथा—मेष-सिंह-धनूंषि-अग्निराशयः । वृष-कन्या-मकराः-भूमिराशयः । मिथुनतुलकुम्भाः—वायुराशयः । कर्कवृश्चिक-मीनाः जलचरराशय इति ।

एवं तत्तत्प्रकृत्यंशसंश्लिष्टा राशयो हि 'कालपुरुष' पदवाच्यस्य विराट्पुरुषस्या-(Grand man of the Universe) ङ्ग सम्बन्धिनः प्रकल्पिताः । ज्यौतिषिकः कालपुरुष एवायुर्वेदीयः प्राक्सुश्रुतोपदिष्टः 'कर्मपुरुषः' देहधारी मनुजो विवक्षितः । अनयोः प्राकृतिकी स्थितिर्बृहल्लघुमानतारतम्येनानुपातसम्बन्धिनीति न कापि भिदा दृश्यतां बृहज्जातकोक्ता राशिस्थितिर्यथा—

मेषः शिरः । वृषः मुखम् । मिथुनः वक्षस्थलम् । कर्कः हृदयम् । सिंहः उदरम् । कन्या कटिः । तुला बस्तिः । वृश्चिकः लिङ्गम् । धनुः ऊरुद्वयम् । मकरः

जानुद्वयम्। कुम्भः जङ्घाद्वयम्। मीनः चरणद्वयम्—इति कालपुरुषदेहे स्थिरचक्रन्यासः। एवं षड्वर्गा अपि कालपुरुषस्य मूलाधारादयः षडाधाराः क्रमेण सूत्रिता वेदाङ्गत्वेत व्याख्याताः—द्रेष्काणः पादौ, होरा मुखम्, नवांशाः पाणियुगलम्, त्रिंशांशकश्चक्षुषी। द्वादशांशो नासापुटम्, क्षेत्रं श्रवणयुगलम्। अत्रांशवशेन विभक्तेषु षड्वर्गेषु नवांशका नवप्राणात्मका इत्यस्य प्राधान्यम्। उक्तं च—

'प्राणोऽपानःसमानश्चोदानव्यानौ च वायवः।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः॥'

धनञ्जयव्यतिरिक्ता नवप्राणा नवांशकाः। द्वादशांसकास्तु मनोबुद्धीन्द्रियदशकात्मकाः नवभिः प्राणैर्द्वादशभिरिन्द्रियैरपि, एकविंशतिविधं सूक्ष्मशरीरमुत्पद्यते। तथा चोक्तं भगवत्पादाचार्येण—

'इह तावदत्तदशकं मनसा सहबुद्धितत्वमथ वायुगणः
इति लिङ्गमेतदमुना पुरुषः सह सङ्गतो भवति जीवः॥'

किंच, कालपुरुषस्य कर्मपुरुषस्य वा सूर्य आत्मा। आत्मशब्देनात्र देहाधिष्ठितो जीवात्मोच्यते। चन्द्रो मनोऽन्तःकरणम्। भौमः सत्वं वीर्यमिति यावत्। बुधः वागिन्द्रियम्। गुरुर्ज्ञानसुखे। शुक्रोऽपि तथा किन्तु कामात्मकः शनिर्दुःखम्। आत्मादिभूतेषु ग्रहेषु बलवत्सु जातस्यात्मप्रभावो जायते, मनोभूतस्य चन्द्रस्य बलवत्त्वे मनःप्रभावो जायते। आत्ममनसोरितरेतराश्रयत्वात् सूर्याचन्द्रमसोरेकस्य बलवशादितरस्य बलवृद्धिः। तथा च बृहत्संहितायाम्—

'आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियगणः क्रम एवमेषः।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा॥'

पुरुषस्य मनःप्राधान्येन सर्वप्रवृत्तिर्दृश्यते। तस्माच्चन्द्रबलक्षयेऽन्यग्रहा मन्दफलका इव जायन्ते। भवतु नाम।

अथ स्थूलशरीरं तु त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रमयं तद्राशिसंज्ञम्। सप्तधातूनां शरीरसम्बन्धेनाधिपत्यमुच्यते—

'स्नाय्वस्थ्यसृक् त्वगथ शुक्रवसे च मज्जा,
मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः।'

तत्र शनिः स्नायुसारः, स्नायुना ग्रथितशिरासङ्घात उच्यते। अर्कोऽस्थिसारः चन्द्रो रुधिरसारः रुधिरशब्देन मांसमप्याक्षिप्यते, रुधिरस्य जीवनावस्थायामेव सद्भावात्। बुधस्त्वक्सारः, त्वक्शब्देन रसधातुर्वोच्यते। धात्वग्निना पच्यमानाद्रसधातोरसृग्भावे त्वचः सम्भवात्। तथा च वाहटः—'तत्र सप्तत्वचोऽसृजः। पच्यमानात् प्रजायन्ते क्षीरात् सन्तानिका इव।' शुक्रः शुक्रसारः, गुरुर्वसासारः मेदःसार इति वा। भौमो मज्जासारः। मज्जा नाम अस्थ्नामन्तर्वर्तमानस्तदवष्टम्भकरो धातुः। जन्मनि यो ग्रहो बलवान् तदुक्तधातुसारश्च भवति। अन्यथा तेषु रोगादिना पीड़ा च। अत्रेदमपि विचिन्त्यम्—सूर्यः पित्तप्रकृतिः, चन्द्रो वातश्लेष्ममिश्रप्रकृतिः, भौमः पैत्तिकः, बुधः पित्तामारुतकफप्रकृतिः भूम्यात्मकत्वात्; भूमेश्च शब्दस्पर्शरूपरसगन्धगुणात्मकत्वात् सन्निपातप्रकृतिरत एव योगवाही च भवति। गुरुः श्लेष्मात्मकः, शुक्रः कफानिलात्मा, शनिश्च वातप्रकृतिः। रव्यादयः शन्यन्ताः कटुकलवण–तिक्त–मिश्र–मधुराम्ल–कषायाख्या षड्रसाधिपाः।

पाठकमहाभागाः! एते तत्तत्प्राकृतिकसम्बन्धबद्धा ग्रहपिण्डा राशिचक्राधिकृताः सूत्रे प्रोता मणय इवैकाकर्षणप्रभावमहिम्ना व्यस्ता अपि समस्ता इव पूर्वो-

कतन्वादिद्वादशभावविभक्तस्वस्वाधिकारानुरूपं शासक इव स्वायत्तवर्गेषु निग्रहानुग्रहगुणधर्मशीलाः प्रभाववशवर्तिविकारान् प्रकटयन्ति । तदेतत्कालाश्रितमेव शास्त्रेषूच्यते । यथा हि बृहस्पतिः—

'स्वभावादेव कालोऽयं शुभाशुभसमन्वितः ।
अनादिनिधनः सर्वो न निर्दोषो न निर्गुणः ॥'

पुनश्च कल्याणवर्म--( ७३५ शकः )—कृतसारावलौ—

'यदुपचितमन्यजन्मनि
शुभाशुभं तस्य कर्मणः पक्तिम् ।
व्यञ्जयति शास्त्रमेतत्
तमसि द्रव्याणि दीप इव ॥'

वराहमिहिरोऽपि—

'कर्मार्जितं पूर्वभवे सदादि-
यत्तस्य पक्तिं समभिव्यनक्ति ।'

अयमर्थः—पूर्वजन्मनि अर्जितं सदादि । आदिशब्देन असच्च सदसच्च गृह्यते । दृढकर्मोपार्जितं सत् । अदृढकर्मोपार्जितमसत् । दृढादृढकर्मोपार्जितं सदसद् इति त्रिविधं यत्कर्म तस्य पक्तिं परिपाकं सम्यग् अभिव्यनक्ति । नन्वत्र नक्षत्रग्रहादीनां शुभाशुभफलकर्तृत्वं कथं युज्यते ? प्राचीनसदसत्कर्मविपाकरूपस्य दैवस्यावश्यंभावित्वात् । तथा च शौनकः—

'येन तु यत्प्राप्तव्यं तस्य विधानं सुरेशसचिवोऽपि ।
यः साक्षान्नियतिज्ञः सोऽपि न शक्तोऽन्यथा कर्तुम् ॥'

परं विवाहादिनिर्णये विहितकालस्य दैवप्रयत्नसापेक्षत्वात्केवलं दैवे न किन्तु पुरुषकारेऽपि कर्मसिद्धिर्व्यवस्थिता । अत एव याज्ञवल्क्यः—'दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता । तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ।' पुरुषकारः प्रयत्नः, पुरुषकाराभावे दैवमपि नास्ति । उभयोः सहयोगेनैव कर्तव्यावाप्तिः । दैवं किल पुरुषनिष्ठं तद्देशकालवशात एव विपच्यते । दुष्टमपि दुष्टान्तरसाहित्येनैव दुष्टकारि यथा दुर्जनो रन्ध्रान्वेषणेन । दैवं तु दृढकर्मरूपमदृष्टकर्मरूपं चेति द्विविधम् । तत्र दृढकर्मरूपस्यावश्यंभावित्वाद् ग्रहशान्त्यादिरूपेण संपूर्णप्रयत्नेनापि तन्निवारयितुं न शक्यते, दृढमूलत्वात् खरतरवाताघातेऽपि दृढमूलपादपवत् । अदृढकर्मरूपं तु प्रयत्नेन निवार्यते प्रशिथिलमूलपादपवत् । प्रयत्नाभावे तु विपच्यत एव । अत एव चिकित्साशास्त्रेऽपि—

'पूर्वजन्मकृतं पापं व्याधिरूपेण बाध्यते ।' इति ।

सर्वव्याधीनां साधारण्येन कर्मजन्यत्वेऽपि साध्यासाध्यत्वेन द्वैविध्यमस्ति । तत्रापि—

'कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते ।
असाध्यो द्विविधो ज्ञेयोऽसाध्यो यश्चाप्रतिक्रियः ॥
साध्योऽसाध्यत्वमायाति साध्यश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यस्तु नराणामक्रियावताम् ॥'

इत्यादिना अचिकित्सितव्याधेर्दृढकर्ममूलत्वमन्येषामदृढकर्ममूलत्वं निश्चीयते । अतो दैवस्येदृशं द्वैविध्यमस्ति । किञ्च गदा द्विविधाः—निजागन्तुकभेदेन । तत्र निजाश्च द्विविधाः, शारीरा मानसाश्च । आगन्तवोऽपि द्विविधाः, दृष्टनिमित्तजा अदृष्टनिमित्तजाश्चेति चतुर्विधाः प्रतिपत्तव्याः । तत्र शारीरा वातपित्तश्लेष्मसंसर्गसन्निपातजनिता रोगा अष्टमराशिना तत्स्थेन तन्निरीक्षकेण तदधिपेन वा बलाबलवशान्निर्देश्या भवन्ति । मानसास्तु पुनः भयशोकक्रोधादिवेगजनिताः पञ्चमाष्टमस्थानाधिपयोर्योगेक्षणादिसम्बन्धवशाद् वक्तव्याः । आगन्तुकेषु दृष्टिनिमित्तजा अभिघाताभिचारशापादिजनिताः षष्ठस्थानाधिपेन तत्स्थेन तद्वीक्षकेण तद्राशिना वा वाच्याः । अत्राप्यष्टमाधिपस्य

योगनिरीक्षणादौ सति ते प्रबला भवन्ति। अदृष्टनिमित्त-जास्त्वागन्तवः । ते च

'दरस्थिरोभयेष्वायधर्मद्यूनगतैः क्रमात् ।
बाधकाख्यैर्ग्रहैर्वाच्या देवादिग्रहजा गदाः ॥'

एषां विशेषाश्च यथाशास्त्रमादेश्या जायन्ते । अत्र द्विविधानामपि निजरोगाणां प्रतिक्रिया वैद्यशास्त्रोक्तैश्चिकित्साविशेषैर्धनस्थानग्रहयोगेक्षणवशाद् वक्तव्याः। आगन्तुकेष्वप्यभिघातादिजनितसद्योव्रणादिगदेषु चिकित्सैव, शापाभिचाराद्युद्भूतेषु देवब्राह्मणपूजादिसत्कर्माणि विधेयानि भवन्तीति सुनिपुणं विभावनीयम् ।

तैत्तिरीयब्राह्मणे—'देवगृहा वै नक्षत्राणि (१।५।२) एवमथर्ववेदे नक्षत्राणां देवताः परिकल्पिताः । ग्रहाणामचिन्त्यशक्तिकेन्द्रभूतत्वेन प्राचीनैश्चेतनाधिष्ठानकल्पनया रोगभेदेषु तदन्येषु वा परिणामदृष्ट्या पूजाशान्त्यादिव्यवस्थितिः प्रतिपादिता दृढादृढ—दृष्टादृष्टप्राक्तनकर्मसंस्कारतारतम्येन । नैतच्चित्रं न वा निर्मूलम् । सुनिपुणं परीक्षिता विश्वासगभीरेऽयं पारम्परिकी प्रतीतिर्मनागपि कर्मभूमौ यथोचितमुपचरिता वैषम्यं जनयति । एवं सारल्येनाचार्यैः फलितोदधिं मतिमन्दराद्रिणा प्रमथ्य प्रकृते विभिन्नशुभोदर्ककृते तत्प्रतीकारभूता विविधोपायाश्चिन्तिता व्याख्याताश्चेति सर्वं चतुरस्रम् ।

अत्र प्रामाणिकग्रन्थाधारेण बहुनायासेन तत्तद्रोगोत्पादकान् योगान् संगृह्य वैद्यमहाभागेभ्य उपह्रियते—

(१) रोगस्थानगते सूर्ये तद्भावे पापसंयुते ।
पापदृष्टियुते नाभौ पैत्तिकाद् व्रणमादिशेत् ॥
(२) षष्ठे चन्द्रे कुजयुते भ्रान्तिपाण्ड्वादिरोगभाक्
(३) सारे चन्द्रे रवियुते विसर्पाः शूलरोगभाक् ।
(४) षष्ठे कुजे बुधयुते भृगुचन्द्रनिरीक्षिते ।
क्रूरांशकसमायुक्ते क्षयरोगं वदन्ति हि ॥
(५) शन्यारसहिते षष्ठे रविराहुनिरीक्षिते ।
लग्नेश्वरे हीनबले दीर्घरोगी भवेन्नरः ॥
(६) षष्ठे शनौ सगुलिके रव्यारफणिवीक्षिते ।
शुभैर्न दृष्टे युक्ते वा श्वासकासक्षयादियुक् ॥
(७) षष्ठाष्टमे भानुसुते सभौमे
जातोप्यपस्मारयुता नरः स्यात् ॥
(८) षष्ठे चन्द्रे शनौ रन्ध्रे व्यये पापे विलग्नपे ।
पापांशकसमायुक्ते पीनसं रोगमादिशेत् ॥
(९) लग्ने गुरौ भूमिसुते वलक्षे ।
उन्मादभाक् तत्र नरो हि जातः ॥
(१०) लग्नाधिपौ कुजबुधौ चन्द्रेण यदि संस्थितौ ।
राहुर्वा शनिना सार्धं कुष्ठं तत्र विनिर्दिशेत् ॥
लग्नाधिपं विना लग्ने स्थितश्चेत्तमसा शशी ।
श्वेतकुष्ठं तथा कृष्णकुष्ठं च शनिना सह ॥

एवमन्यदपि । आयुषो वर्षभेदेन सूक्ष्मगणनया रोगोत्पत्तिप्रदर्शनं च यथा —

(११) व्ययेशे रोगराशिस्थे तदीशे व्ययराशिगे ।
त्रिंशद्वर्षैकोनवर्षे गुल्मरोगं विनिर्दिशेत् ॥
(१२) लग्नेशे लग्नराशिस्थे मन्दे शत्रुसमन्विते ।
एकोनषष्टिवर्षे तु वातरोगार्दितो भवेत् ॥

एते रोगयोगाः सर्वार्थचिन्तामणौ समुपलभ्यन्ते, तदन्यत्रापि । इत्थं भगन्दर-श्लीपद-मूत्रकृच्छ्र-प्रमेहातीसारादीनामप्युत्पत्तिर्निर्णीता भवति । तदिदं पूर्वाचार्याणां विज्ञानोपज्ञं दृग्णं कियन्नामाश्चर्यभूभौ चराचरं विश्वमान्दोलयति । गहनोऽयमतिक्रान्तमानबबुद्धिवैभवः कालमहिमा ।

विज्ञपाठकाः ! किमितोऽप्यधिकं ज्यौतिषायुर्वेदयो-

मौलिकसम्बन्धसौहित्यविशदीकरणेन । सकलमेतदुपस्थापितं विचक्षणा वैद्यपुङ्गवाः स्वधिया विमृशन्तु । साधारण्येनौषधीनां सेवनमुहूर्तस्तथा चन्द्र-नक्षत्रसम्बन्धेन विविधौषधीनां सङ्ग्रहकालादिकं तु विदितमेव । ओषधीशश्चन्द्रस्तु स्वीयसुधां धारयन् नक्तं चन्दत्येषातः कविभिर्हार्दिकभावानुबन्धनान्यस्य बहुधोपश्लोकितानि । किं पिष्टपेषणनिःष्यन्दनेन ।

यथा ज्यौतिषस्य गणितभागः पाश्चात्यैरुन्नतिशिखरं प्रापितस्तथैवाद्यत्वे फलितोदधेरप्यालोडनं प्रक्रान्तः । ग्रहाणां प्रभावोऽस्ति न वा ? तथैतेषां शुभाशुभफलदातृत्वे किं बीजम् ? कदा वा केषां ग्रहाणामनुबन्धेन प्राकृतिकी घटना नयनपथमवतरति ? रोगाणां ग्रहमूलकं निदानं च कथं सङ्घटते ? एवमन्ये भूयांसः पातालभेदिनोऽन्तस्तलस्पर्शिनो हृदयङ्गमा विचारा मतिशाणोल्लीढाः चन्द्रकलेव विसृत्वराः भारतीयविज्ञानमूलभित्तिकास्तेषां सन्दर्भेषु राजन्ते । परं भाषाज्ञानवैधुर्येणास्मद्देशीया गर्गाचार्यासनमासीनाः फलितोद्धारकास्तु तेभ्यो वञ्चिता एव । किमीदृशी ज्ञानोपेक्षिता फलसवित्री जातु भवेत् ? क्षम्यतां दूरमपसरामः ।

पाश्चात्येषु फलितविशारदेषु साम्प्रतं 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वैयाकरणकेसरिणां वाचोयुक्त्या एलन लियो (Alan Lec) नामधेयः प्रधानाचार्यः । अनेन महामतिना "Alan Leo's Astrological Manuals" नामकफलग्रन्थावलौ नानाग्रन्थाः भिन्नाचार्यकृता अपि प्रकाशिताः । तेषु 'Astrology for All" "How to Judge a Nativity" "The Progressed Horoscope" "The Key to Your own Nativity" विशेषतोऽवलोकनार्हाः । पुरा भारतीयानां किं वा पाश्चात्यानामनेकेषां ज्ञानदुर्विदग्धानां फलितशास्त्रे विश्वासाभाव आसीदधुनापि कतिपये सभ्रूभङ्गमनास्थाकराण्युद्गाराणि निःसारयन्ति तथापि विज्ञानालोक उलूकायन्तो मौनमुद्रां भजन्त इव प्रतीयन्ते । तथास्तु,

एलनलियोमहाशयः फलितस्येश्वरीयज्ञानसाधर्म्यं सत्यस्वरूपं च श्रद्धाविश्वासभावभरितान्तःकरणेव निर्विचिकित्सं प्रकटीकरोति—

"The truth can never be destroyed, and when we recognize in Astrology the law of the Supreme rules we need some courage as well mental ability, before be commence the task of learning the harmony of that law. Yet the same energy that is expended in seeking to refute it, would if turned in the direction of learning its first principles, unbot the gate that leads to its understanding."

"It is certain that the truth may be found in the science if any one will seek labourously in it without any hate. The result gained from it, no doubt, has proved its highest sentiment and perception of our ancient sages." (Astrology for All's Part II, Introduction.)

इत्थमेवायुर्वेदाधिकृतां प्राचीनां परिपाटीमप्यामूलचूडं परिष्कृत्यापि पाश्चात्यैर्भारतीयमूलतत्वानुसरणबलेनैव शल्यतन्त्रादीनां व्यवस्थितिः सुचारुरूपेणाक्रियत । तदेतदखिलमैतिहासिकगवेषणं सुप्रसिद्धश्रीप्रफुल्लचन्द्राचार्यकृते 'हिन्दू केमिस्ट्री' ( Hindu Chemistry ) महानिबन्धे पश्यन्तु प्राणाचार्याः । आयु-

र्वेदविज्ञानस्य वृत्त-वर्तमान-वर्तिष्यमाणस्वरूपाकलनसहकृत ऐतिहासिकः संदर्भः संस्कृते प्रणीतश्चेत्पाठ्यरूपेणाचार्यकक्षाश्रयिणां छात्राणां कृतेऽनिवार्यरूपेण नियुक्तः स्यात्तदा मन्ये भूयसे ज्ञानोत्कर्षाय प्रभवेत् । सांप्रतं हिन्दीभाषायां द्वित्रा एवंविधा निबन्धाः प्राकाश्यं नीता अपि सर्वांशेन विदुषां हृदयावर्जनक्षमा न सन्ति, परं किन्त्वोः कौटिल्येनाहता श्लथकलेवरा वैद्यसमाजेऽपरिगणिताः कूटस्थभावमभजन्। अस्तु। 'उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु । भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।' इति महाभारतीयां वेदव्यासगवीं स्मरतां भिषग्वराणां विश्वजनीनकर्तव्योन्मुखानां न मनागप्यसाध्यरोग इवार्गलायितं किमपि भवेदिति मादृशानां स्तोकमतीनां विश्वासः । अलमियता सप्रश्रयनिवेदनेन । तथा च—

गुणदोषप्रसङ्गेन सन्तोषः स्यान्नवाऽधुना ।
विद्यायशःश्रियां धाम लक्ष्मीरामः प्रसीदतु ॥

इति सहजानुरागेण पठन् विरमामि—

---

# आयुर्वेदे चातुर्वर्ण्यम्

लेखकः—श्रीलक्ष्मीनारायणशर्मा गौडः 'आयुर्वेदाचार्यः, जयपुरम् ,



इह खलु जगतीतले सर्वेऽपि मानवाः सुखमिच्छन्ति, सुखोपलब्धये निरन्तरं प्रयतमाना अपि दृश्यन्ते, किन्तु न यथावत्तत् प्राप्नुवन्ति—कोत्र हेतुरिति सुकरः प्रश्नः । तस्यैतस्य प्रश्नस्यानेकान्यपि प्रत्युत्तराणि दीयन्तां नाम लोकैः, अस्माकं त्वेष निश्चयो यत्—शास्त्रविहितमार्गपरित्यागपूर्विकाप्रवृत्तिरेव मनुष्याणां तत्प्राप्तौ प्रतिबन्धिका । स्वकल्पितसिद्धान्तमुररीकृत्यैव ते मन्दमतयो मानवाः कार्येषु प्रवर्तमाना दृश्यन्ते । 'अनृतसंहिता मनुष्याः' इति श्रौतसिद्धान्ताद् मनुष्यो यथार्थज्ञाने असमर्थ एवेति शक्यते वक्तुम् । एवं च विदितवेदितव्यैः, अधिगतयाथातथ्यैः, विचारकक्षापारगामिभिः, आप्तैः, महर्षिभिः प्रदर्शितः पन्था एव साधारणमनुष्याणां कृते श्रेयस्करः। तमेव च पन्थानं 'शास्त्रम्' इति कथयन्ति कवयः । तेन च शास्त्रविहितमार्गस्वीकारेण सुखम्, तद्विरुद्धमार्गाङ्गीकारे च दुःखमिति सनातनः सिद्धान्तः । अत एव भगवता वासुदेवेनाप्युक्तम्—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्र-विधानोक्तं कर्म कर्तुमिहार्हसि ॥"

तत्र विषयभेदेन नैकधा विभक्तेषु शास्त्रेषु साम्प्रतमस्माभिरुपवेदभूते आयुर्वेदशास्त्र एव पाठकानां दृष्टिराक्षिप्यते । तत्र 'चातुर्वर्ण्यचर्चास्ति न वेति ।' कल्याणेप्सुभिः दीर्घजीवनं कामयमानैश्च नरैरायुर्वेदवाक्येषु नितरां रक्षणीया श्रद्धेति मे विज्ञप्तिः । यतो हि—

"आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥" इति ।

यद्यपि चिकित्साप्रधानेऽस्मिन्नायुःशास्त्रे सैषा चातुर्वर्ण्य'चर्चा न तथोपयोगिनी सिद्धा भवेत् यथान्ये स्वास्थ्यलाभं लक्ष्यीकृत्य लिखिता निबन्धाः, तथापि वर्तमानेऽस्मिन् युगे चातुर्वर्ण्यस्याधुनिकत्वं समाजसङ्घटनेऽनुपयुक्तत्वं च मन्यमानान् प्रति यदयं नाधुनिकः, न चानुपयुक्तश्चातुर्वर्ण्य-विभागः, अपि तु शाश्वतिकः। मनुष्येष्वेव न अपि तु पशुषु, पक्षिषु, किमुत विशेष-प्रजल्पितेन, न केवलं जङ्गमेष्वेव, स्थावरेषु वृक्षेषु, शुष्ककाष्ठेष्वपि विद्यमानो जागर्तीति प्रत्यक्षफलदमायुर्वेदशास्त्रमत्र प्रमाणम्—इति ज्ञापनार्थं किञ्चित् प्रयत्यते । तत्पूर्वञ्च—कोयमायुर्वेदः ? किमर्थञ्च तस्योपयोगः ? इति समासेन विविच्यते—

आयुर्वेदो हि नाम आयुर्लक्ष्यीकृत्य महर्षिभिः प्रणीतं शास्त्रम् । आयुर्हि-अनित्यपदार्थस्य शरीरस्यैव ग्रहीतुं शक्यते, नात्मनो नित्य-पदार्थस्य । शरीरञ्च—स्थूल-सूक्ष्म-कारणभेदेन त्रिविधम् । तत्र—ओजोबल-प्रधानं श्वासप्रश्वासादिमत्प्राणमयं हि सूक्ष्मशरीरम् । तत्र रजस्तमोभ्यां मनोदोषाभ्याम् ( रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ—चरकसंहिता) जाता ये रोगास्ते धर्मशास्त्रेण निवार्यन्ते । मनोमये कारणशरीरेऽविद्यादयो ये रोगाः प्रादुर्भवन्ति तन्निवारणार्थं दर्शनशास्त्रम्—उपयुज्यते । एवमेव स्थूलशरीरे ज्वरादयो ये रोगास्ते सुप्रसिद्धेन-आयुर्वेदशास्त्रेण—अपनीयन्ते । वातपित्तकफ-विकारेण हि ज्वरादिरोगाणामुत्पत्तिः । त्रिदोषाणां तेषामविकारेण स्थापनं हि आयुर्वेद-कार्यम् । तथा च रोगापनयनद्वारा स्वास्थ्यसंरक्षणेन आयुषो दैर्घ्य-सम्पादकमिदं-यथार्थनाम शास्त्रमिति निष्कर्षः । पूर्वोक्तेषु स्थूल-सूक्ष्म-कारणेषु त्रिषु शरीरेषु द्वे विहाय यथा नैकस्य स्थितिः, तथैव तत्तद्रोगनिवारकाणां दर्शनायुर्वेदधर्मशास्त्राणामपि—परस्परमविनाभावः सुतरां सिद्धः । एवञ्च धर्मशास्त्रमूलिकां चातुर्वर्ण्यकिभक्तिं विहाय कथं नाम शास्त्रस्यास्य प्रवृत्तिः संभवेदिति सुधीभिः स्वयमूह्यम् ।

किञ्च रोगनिवृत्त्युपायेषु च चातुर्वर्ण्य-व्यवस्था आयुर्वेदाचार्यैः—स्वीकृता । यथा हि—"नवमे मासि सूतिकागारमेनां प्रवेशयेत्, प्रशस्ततिथ्यादौ । तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेत-रक्त-पीत-कृष्णेषु भूमिप्रदेशेषु ······ रक्षामङ्गल-सम्पन्नं विधेयम् । सुश्रुतशास्त्रम् १० अध्यायः ।

अत्रेदमवधेयम्—यदि ब्राह्मणक्षत्रियविट्शूद्रेषु कश्चित् शरीरे सूक्ष्मो भेदो न भवेत् तदा शरीरमधिकृत्यैव विहित उपचारः कथं वर्णव्यवस्थामङ्गीकुर्यात् । तथा च 'समानाक्षिमुखकर्णनासिकाकरचरणेषु पुरुषेषु सोऽयं चातुर्वर्ण्य-विभागः अनार्षः'- इत्यपास्तम् ।

अपि च—नायं चातुर्वर्ण्य-विभागो मानवसमाज एव, अपि तु अखिलेष्वपि पदार्थेषु विद्यमान इति पूर्वं सङ्गदितं तदपि न तथ्याद् दूरमिति सप्रमाणं विवेचयामः । तत्र पूर्वं सर्पेषु चातुर्वर्ण्यसत्तामायुर्वेद-दिशा दर्शयामः—

विषचिकित्सा-प्रकरणे भिन्नभिन्नजातीनां भुजङ्गानां भिन्नभिन्नप्रकारोपचारो विहितः । तत्र च कथं तेषां जातिरस्माभिर्ज्ञेयेति शङ्कायां स्पष्टतयोच्यते—

" मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः ।
सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः॥
क्षत्रियाः स्निग्धवर्णाश्च पन्नगा भृशकोपनाः ।
सूर्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम् ।

कृष्णाः वज्रनिभा ये च लोहिता वर्णतस्तथा।
धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः।
महिषद्वीपिवर्णाभास्तथैव परुषत्वचः।
भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्तिताः।

तेषां भोजनप्रकारश्चैवं विहितः—

वायु-मूषिक-मण्डूक-सर्वभक्षाः क्रमेण ते।

गमनसमयोऽपि तेषां भिन्नः—

पूर्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः।
अस्तं गते रवौ शूद्राः—इति।

दशनदिगपि-भिन्नैव तेषाम्—

दशन्ति ब्राह्मणाः पुरः।
संस्थिता दक्षिणे पार्श्वे
क्षत्रिया, वामतो विशः। शूद्रास्तु पृष्ठतः—इति।

एवं रसेष्वपि चातुर्वर्ण्यं 'रसरत्नसमुच्चये' निरूपितम्—

श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम्।
ब्रह्मक्षत्रियविट्शूद्रं स्वस्ववर्णबलप्रदम्॥

महाभागाः! स्वस्ववर्णबलप्रदम्—इतिपदेन 'समानशीलव्यसनेषु मैत्री' इति नियमः स्मारितः।

यथा हि—समानगुणवतामेव मैत्री। तथैव समानगुणवद्वस्तु-एव हितकरम्। यथा हि-वातपित्तकफप्रधानप्रकृतीनां पुरुषाणां भिन्नभिन्नोपचार आयुर्वेदे वर्णितः एवमेवं वर्णभेदेनापि भिन्नभिन्नोपचार इति चिकित्सायां स्मरणार्हः।

नायं रसेष्वेव—अपि तु—"न्यायोऽयं भैरवेणोक्तः पदार्थेष्वखिलेष्वपि
काष्ठादिष्वोषधिषु च"—

लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत्।
दृढाङ्गं लघु यत् काष्ठं मधुरं क्षत्रजाति तत्॥
कोमलं गुरु यत्काष्ठं वैश्यजातितदुच्यते।
दृढाङ्गं गुरु यत्काष्ठं शूद्रजाति तदुच्यते।

पाषाणेष्वपि स विभागः स्थितः—यथा हि—

ब्रह्म-क्षत्रिय-वैश्य-शूद्र-विभिदा ज्ञेयश्चतुर्धा पविः
तत्र श्वेतरुचिर्द्विजः, स्फटिकवद्रक्तस्तु किञ्चिन्नृपो
वैश्यः पीतरुगङ्घ्रिजस्त्वसितभास्तत्राप्ययं पूरुषः।
चातुर्वर्ण्यपरिग्रहादपि चतुर्वर्णाश्रयश्रेयसा—
संयुक्तामुररीकरोति न कथंकारं स भूतिं पराम्।

रसपद्धतिः।

निदर्शनमात्रमेतद्। विस्तरभिया नाधिकमुच्यते। इदं तु पूर्वोक्तैरायुर्वेदवचनैः सम्यक् सिद्धम्—यदस्माकमायुर्वेदशास्त्रं चातुर्वर्ण्यव्यवस्थामपेक्ष्यैव प्रवर्तते। भगवता श्रीकृष्णेनापि—गीतोपनिषत्सूक्तम्—"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।" इति। अनयार्थकारिकया भगवतो न केवलं मानवेष्वेव अपि तु जगतः सर्वेषु पदार्थेषु वर्तत इदं चातुर्वर्ण्यमित्यभिप्रायः स्फुट एव प्रतीयते। अत एव—महाभारते शान्तिपर्वणि—'आदित्याः क्षत्रियाः' इत्यादिना देवानामपि 'ब्राह्मणक्षत्रियविट्शूद्रत्वं प्रदर्शितम्।

जगति विद्यमानानां सर्वेषां पदार्थानां भेदः—गुणैः कर्मभिश्च भवतीति निश्चलः सिद्धान्तः—किन्तु ते च गुणकर्मणी पदार्थेषु प्रकृत्या नियमिते, न केनापि परावर्तयितुं शक्येते इति—गुणकर्मभ्यां जातिस्वीकारेपि तस्या नित्यत्वं सिद्धम्। अत एव च भगवता 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इत्युक्तम्।

अयमभिप्रायः—प्रत्येकपदार्थस्य गुणभेदं क्रियाभेदं च परिकल्प्य मया चातुर्वर्ण्यं सृष्टम्। तथा च तत्परिवर्तनेऽहमेव समर्थो नाऽन्यः। इति।

तत्र च—सत्वगुणप्रधानः—ब्राह्मणः । अतः ब्राह्मणजातिविशिष्टपदार्थस्य शुक्लरूपत्वेन व्यपदेशः । अन्ये च त्रयो वर्णाः—राजस—राजसतामस-तामस-भेदेन रक्त-पीत-कृष्ण-रूपा व्यपदिश्यन्ते इति हि-वर्ण-व्यवस्थापकग्रन्थानां हृदयम् । एवमेव-ओषधि-कृमि-कीटादिष्वपि—ऊह्यम् ।

एतादृशो विज्ञानभित्तिप्रतिष्ठितश्चातुर्वर्ण्यसिद्धान्तोऽस्माकं लुप्तो न भवेदिति सर्वथास्माभिः प्रयतनीयम् । धर्मपरायणे राज्ञि च निवेदनं कर्तव्यम् । यतो हि—

"सम्यग् व्यवसिते त्रातुं राज्ञि धर्मपरे प्रजाः ।
स्थितयो न विलुप्यन्ते चातुर्वर्ण्यविभागजाः ॥"

इतिवचनेन चातुर्वर्ण्यविभागरक्षायास्तदधीनत्वादिति—विरम्यते ।

---

# 'चरके दर्शनम्'

( ले० स्वामी सुरजनदासः साहित्य-व्याकरणशास्त्री—दादूमहाविद्यालयः जयपुरम् )

'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्' इति चरके इत्यस्याधिकरणसप्तमीत्वात् चरकाधिकरणकं दर्शनमस्तीति शेष : ।

तत्र पदार्थस्तु चरकस्तावदायुर्वेदग्रन्थो महर्षि-चरकप्रणीतत्वात्तन्नाम्नैव लोके संविन्नः । भावल्युडन्तं दर्शनपदञ्च न कस्यापि ग्रन्थविशेषस्य संज्ञामात्रमपि तु ज्ञानार्थकम् । दर्शनशब्दस्य ज्ञानापरपर्यायत्वं तु 'पश्यार्थैश्चानालोचने' 'त्यदादिषु दृशोऽनालोचने कञ्च' इति शक्तिग्राहकशिरोमणिव्याकरणसूत्राभ्यां सिद्धम् ।

तानि च दर्शनानि चार्वाक, बौद्ध, आर्हत, रामानुज, पूर्णप्रज्ञ, नाकुलीशपाशुपत, शैव, प्रत्यभिज्ञा, रसेश्वर, औलूक्य, अक्षपाद, जैमिनीय, पाणिनीय, सांख्य, पातञ्जल, शाङ्कराख्यानि ।

तत्र न्यायवैशेषिकयोः पदार्थविवेचनपरत्वात्, योगसांख्ययोश्च प्रकृत्यादिकतत्वविवेचनपरत्वात् पूर्वोत्तरमीमांसयोश्च कर्मब्रह्मविवेचनपरत्वात्, आदौ क्रममनुरुध्य स्थूलपदार्थविवेचनपरदर्शनसाम्यं प्रतिपाद्यते।

तथा हि 'द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः' तेषाञ्च ज्ञानात् परमशर्मणोऽपवर्गस्याधिगमः ।

तथा च चरकः—'सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च । समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमाश्रिताः लेभिरे परमं शर्म जीवितञ्चाप्यनश्वरम् ।'

अत्र पदार्थतत्वविज्ञानान्मुक्तिर्न प्रदर्शितेति तु न शङ्क्यम्, परमं शर्मेत्युक्त्या मुक्तेरेव बोधात् तदतिरिक्तानां समेषामपि दृष्टानुश्रविकशर्मणां क्षयिष्णुत्वादनिर्मलत्वाच्च परमत्वाभावात् । तथाचोक्तम्—"दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः । तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ।" सां० का० २ । अत एव 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा

वैराग्यम्। यो० द० ।१।२५। इति पातञ्जलमपि लौकिकः धनदारादिसुखेभ्यः स्वर्गादिसुखेभ्यश्च वैराग्यमेवोपदिशति मोक्षप्राप्तये। चरकेऽनश्वरत्वमित्युक्त्या तु चिरस्थैमानमुपलक्षयति, देहस्य नश्वरत्वेनात्यन्तिकस्थित्यभावात्।

तत्रैव च सूत्राणि—'अथातो धर्मं व्याख्यास्यामः' वैशेषिक द० ।१।१।१। 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्याम् तत्वज्ञानान्निःश्रेयसम्।' वैशे० द० १।१।४। 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः।' न्या० द० १।१।१। यद्यपि न्यायदर्शने षोडशपदार्था उक्तास्तथापि तेषामेष्वेव यथायथमन्तर्भावादविरोधः। स्वतन्त्रेच्छानां मुनीनां नियोगपर्यनुयोगानर्हत्वादन्तर्भावानन्तर्भावयोस्तेषामिच्छैव नियामिका च।

## 'तेषां लक्षणानि तद्भेदाश्च'

तत्र गुणक्रियावत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम्। तद्भेदाश्च 'क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः' इति नवैव।

चरकेऽपि—'यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् तद् द्रव्यम्' सूत्रस्था० ५०

'खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।' सू०स्था०४७

खादीनीत्यनेन पृथिव्यादीनि पञ्चभूतानि ग्राह्याणि 'महाभूतानि खं वायुरग्निरापः क्षितिस्तथा' इति शारीरस्थाने चरकोक्तेः।

तथा च सूत्राणि—'पृथिव्यप्तेजो वायुराकाशं कालो दिगात्मा मनः इति द्रव्याणि।' वै० द० १।५

'क्रियावद् गुणवत्समवायिकारणं द्रव्यम्।' वै० द० १।१५

## 'गुणलक्षणं तद्भेदाश्च'

'द्रव्याश्रितत्वं निर्गुणत्वमसमवायिकारणत्वं वा गुणसामान्यलक्षणम्।' कर्मान्यत्वे सति असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वमिति निष्कृष्टोऽर्थः। तद्भेदास्तु—

'अथ गुणा रूपं रसो गन्धस्ततः परम्।
स्पर्शः संख्या परिमितिः पृथक्त्वञ्च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम्।
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्॥
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च'

इति बोध्याः

चरकः—'समवायी तु निश्चेष्टः कारणं गुणः।'
सू० स्था० ५०।

'सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः।
गुणाः प्रोक्ताः प्रयत्नादि कर्मचेष्टितमुच्यते॥'
सू० स्था० ४८।

अत्र अर्थाः इत्यनेन शब्दस्पर्शरूपरसगन्धानां पञ्चमहाभूतविशेषगुणानां ज्ञानेन्द्रियविषयाणां ग्रहणम्। तथा चोक्तम्—'अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः' इति। गुर्वादिपदेन 'गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिर्ग्राह्याः।

तथा च सूत्रम्—'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्। वै०द०१।१।१६

'रूपरसगन्धस्पर्शाः संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः।' वै० द० ।१।१।६।

यद्यप्यत्र कण्ठरवेण सप्तदशैवोक्तास्तथापि चशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः समुच्चिताः।

तथा च प्रशस्तपादभाष्यम् 'चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः' इति ।

चरकवैशेषिकोक्तगुणानां न्यूनाधिकसंख्यकत्वेन मिथो विरोधोऽन्तर्भावानन्तर्भावाभिप्रायकत्वेन परिहार्यः।

'कर्मणो लक्षणम्'

'द्रव्याश्रितत्वमसमवायिकारणत्वं निष्क्रियत्वञ्च कर्मसामान्यलक्षणम् । गुणान्यत्वे सति असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्वं कर्मत्वमिति परमार्थः ।

चरकः—'संयोगे च विभागे च कारणं द्रव्यमाश्रितम् । कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ।'

सू० स्था० ५१ ।

तथा च सूत्रम् ' एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् । वै० द० १।१।१७

'सामान्यविशेषौ'

अयं गौः, अयं गौः, इत्यनेकासु गोव्यक्तिषु एकत्वाभिन्नत्वप्रतीतिकृत्सामान्यमेव । तल्लक्षणन्तु 'नित्यत्वे सत्यनेकसमवेतत्वं सामान्यम् ।'

सामान्यञ्च जातिः 'जातिर्जातञ्च सामान्यम्' इत्यमरात् । जातेरनेकव्यक्तीनामेकत्वकरत्वाच्च । जातेरेकरूपञ्च प्रतिपादितवान् पतञ्जलिः 'आकृत्यभिधानाद्वा एकं शब्दं विभक्तौ वाजप्यायन आचार्यो मन्यते' इत्यादिना ! एकस्या आकृतेरभिधाने च तत्र हेतुद्वयं प्रत्तम् , 'प्रख्याऽविशेषात्' 'अपवर्गगतेश्च' इति । 'प्रख्या बुद्धिस्तस्या अविशेषः एकरूपता तेन तद्विषयस्यार्थस्यैक्यं प्रतीयते' इत्यादि च तत्र कैयटः ।

'जातेरर्थविषयादयोपधात् इति सूत्रे भाष्येऽपि 'आकृतिग्रहणा जातिः' इति लौकिकीं' गोत्वादिजातिं लक्षयित्वा शास्त्रैकसमधिगम्यां ब्राह्मणत्वादिजातिं लक्षयितुं 'सकृदाख्यातनिर्ग्राह्या' इति चोक्तम् ।

किञ्च पस्पशायामपि 'भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं सा जातिरिति' एवञ्च जातेरनुगताकारप्रतीतिकृत्त्वं नित्यत्वञ्च सिद्धम् । तत्र नित्यत्वं यावत्सृष्टिस्थितित्वम् । सा च जातिर्वैशेषिकादीनां मते द्रव्यगुणकर्मसु त्रिष्वेव न तु सामान्यादिषु तेषामेकत्वेन जातिलक्षणानाक्रान्तत्वात् 'निःसामान्यानि सामान्यानि' इति सिद्धान्तात् ।

वैयाकरणास्तु सर्वत्रैव सामान्यमङ्गीकुर्वन्ति । आकाशजातिसमवायादीनामप्यौपाधिकानेकत्वेन जातिलक्षणाक्रान्तत्वात् । तथा चोक्तं वाक्यपदीये—

'संयोगिद्रव्यभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ।।'

कां० २ समुदेश १ का० १५ ।

आकाशेत्युपलक्षणं समेषाम् ।

'अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।
व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः ।।'

कां० ३ समु० १ का० ११ ।

'स्वजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ।।'

कां० ३ समुद्दे० १ कारिका ६ ।

स्फोटितञ्चैतल्लघुमञ्जूषायाम् ।

विशेषस्तु 'अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः' इति । घटादीनां द्व्यणुकपर्यन्तानां 'अयं घटः—अस्माद् घटाद् भिद्यते भिन्नकपालसमवेतत्वादित्यादिरीत्या तत्तदवयवभेदात् परस्परं भेदेऽपि परमाणूनां परस्परं भेदकाभावात् 'अयं परमाणुरस्मात्परमाणोर्भिद्यते विशेषात्' इत्यनुमानविधयाऽसमवेतानां व्यावर्तकत्वेन तत्सिद्धिः । अनवस्थाभयाच्च विशेषो विशेषाद् भिद्यते विशेषादिति स्वतो व्यावृत्तश्च । 'स्वतो व्यावृत्तत्वं तु 'स्वभिन्नलिङ्ग-

जन्यत्वविशेष्यकत्वसजातीयेतरभेदानुमित्यविषयत्वमिति परिष्कृतं बोध्यम् ।

तथा च चरकेऽपि–'सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् । तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः'

सू० स्था० ४४

इत्यादिना, एष एवार्थः प्रतिपादितः । वैशेषिकाभिमतस्य विशेषपदार्थस्य चिकित्साशास्त्रानुपयुक्तत्वेन विरोधस्तु न शङ्क्यः, व्यावर्तकत्वसाधर्म्यमादाय तत्परिहारात् ।

सूत्राणि—'समानप्रसवात्मिका जातिः ।' न्या० द० २।२।७०। 'आकृतिर्जातिलिङ्गाख्या' न्या० द० २।२।६९। 'सामान्यं विशेष इति बुद्ध्यपेक्षम् ।' वैशे० द० ।१।२।३। सदिति यतो द्रव्यगुणकर्मसु सत्ता' । वैशे० द० १।२।७। 'भावोऽनुवृत्तेरेव हेतुरिति सामान्यमेव' वैशे० द० १।२।४ । अनुवृत्तिबुद्धिजनकत्वं सामान्यं व्यावृत्तिबुद्धिजनकत्वं विशेषलक्षणमिति तद्व्याख्यातारः ।

## 'समवायः'

'अवयवद्रव्येष्ववयविनां, गुणकर्मणोर्द्रव्ये, द्रव्यगुणकर्मसु च सत्ताजातेर्यः सम्बन्धः स समवायः । अयुतसिद्धानां सम्बन्ध इत्यर्थः । निष्कृष्टलक्षणन्तु सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे सति सम्बन्धत्वं समवायत्वमिति ।

अत्रैव चरकः—'समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः । स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ।' सू० स्था० ४९ ।

तथा च सूत्रम्—'इहेदमिति यतः कार्यकारणयोः स समवायः' ७।२।२६।

'अयुतसिद्धानामाधार्याधारभूतानां यस्सम्बन्ध इह प्रत्ययहेतुः स समवायः' इति च प्रशस्तपादभाष्यम् ।

## 'महाभूतानि तद्गुणाश्च'

तत्र चरकः-'महाभूतानि खं वायुरग्निरापः क्षितिस्तथा । शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ।'

शारीरस्था० अ० १।२५

अत्र तद्गुणा इत्युक्त्या तत्तद्गुणवत्वं तत्तद्भूतलक्षणम् । यद्यपि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी' इति सृष्ट्युत्पत्तिबोधिकया श्रुत्या उत्तरोत्तरेषु पूर्वपूर्वेषां संक्रमात् पृथिव्यां पञ्च गुणाः, जले चत्वारः, तेजसि त्रयः, वायौ द्वौ, आकाश एकस्तथाप्यत्र प्राधान्यादेकैकगुणोक्तिः । प्रतिपादितञ्चानुपदमेव चरकेण स्वयमेव 'तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे । पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः' इत्युक्त्या ।

सूत्राणि 'गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ।' न्या० द० १।१।४ ।

रूपरसगन्धस्पर्शवती पृथिवी । रूपरसस्पर्शवत्य आपः । रूपस्पर्शवत् तेजः । स्पर्शवान् वायुः । 'कार्यान्तराप्रादुर्भावाच्छब्दः स्पर्शवतामगुणः । परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः परिशेषाल्लिङ्गमाकाशस्य' वै० द० २।१।२१—२६ ।

वैशेषिकेऽपि, आकाशस्य विभुत्वेपि शब्दगुणस्योत्तरेष्वनुप्रवेशेऽपि तस्य वाय्वादिष्वनभिव्यक्तत्वान्न पृथगुक्तिः ॥

## 'दिक्कालौ'

'खादीन्यात्मा' इत्याद्युद्देशलक्षणेन दिक्कालौ प्रतिज्ञायापि सांख्यमतवत् तयोराकाशान्तर्भूतत्वान्नेह पृथक् तद्विवेचनम् । तथा च सांख्यसूत्रम्, 'दिक्कालावाकाशादिभ्यः ।'। सां० द० २।१२ ।

### 'आत्मनिरूपणम्' तत्र च परमात्मनिरूपणम्

चेतनं पुरुषमन्तरा ज्ञानसुखकर्तृत्वबन्धमोक्षादीनि न स्युर्निराश्रयत्वात्। तथा चानुमानानि 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवद्। तदैक्षत' इत्यादिश्रुतिभिर्ज्ञानपूर्वकसृष्ट्युत्पत्तिप्रतिपादनात् सर्वज्ञस्यैव सृष्टिकर्तृत्वोक्तेरस्मदादीनामल्पज्ञत्वादल्पशक्तिमत्त्वाच्च तत्कर्तृत्वं संभवतीतीश्वरसिद्धिः। 'सर्गाद्यकालिकद्व्यणुकप्रयोजकं कर्म प्रयत्नजन्यं कर्मत्वात् ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वात् घटनाशवत्'। इत्यादि।

तथा च सूत्राणि—'जन्माद्यस्य यतः' वे॰ द॰ १।१।२। ईश्वरः कारणं पुरुषकर्माऽफल्यदर्शनात्।' न्या॰ द॰ १।१।१९। 'शरीरादिव्यतिरिक्तः पुमान्। संहतपरार्थत्वात्' 'त्रिगुणादिविपर्ययात्' 'अधिष्ठानाच्च' 'भोक्तृभावात्।' सां॰द॰ १।१३९–१४३। 'अस्त्यात्मा नास्तित्वसाधनाभावात्'। सां॰द॰ ६।१।

श्रुतयोऽपि—'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते।' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'द्यावाभूमी जनयन् देव एकः' 'विश्वस्य कर्ता भुवनस्य गोप्ता' यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति। तथा चोक्तं भागवते—"जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्। तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः। तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा। धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥" श्री॰ भा॰ अ॰ १। श्लो॰१

इममेवार्थं चरकः 'भास्तमः सत्यमनृतं वेदाः कर्म शुभाशुभम्। न स्युः कर्ता च भोक्ता च पुरुषो न भवेद्यदि।' च॰ शा॰ ३७

नाश्रयो न सुखं नार्तिर्न गतिर्नागतिर्न वाक्। न विज्ञानं न शास्त्राणि न जन्म मरणं न च। शा॰ ३८

न बन्धो न च मोक्षः स्यात्पुरुषो न भवेद्यदि। कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः' इत्यादिभिराह।

### 'क्षणिकविज्ञानात्मवादिमतखण्डनम्'

यत्त्वाहुर्बौद्धाः-क्षणिकविज्ञानमेवात्मा, देहोऽपि विज्ञानसमुदाय एव, ज्ञानसुखादिकमपि तस्यैवाकारविशेषः, द्विविधं च तावद्विज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानञ्च 'अ महमित्याकारिकाया आलयविज्ञानधारायाः सुषुप्तावपि सत्त्वेन न व्यभिचारः। विज्ञानानाञ्च क्षणिकत्वेऽपि मृगमदवासितवसन इव पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने संस्काराधायकत्वेन न पूर्वानुभूतस्य स्मरणानुपपत्तिरपि। स एवाहमिति प्रत्यभिज्ञा तु तत्सादृश्यमादायेति, तन्न, तथा सति अन्येन कृतस्य फलमन्योऽश्नीयादिति कर्तृत्वभोक्तृत्वव्यवस्थानुपपत्तेः। न च परार्थं कोऽपि कर्मणि प्रवर्तते, भाविफलप्रत्याशया स्वार्थायैव सर्वेषां प्रवृत्तिदर्शनात् योपि सूपकारादिः परार्थं प्रवर्तते सोऽपि स्वार्थमादायैवेति प्रतिपादितं पूर्वम्।

एतेन देहात्मवादोऽपि निरस्तस्तन्मतस्यापि उक्तदोषदुष्टत्वात्, जन्मान्तरानुभूतस्येदानीं स्मरणानुपपत्त्या नवजातशिशोः स्तन्यपानप्रवृत्त्यनापत्तेश्च, मम त्वात्मनो नित्यत्वेनैतत्सर्वं सूपपद्यते इति।

तथा च सूत्रम् 'देहादिव्यतिरिक्तोऽसौ वैचित्र्यात्' सां॰ द॰ ६।२। षष्ठ्यादिव्यपदेशादपि। सां॰द॰ ६।३।

न्यायदर्शनेऽपि तृतीयेऽध्याये प्रथम आह्निके 'शरीरदाहे पातकाभावात्' ४ इत्यादिसूत्रैर्देहादेरात्मत्वं खण्डितमिति तत्तत्राऽवगन्तव्यम्।

एष एवार्थश्चरकेण 'यो वदेत्स वदेद्देहं संभूय करणैः कृतम्। विना कर्तारमज्ञानाद् युक्त्यागमबहिष्कृतः।' शा॰ स्था॰ १।४२।

न ते तत्सदृशास्त्वन्ये पारम्पर्यसमुत्थिताः। सा-

रूप्याश्चेत एवेति निर्दिश्यन्ते नवा नवाः' इत्यादिपद्यैः प्रतिपादितः ।

'जीवात्मनो लिङ्गानि'

शब्दस्पर्शरूपरसगन्धरहितत्वात् 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' 'पराञ्चि खानि' इत्यादिश्रुतिभिर्बहिर्मुखेन्द्रियाग्राह्योऽप्ययमात्मा संस्कृतेन मनसा गृह्यतेऽनुमीयते च सुखदुःखादिलिङ्गैः। तथाहि—'सुखदुःखे ससमवायिकारणके गुणत्वाद् घटवत्' इति, क्षित्यादीनाञ्च तदभावेनातिरिक्तात्मसिद्धिः । तानि च लिङ्गानि शरीरावच्छिन्नस्य जीवसंज्ञां लभमानस्यैवात्मनो न परमात्मनः, तस्य 'असङ्गो ह्ययं पुरुषः' असुखम्, 'निर्गुणनिष्क्रियनिर्धर्मक आत्मा' 'निष्कलं निर्गुणं शान्तम् ।' इत्यादिश्रुतिभिर्निर्धर्मकत्वप्रतिपादनात् 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति' श्रुत्या मनोऽगोचरत्वप्रतिपादनाच्च । तथा च सूत्राणि 'इच्छाद्वेषसुखदुःखप्रयत्नज्ञानान्यात्मनो लिङ्गानि' न्या० द० ।१।१।१० । 'आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्' वैशे० द० ३।१।१८। 'प्राणापानौ निमेषोन्मेषजीवनमनोगतीन्द्रियान्तरसञ्चारा बुद्धिः सुखदुःखे इच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ।'

एतच्च चरके 'प्राणापानौ निमेषाद्या जीवनं मनसो गतिः । इन्द्रियान्तरसंचारः प्रेरणं धारणञ्च यत्' शा० स्था० १।६८

'इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः' । इत्यादिभिर्विशदीकृतम् । शरीराद्यवच्छिन्नस्यैवात्मनो लिङ्गानीत्येतदपि 'यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः' इत्यादिना स्पष्टीकृतम् ।

'आत्मनो भवापवर्गौ'

रजस्तमोभ्यां युक्तः शरीराद्यवच्छिन्नश्चतुर्विंशतितत्त्वरूपो जीवसंज्ञां लभमान एव पुरुषो रागादिजन्यकर्मवशान्नानायोनिषु संसरति, रजसो रागात्मकत्वात्, रागादेव च सृष्टेरदृष्टाद्युत्पत्तेश्च । तत्रैव च धर्माधर्मज्ञानसुखादीनि प्रतिष्ठितानि । तद्रहितस्तु सत्त्ववृद्ध्या विशुद्धज्ञानात्मकोऽसङ्गो नित्यमुक्तश्च । तथा च सूत्राणि—'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ।' सां० द० १।१९। 'रागविरागयोर्योगः सृष्टिः' २।९। 'निःसङ्गेऽप्युपरागोऽविवेकात्' ६।२७। 'वीतरागजन्मादर्शनात्' न्या० द० ३।१।२५ 'गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद् भोगदेशकाललाभो व्योमवत्।' सां० द० ६।५९। स्फोटितञ्चैतत् वृत्तिकृताऽत्रैव सूत्रे 'आत्मा व्यापकः, नास्य धर्मादिसम्बन्धः, नापि ज्ञानम्, किन्तु शरीरावच्छेदेन मरुद्व्योमयोगवत् जीवसम्बन्धेन मनोयोगात्, जीवात्मा उच्यते । मनसा अविनाभूता प्रकृतिरिति प्राकृतधर्माधर्मज्ञानाज्ञानसुखदुःखाद्यहङ्कारेन्द्रियतद्विषयजन्मादिवानिव लक्ष्यते । सात्त्विकांशेन प्रकृतेः स्वच्छत्वात् तत्प्रतिबिम्बित आत्मा प्रकृतिकर्तृत्वादिकमात्मनि अभिमन्यते । मिथ्याभिमानोऽपि प्रकृतिप्रतिबिम्बिते आत्मनि, न त्वात्मनीत्यादिना । 'निर्गुणत्वात्तदसंभवादहङ्कारधर्मा ह्येते' सां० द० ६।६२ ।

तत्रैव चरकः 'रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान् । ताभ्यां निराकृताभ्यां तु सत्त्ववृद्ध्या निवर्तते ।' शा० १।३५ ।

'अत्र कर्मफलञ्चात्र ज्ञानञ्चात्र प्रतिष्ठितम् ।
अत्र मोहः सुखं दुःखं जीवितं मरणं तथा ॥'
३५ । इत्यादि ।

'प्रकृतिपुरुषयोर्नित्यत्वम्'

पुरुष आत्मा नित्यः, आत्मवदव्यक्तरूपत्वाच्च प्रकृतिरपि, इत्युभावपि नित्यावनादित्वात् । एतद्विपरीतस्तु सर्वोऽपि दृश्यमानो लोकोऽनित्यः । तथा चानु-

मानप्रयोगः—"प्रकृतिपुरुषौ नित्यौ भावत्वे सति अनादित्वादहेतुत्वाच्च, यन्नैवं तन्नैवं यथा घटादिकम् ।" प्रागभावस्यानादित्वात्तत्र व्यभिचार इति सत्यन्तम् । घटादिष्वतिव्याप्तिवारणाय विशेष्यदलम् । यत्र यत्र भावत्वे सति हेतुजत्वं तत्र तत्रानित्यत्वं यथा घटादिकम् । अत्रापि प्रध्वंसाभावस्य हेतुजत्वेन तस्य नैयायिकैः सादित्वानन्तत्वस्वीकारात् तत्र व्यभिचारवारणाय सत्यन्तम् । प्रकृतिपुरुषयोरपि भावत्वात् असम्भववारणाय विशेष्यदलम् । एतेन च महदादीनां सादित्वमनित्यत्वञ्चार्थात्सिद्धमपि स्पष्टार्थमग्रिमेण ५८ श्लोकेन दर्शितम् । अग्रिमे च (५९) श्लोके 'इदं क्षेत्रं शरीरं च' इत्यादिगीताप्रदर्शितक्षेत्रक्षेत्रज्ञत्वप्रदर्शनपूर्वकं शाश्वतत्व–( नित्यत्व )हेतुना विभुत्वञ्च साधितम्, तथा हि–'आत्मा नाणुः तथा सति शिरसि मे व्यथा पादयोश्चोल्लाघतेति प्रतीतेरनापत्तेः, ज्ञानादीनामप्रत्यक्षत्वापत्तेश्च । नाप्यात्मा मध्यमपरिमाणः, मध्यमपरिमाणस्य सावयवत्वनियमात् सावयवस्य च विनाशित्वनियमात् । असमवायिकारणस्यावयवसंयोगस्यावयवविनाशं प्रति कारणत्वात्–आत्मनोऽनित्यत्वे स्मरणानुपपत्तेश्च । कृतहान्यकृताभ्यागमप्रसक्तेः पूर्वमुक्तत्वाच्च। अत्राव्यक्तशब्देन पुरुषविशिष्टस्यैव प्रकृतेर्ग्रहणम्, पुरुषस्याप्यव्यक्तशब्दाभिधेयत्वं स्फुटमुच्यते, ऐन्द्रियकं व्यक्तं-दृश्यं तदन्यत्-तदतिरिक्तौ प्रकृतिपुरुषौ, अव्यक्तमिति विभजनात् । नन्वव्यक्तयोः प्रकृतिपुरुषयोरसत्वमेवास्तु शशविषाणवदिति शङ्कां परिहरन्ननुमेयत्वमाह–तयोः 'लिङ्गग्राह्यमतीन्द्रियमि' त्यादिना। तथा च प्रयोगः 'पुरुषोऽव्यक्ताद्यतिरिक्तः संघातपरार्थत्वात् । 'महत्तत्वं समूलं कार्यत्वात्' इति ।

सूत्राण्यपि 'प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्' सां० द० ५।७२ । 'कार्यात्कारणानुमानं तत्साहित्यात् । अव्यक्तं त्रिगुणाल्लिङ्गात्' 'तत्कार्यतस्तत्सिद्धेर्नापलापः' सां० द० १।१३५,—१३७ । पुरुषसिद्धौ तु 'संघातपरार्थत्वादित्यादिप्रमाणानि पूर्वं दर्शितानि तत स्ततो विरम्यते ।

उक्तञ्च गीतायामपि 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इत्यादिना क्षेत्रनिरूपणम् । क्षेत्रज्ञविवेचनञ्च 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्यनेन । यद्यप्यत्र गीतायां प्रकृत्यपरपर्यायस्याव्यक्तस्य क्षेत्रत्वमुक्तं तथापि तत्पुरुषरहितस्य केवलस्यैव, चरके च पुरुषविशिष्टस्याव्यक्तस्य क्षेत्रज्ञत्वमुक्तमिति प्रतिपादितं पूर्वं वक्ष्यते चोपरिष्टादपीति न विरोधाभासोऽप्युभयोः ।

चरकेऽपि-'अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः ।
सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा ।' शा०स्था०१।५७
इत्यतः 'इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् ।
अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः' । इत्यनेन वर्णितः एषोऽर्थः ।

## 'करणादियुक्तस्यैवात्मनः फलभोक्तृत्वादिकम्'

करणयुक्त एवाऽऽत्मा फलभोक्ता न तु तद्रहितः, ज्ञानवेदनादयोऽपि करणयुक्तस्यैव, तद्रहितस्य तु निर्विकारत्वात्, करणानि च दश बाह्यानीन्द्रियाणि त्रीणि चाभ्यन्तराणि बुद्ध्यहङ्कारमनांसि ।

तथा च सूत्रम्–'करणं त्रयोदशविधमवान्तरभेदात् ।'
श्रुतिश्च 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।'

तत्रैव चरकः 'करणानि मनोबुद्धिकर्मेन्द्रियाणि च।
कर्तुः संयोगजं कर्म वेदना बुद्धिरेव च' ॥
शा० स्था० १।५४ ।

'नैकः प्रवर्तते कर्तुं भूतात्मा नाश्नुते फलम् ।
संयोगाद्वर्तते सर्वं तमृते नास्ति किञ्चन' ॥
शा० स्था० १।५५।

'न ह्येको वर्तते भावो वर्तते नाप्यहेतुकः ।
शीघ्रगत्वात्स्वभावात्त्वभावो न व्यतिवर्तते' ॥
शा० स्था० १।५६ ।

सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥
सू० स्था० १।४५

निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ।
सू० स्था० १।५५

अत्र कतिधापुरुषीयाध्याये सांख्यमतं विशदमुपलभ्यते । प्रतिपादितञ्च तदात्मनिरूपणे यद्यपि, तथापि किञ्चिदवशिष्यते निरूपणीयं तदिह निरूप्यते—

तथाहि—तन्मते चतुर्धा तत्त्वविभागः, तत्र मूलप्रकृतिः प्रकृतिरेव, न हि तस्याः किञ्चिन्मूलान्तरमनवस्थापातात् । महदादयश्च सप्त प्रकृतिविकृत्यात्मकत्वेनोभयात्मकाः पूर्वपूर्वस्मादुत्तरोत्पत्तेस्तत्त्वान्तरोत्पादकत्वाच्च । एकादशेन्द्रियाणां पञ्चमहाभूतानाञ्चाहङ्कारपञ्चतन्मात्रेभ्यः—उत्पादात्, तत्त्वान्तरानुत्पादकत्वाच्च विकृतित्वमेव । एकस्तु पुरुषोऽनुभयात्मकः (न प्रकृतिर्नापि विकृतिः) । तथा चोक्तम्—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिःपुरुषः ।' इति

तथा च सूत्रम्—'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात्पञ्च तन्मात्राणि, उभयमिन्द्रियम्, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः' सां० द० १।६१ । 'मूले मूलाभावादमूलं मूलम् ।' सां० द० १।६७ इति सूत्रेण प्रकृतेरनादित्वं कारणत्वञ्च बोध्यते तत एव सृष्ट्युत्पत्तेः ।

तथा च श्रुतयोऽपि—

यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ।

'अव्यक्त एव चाक्षरः 'अव्यक्तोऽक्षर इत्युक्तः' इति गीतोक्तेः ।

'अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ।' इत्यादि ।

एष एवार्थश्चरके निरूपितः—

तथा हि—तत्र पञ्चविंशतितत्त्वानि 'मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी' । इत्यादिना प्रतिज्ञातानि । 'खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाऽष्टमः । भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडशे' त्यादिना स्पष्टं दर्शितानि ।

उत्पत्तिक्रमश्च 'जायते बुद्धिरव्यक्ताद् बुद्ध्याहमिति मन्यते । परं खादीन्यहङ्कारात् ।' शा० स्था० १।६४। इत्यादिना दर्शितः ।

अत्र यद्यपि 'पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः' इत्युक्त्याऽग्रेऽपि च 'मनो दशेन्द्रियाण्यर्थाः ।' इत्यादिना चतुर्विंशतितत्त्वानामेव परिगणनाद् विरोध आभासते, तथापि चिकित्सायां निरञ्जनस्योदासीनस्य पुरुषस्यानुपयुक्तत्वात्स पृथगपरिगण्याव्यक्तशब्देनैव गृहीतः, तथा चाव्यक्तशब्दस्य पुरुषविशिष्टः प्रकृतिरित्यर्थः ।

## जीवस्य देहादुत्क्रान्तिः ।

जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहो भूतसूक्ष्मैः परिष्वक्तो देहाद्देहान्तरं

प्रपद्यते—

तथा च सूत्रम् 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ।' वेदा० द० ।३।१।१

श्रुतयः—'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति' । छान्दोग्योप० ५।३।३।

'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिः, चन्द्रमा अङ्गाराः, नक्षत्राणि विस्फुलिङ्गाः' । छान्दो० ५।४।१ 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ।' २ इति । 'इति तु पञ्चम्यामाहुतौ, आपः पुरुषवचसो भवन्तीति०' छा० ५।९।१ ।

शङ्करदिग्विजयेपि बादरायणशङ्करसंवादेऽयमेवार्थः प्रतिपादितः, तथा च तत्रत्यौ श्लोकौ—

'पप्रच्छ सोऽध्यायमथाधिकृत्य
तृतीयमारम्भगतं यतीशम् ।
तदन्तरेत्यादिकमस्ति सूत्रं
ब्रूह्येतदर्थं यदि वेत्थ किञ्चित् ॥
स आह जीवः करणावसादे
संवेष्टितो गच्छति भूतसूक्ष्मैः ।
ताण्ड्यश्रुतौ गौतमजैबिलीय-
प्रश्नोत्तराभ्यां मथितोऽयमर्थः' ॥ इति ।

जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहो गच्छतीत्यत्र तु 'अथैनमेते प्राणा अभिसमायन्ति' बृ० आ० ४।४ इत्येवमाद्याः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्यन्ताः श्रुतयो मानम् ।

एष एवार्थश्चरके—

'भूतैश्चतुर्भिःसहितः सुसूक्ष्मै-
र्मनोजवो देहमुपैति देहात् ।
कर्मात्मकत्वान्न तु तस्य दृश्यं
दिव्यं विना दर्शनमस्ति रूपम्' शा० २।३१
अतीन्द्रियैस्तैरतिसूक्ष्मरूपै-
रात्मा कदाचिन्न वियुक्तपूर्वः ।
न कर्मणा नैव मनोमतिभ्यां
न चाप्यहङ्कारविकारदोषैः' ॥

शा० २।३७ आभ्यां प्रतिपादितः ।

अत्र भूतैश्चतुर्भिरित्युक्तिस्तु आकाशस्य विभुत्वेनाक्रियत्वाद् गमनासंभवात् ।

स च जीवः सानुशयो गच्छति—

तथा च सूत्रम्—'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथोक्तमनेवञ्च ।' वेदा० द० ३।१।८

श्रुतिस्मृती अपि—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् । अथ य इह कपूयचरणाः—अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्' इति । छान्दो० ५।१०।७

'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति' इति गौतमस्मृतिः ।

"तथा ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रपद्यन्ते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ।' इत्यापस्तम्बस्मृतिः ।

इममेवार्थं समासेन चरक आह 'स नित्ययुक्त सानुशयः स एव ।' शा० स्था० २।३२।

मनोनिरूपणम् ।

'साक्षात्कारे सुखादीनां करणं मन उच्यते ।'

॥ श्रीः ॥

प्राणाचार्य-विद्यासागर-सरस्वती-वैद्यावतंस-एल्. ए, एल्. एम्. एस.

इत्याद्युपाधिमण्डितानां महामहोपाध्याय—

# श्रीगणनाथसेनशर्ममहाभागानां

## गुणस्तवः ।

( ले० वैद्यश्रीनन्दकिशोरशर्मा भिषगाचार्यः, जयपुरराजकीयसंस्कृतकॉलेजस्य प्रधानायुर्वेदाध्यापकः । )

श्रीमन्नारायणावतारेण श्रीकृष्णचैतन्यमहाप्रभुणा तनयीकृतस्य श्रीमद्रघुनन्दनगोस्वामिनो दौहित्रवंशधराणां श्रीमत्पूर्वजानां वङ्गदेशान्तर्गतराढ़ाख्याञ्चलस्य श्रीखण्डग्रामे पारम्परिकिवासोऽभवत् । श्रीमतां पितामहः कुञ्जविहारिकविराजमहाभागस्तास्मिन्समये प्राचीनार्वाचीनशारीरशास्त्रयोः सामञ्जस्यमभिलषन् कविराजमहाभागस्य स्वहस्तेनान्नप्राशनसंस्कारं चक्रे । तस्य हि द्वौ पुत्रौ समभूताम् । तयोर्ज्येष्ठः श्रीकेदारनाथकविराजो यौवन एव बहुशास्त्रनिष्णाततया नानादेशेषु पर्यटन्नर्थयशसी सञ्चित्य चरमे वयसि संन्यासाश्रममाश्रितश्चिद्घनानन्दस्वामीति नाम्ना प्रसिद्धः । कनिष्ठस्तु विद्याकल्पद्रुमः श्रीविश्वनाथकविराजमहाभागश्चिकित्सायां विश्रुतः सर्वतन्त्राभ्यासी चासीत् । अस्यैव भाग्यवतस्तनयः सर्वतो विश्रुतकीर्त्तिरपरो धन्वन्तरिरिव शल्याङ्गानां प्रतिसंस्काराय पुनर्भुवमवतीर्णः कविराजश्रीगणनाथसेनमहाभागः १९३४ तमे विक्रमवर्षे जन्म लेभे ।

श्रीमान् हि बाल्ये वयस्येव भगवत्याः सुरभारत्याः कृपाभाजनतया सुललितां कवितां कर्त्तुमारभत । एतत्साद्‌भूततया लब्धानि कतिचित्पद्यानि प्रकटयितुमिच्छन्तोऽपि वयमवकाशाभावान्नोद्धर्त्तुमशकाम इति सत्यं चोखिद्यते नश्चेतः । श्रीमतः कविराजमहोदयस्य भगवत्यां सुरसरस्वत्यां स्वभावसिद्धोऽधिकार इति तत्प्रणीतेभ्यः सर्वेभ्योऽपि ग्रन्थेभ्यः सुस्फुटमवगम्यते । आयुर्वेदशास्त्रीयं श्रीमतामगाधं पाण्डित्यमवगत्य सर्वोऽपि मार्मिको लोकः परमं प्रसादमधिगच्छन् प्रहृष्टेनान्तरात्मना शतमुखं स्तवीति । कविराजमहाभागस्यैतादृशमहत्त्वस्य मूलकारणमेतस्यालौकिकी प्रतिभा । सुललितशब्दशय्याविभूषिता च श्रीमतां कविता सुप्रसन्नापि गभीरार्थवाहिनी प्राचः कवीननुसरति । श्रीमता स्वस्यासाधारणं पाण्डित्यमनितरसाधारणी च कविता स्वरचितग्रन्थेषु प्रत्यक्षशारीर-सिद्धान्तनिदानादिषु प्रत्यक्षमाविष्कृता । एतेषु हि प्रत्यक्ष-

शारीरन्नामाद्भुतः शारीरग्रन्थः सर्वमौलिभूतः। यानि हि प्राचीनानि शल्याङ्गान्येतदवधि आर्षग्रन्थेषु सूत्ररूपेणैव सर्वैः समासाद्यन्त, विस्तराभावकृतां च यत्सम्बन्धिन्यूनतामस्मिन युगे नवीनप्रभावभाविता जना विशेषरूपेणाविन्दन्। तमेत्रावश्यकतमं विषयं श्रीमान् कविराजमहाभागः प्राचीनया सरण्या प्रागाचार्यसंवादिभिरक्षरैश्च सुरुचिरमबध्नात्।

कविराजमहाभागस्यानेन ग्रन्थेन वर्त्तमानसमये आयुर्वेदशास्त्रे या किल सुमहती त्रुटिः प्रतीताभवत् सा सर्वथापगमिता। एवंविधस्य सुमहतः कार्यस्य सम्पादनाय सम्पूर्णेऽस्मिन्भारतभूखण्डे श्रीमान् कविराजमहाभाग एव सम्प्रति समुचितमधिकारमावहतीति नातिरञ्जितं वचः। यतोऽस्यायुर्वेदस्य यावन्तो विद्वांसः सम्प्रति सन्ति तैर्न शारीरिकविषयाः प्रत्यक्षं दृष्टाः। ये च नवीनायुर्वेदविज्ञाः आंग्लचिकित्सकाः (डक्टराः) ते आयुर्वेदस्य न मार्मिकाः, नापि च त एवंविधं संस्कृतग्रन्थमारचयितुमेव प्रभवः। किन्तु कविराजमहोदयः प्राचीनार्वाचीनोभयविधायुर्वेदशास्त्रस्य सुमहान्मर्मज्ञः। शारीरविषयस्य तत्त्वानि श्रीमता प्रत्यक्षं परीक्षितानि। एवंविधानां ग्रन्थानां भारतवर्षस्य प्रतिगृहं यदा प्रचारो भवेत्तदैवायुर्वेदस्योद्धारो भवेदिति निश्चप्रचम्।

कविराजमहोदयो न केवलं ग्रन्थप्रणयन एवापि तु चिकित्सायामपि सुभृशं सिद्धहस्तः। श्रीमता ह्यनेकेषां राजमहाराजानामवधानसापेक्षा चिकित्साऽक्रियत। सुगृहीतनामधेयो भूतपूर्वो जयपुरनरेन्द्रः श्रीमान्माधवसिंहमहाराजाधिराजोऽपि श्रीमता बहुकालं यावच्चिकित्सितः। यत्र हि प्रत्यहं सहस्रमुद्राः संगृह्णता कविराजमहोदयेन लक्षद्वयानुमितोऽर्थः प्रभूतं यशश्च समुपार्ज्यत। एवं सत्यपि श्रीमान् सार्वजनिककार्येष्वग्रगण्यः। बहुष्वेव जनताहितकार्येषु श्रीमता प्रचुरं प्रयतितम्। विश्वनाथायुर्वेदविद्यालयस्य तु श्रीमान् सर्वस्वभूत एव। कविराजमहोदयस्यैवंविधानामलौकिकगुणगणानामेवायं प्रभावो यच्छ्रीमान् भारतवर्षीयेषु समग्रेष्वपि वैद्येषु परमां लोकप्रियतां भजते। अत एव हि विनयातिशयात् सुभृशं प्रतिषिध्यन्नपि श्रीमान् कविराजमहोदयो वैद्यसम्मेलनस्य सभापतित्वे त्रीन्वारानव्रियत वैद्यमहाभागैः।

श्रीमान् कविराजमहानुभावः सम्प्रति हिन्दूविश्वविद्यालयसदृश्यां सर्वमान्यसंस्थायामायुर्वेदपरिषदः सर्वमान्योऽध्यक्षः (डीन ऑफ आयुर्वेदिक फैकल्टी)। अस्माकं कविराजमहोदयोऽनितरसाधारणस्य वैदुष्यस्य यथा भाजनं तथा भगवत्या लक्ष्मीदेव्या अपि भूयस्तरां कृपापात्रम्। कलिकातासदृशेऽपि महानगरे कविराजमहोदयस्य कल्पतरुप्रासादः सर्वजनसुप्रसिद्धः।

अस्तु। स्थानावसरसंकोचाद् गुणवर्णनमुपसंहरन्तो वयमेव किम्, सर्व एवायुर्वेदहितैषिणो महाभागाः, स्वहृदयेनाशासते यत्कविराजमहाभागश्चिरकालं यावदायुर्वेदहितमनुतिष्ठन् भारतीयवैद्यसमाजस्य मण्डनायितो भूयादिति।

---



महामहोपाध्याय प्राणाचार्य वैद्यावतंस
कविराज श्रीगणनाथसेनसरस्वती
(एम. ए. एल्. एम्. एस्.)
कलिकत्ता ।





चिकित्सकवर्य–आयुर्वेदमार्तण्ड–
प्राणाचार्य–आयुर्वेदीयानेकग्रन्थोद्धारक
श्रीयादवजी त्रिविक्रममहाभागः बम्बई ।



वैद्यवर्य—आयुर्वेद सेवापरायण—
श्री गोवर्द्धनशर्मछागाणी महोदयः नागपुरम् ।

तल्लिङ्गन्तु विषयेन्द्रियसम्बन्धे सत्यपि विभुनात्मना तत्संयोगासंयोगाभ्यां विषयस्य ग्रहणाग्रहणम् । तथा चानुमानप्रयोगौ—'सुखादिसाक्षात्कारः सकरणकः अन्यसाक्षात्कारत्वात्, चाक्षुषसाक्षात्कारवत् । सुख-दुःखाद्यसमवायिकारणं संयोगः क्वचिदाश्रितः मुख्य-सम्बन्धत्वात्समवायादिवत्' इति ।

तच्चाणु, न विभु, ज्ञानानामयौगपद्यात् ।

तथा च सूत्राणि—'प्रयत्नायौगपद्याज्ज्ञानायौगप-द्याच्चैकम् ।' वै०द० ३।२।३। 'युगपज्ज्ञानानुत्पत्तिर्म-नसो लिङ्गम्' । न्या० सू० ७।१।२३। 'तदभावादणु मनः ।' वै० द० ७।१।२३ । 'न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वास्यादिवच्चक्षुरादिवच्च' सां० द० ५।६९ । 'सक्रियत्वाद् गतिश्रुतेः ।' सां०द० ५।७० श्रुतिरपि 'अन्यत्रमना अभूवं नाश्रौषम्, अन्यत्रमना अभूवं नाद्राक्षम्' इत्याह ।

इममेवार्थं चरक आह 'लक्षणं मनसो ज्ञानस्या-भावो भाव एव वा । सति ह्यात्मेन्द्रियार्थानां संनिकर्षे न वर्तते ।'

'वैवृत्यान्मनसो ज्ञानं सांनिध्यात्तच्च वर्तते । अणु-त्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ' । शा०१।१७,१८

'इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते' ।

शा० १।२०। इति ।

## प्रमाणनिरूपणम् ।

तत्र चरकः—'त्रिविधं खलु रोगविशेषविज्ञानं भवति तद्यथा आप्तोपदेशः प्रत्यक्षमनुमानञ्चेति' ।

तल्लक्षणानि—'तत्राप्तोपदेशो नामाप्तवचनम्' 'प्रत्यक्षं खलु तत्, यत्स्वयमिन्द्रियैर्मनसा चोपलभ्यते ।' 'अनुमानं खल्वपि तर्को युक्त्यपेक्षः' वि० स्था० ४।३, ४, ५, ६।

अग्रेऽपि 'आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च, अनुमानेन' इत्यादिना प्रमाणानां त्रैविध्यमुक्तम् । उक्तञ्च पुरस्तात् आत्मेन्द्रियार्थानामित्यादिश्लोकत्रय्या प्रत्यक्षा-देर्लक्षणानि, सूत्रस्थाने एकादशाध्याये सप्तदशश्लोका-त्तन्निरूपणं द्रष्टव्यम् ।

तथा च सूत्रम्-'त्रिविधं प्रमाणं तत्सिद्धौ सर्व-सिद्धेर्नाधिक्यसिद्धिः' सां० द० १।८८। 'यत्सम्बन्ध-सिद्धं तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ।' सां० द० १।८९। 'प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् । आप्तो-पदेशः शब्दः' सां० द० १।१००, १०१ । 'प्रत्यक्षानु-मानागमाः प्रमाणानि' । यो० द० १।७। उपमानादीनां यथायथमेष्वेवान्तर्भावः ।

## योगमोक्षौ

तत्र योगलक्षणं 'योगश्चित्तवृत्तिनिरोधः' इति । तेन वेदनानां निवृत्तिश्च 'तत्परं पुरुषख्यातेर्गुणवैतृ-ष्ण्यम्' 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इत्यादिना निरू-पिताऽग्रे च तद्भेदा अपि । एवं मोक्षलक्षणं तत्र सर्व-दुःखनिवृत्तिश्च तत्तद्दर्शनेषु निरूपिते । तद्यथा 'बाध-नालक्षणं दुःखम्' न्या० द० १।१।२१। 'तदत्यन्तवि-मोक्षोऽपवर्गः' न्या०द० १।१।२२ 'त्रिविधदुःखात्यन्त-निवृत्तिरत्यन्तपुरुषार्थः' सां० द० १।१। एवमन्यत्रापि।

चरके त्वेतत्सर्वं योगे मोक्षे च सर्वासां वेदना-नामवर्तनमित्यादिना विस्तरेण निरूपितम् । एवमेव शारीरस्थाने पञ्चमाध्यायेऽपि 'निवृत्तिरपवर्गः' इत्यादिना व्यासेन मोक्षस्य लक्षणं दर्शितं तदुपायाश्चापि । एवं नैके दार्शनिका विचाराश्चरके विनिरूपिताः—तद्यथा—शारीरस्थाने पञ्चमाध्याये प्रवृत्तिकारणम्, निवृत्त्युपाय-दर्शनम्, तत्रैव च पुरुषे षण्णां धातूनां वर्णनम्, विमानस्थानेऽष्टमेऽध्याये वादमार्गनिरूपणे प्रमाणप्रमे-यादिषोडशपदार्थविवेचनम्, तत्रैव वर्ण्यसमप्रकरण-समसव्यभिचारादिहेत्वाभासनिरूपणञ्च । दिग्दर्शनमा-त्रमेतत् । मया तु विस्तरभयाद्विरम्यते । इति शम्

# आयुर्वेदाध्यापनपद्धतिः ।

लेखकः—वैद्यवरः श्रीत्र्यम्बकशास्त्री आपटे

ब्रह्मप्राजापत्याश्विवलभिद्धन्वन्तरिपरम्परां समलङ्कुर्वाणा ग्रहमालां चालयन् विवस्वानिव अतिदीर्घशिष्यमालां धारयन्तः शिष्यतमोनिरासभास्कराः, अविरतायुर्वेदाध्यापननिरता असंख्यरुग्णेभ्यो दशेन जीवितदानेन यथार्थत्वेन पीयूषपाणयः सार्वजनिककार्यार्थं प्रदत्तस्वोपार्जितलक्ष्मीकाः तथापि श्रीसरस्वत्योः स्वामित्वेन सकलभारतीयवैद्यमण्डलं च रमयन्तः श्रीमन्तो महानुभावाः श्रीलक्ष्मीरामस्वामिमहाभागाः सुचिरप्रचालिताध्यापनकार्यादधुना विरमन्ति। तैश्चैतत्पाठनकार्यं सुदीर्घकालपर्यन्तं कृतम् । तेषां किलाध्यापनपद्धतिः सुतरां रमणीयासीदिति सर्वश्रुतम्। अथैतत्प्रसङ्गानुसारेण आयुर्वेदाध्यापनपद्धतिविषये किमपि विवेचनं कृतं चेत्तर्हि तत्सर्वथा स्थाने भविष्यतीति मनसिकृत्य किंचिल्लिखितुं प्रवृत्तोऽस्मि ।

यस्य च अध्यापनपद्धतिविषये विचारः करणीयोऽस्मिन् प्रबन्धे स आयुर्वेदो नाम आयुषः शास्त्रम्। उक्तं हि सुश्रुते 'आयुरस्मिन् विद्यतेऽनेन वाऽऽयुर्विन्दतीत्यायुर्वेदः' इति । किं नाम पुनरायुरित्येवं विचार्यमाणे सति चरकसंहितायामेवमुक्तं यत् 'हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते' इति । अतः आयुर्नाम हिताहितयोः सुखदुःखयोश्च सम्मेलनम् । तदायुश्चास्मदीयं कथं सुखमयं स्यात् , कथं च दुःखं नोत्पद्येत, कथं च सर्ववस्तुजातमस्मज्जीवनाय हितकरमेव स्यात् , अहितकरं च कथ न भवेदिति, तथैव च आयुः कथं दीर्घतमं स्यात् , कुत इति चैषा किल सर्वप्राणिनां परममनीषा। यतो हि चरकेणोक्तम् । "दीर्घं जीवितमन्विच्छन्भरद्वाज उपागमत् । इन्द्रमुग्रतपा बुध्वा शरण्यममरेश्वरम्" इति । एवंप्रकारो विवेकः यस्मिंश्च शास्त्रे कृतः स एव आयुर्वेद इति तात्पर्यार्थः ।

अनेनार्थेन यानि यानि खलु शास्त्राणि एतद्विषयकं विचारं प्रवर्तयन्ति तानि सर्वाण्यपि आयुर्वेदसंज्ञामर्हन्ति । एतादृशानि किल बहुविधानि जागतिकानि शास्त्राणि काले चैतस्मिन्नस्मदीये भारतवर्षेऽपि प्रचलितानि सन्ति । यथा हि चरकसुश्रुतादिभिर्ग्रन्थैः प्रपञ्चितं शास्त्रम् "आयुर्वेदो" नाम। स च भगवता धन्वन्तरिणा स्वयमेवोक्तम्—"अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् । शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्" इति । तथा च "अलोपेथि" नामकं चिकित्साशास्त्रम् । न जाने किम् 'अल्ला उपैति' स्वयमेव शास्त्रमिदमुपदेष्टुम् । एतच्च शास्त्रमुपरि निर्दिष्टार्थेन 'आयुर्वेद' संज्ञां लभेत। तथा च होमार्पेथि ( उमापति ) शास्त्रम्। पठितमेव स्यात्सर्वैः वार्तापत्रिकास्वपि यदस्य "हुमापथि" शास्त्रस्य भगवान् मापतिः श्रीकृष्ण एव प्रणेता" इत्येवंविधं कस्यचित्पण्डितवरेण्यस्य मतमस्तीति । अत्र मापतिरेव उमापतिः । कथमिति चेत्कथ्यते "स्कूलस्टूलस्टेशनानां इस् आदेशः" यथा इस्कूल् , इस्टूल्, इस्टेशन् इत्ये-

वम्। तथैव "मापति" इत्यत्र आद्यस्य मकारस्य ओष्ठवर्गीयत्वादादौ उ इति आदेशः। अतः "उमापतिः"। तथा च कोमोपॅथि हायड्रोपॅथि इक्लॉपथि नॅचरोपॅथि इत्येवंविधानि शास्त्राणि "आयुर्वेदः" इत्येव संज्ञां लभेरन्। परं च प्रबन्धेऽस्मिन् चरकसुश्रुतादिभिः प्रणीतः स एव आयुर्वेदः, तस्यैव अध्यापनपद्धतिर्विषयीभूता इति वर्तते विवक्षा। सा च पद्धतिः अतिप्राचीनकाले कीदृशी आसीत, नातिप्राचीनकाले च कथंरूपा किलाभवत्, आधुनिके काले तु कथमध्याप्यतेऽयमायुर्वेदः, भविष्यति काले पुनः कीदृशी खलु तस्य पठनपाठनसरणिर्भवितुमर्हतीत्येवंविधं किञ्चिद्विवरणं कर्तुमिच्छामि।

पुरा हि भरद्वाजनामा विपुलबुद्धिरुग्रतपाश्च मुनीश्वर एक आसीत्। विविधरोगोपद्रुतत्वमल्पायुष्ट्वं चावलोक्य प्रजानां स मनस्यचिन्तयत् यल्लोककल्याणार्थं मया किमपि कर्तव्यमिति। लोकास्तु जरारुजामृत्युभिः सर्वथा परिपीडिता इति समवलोक्य कः स्यादेतेषां शमोपायः इति बहुभिरन्यैर्मुनिभिः साकं स ध्यानमास्थितः। अथ ते सर्वेऽपि ध्यानचक्षुषा अमरवरं शक्रं शरणं ददृशुः। अमरेश्वरस्येन्द्रस्य दीर्घायुष्ट्वं नित्यतारुण्यं च सुप्रसिद्धम्। यद्यपि इन्द्रपदेन तस्य ऐन्द्रियसुखनिमग्नत्वं संसूच्यते तथापि महानेवायं आयुर्वेदवेत्ता। गुरुपरम्परा च तस्येदृशी--"आदौ ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत्। सोऽश्विनौ। तौ चैनं सहस्राक्षमध्यापयामासतुः।" अतोऽयमेवामरप्रभुर्यथावच्छमोपायं वक्ष्यतीति मत्वा सर्वेषां मुनीनामैकमत्येन तत्प्रतिनिधिभूतो भरद्वाजः शक्रमुपागमच्छिष्यत्वेन। बहुविधराजकार्यव्यापृतो हि पाकशासनः, तथापि यथाकथंचिदवसरे प्राप्ते विमलविपुलबुद्धिरयं मुनीश्वरो भरद्वाज इति दृष्ट्वा अमरेश्वरेण तस्मै हेतुलिङ्गौषधज्ञानः स्वस्थातुरपरायणः त्रिसूत्रः शाश्वतः पुण्यः आयुर्वेदः पदैरल्पैः समुपदिष्टः। ऋषयश्च भरद्वाजाज्जगृहुस्तत्प्रजाहितं शास्त्रं निरवशेषम्। भरद्वाजस्य शिष्यस्तमायुर्वेदं पुनर्वसुः शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया। अग्निवेशादयः स्वानि पृथक् तन्त्राणि तेनिरे। सर्वेऽप्येते आकरग्रन्थाः समजायन्त। ततः प्रभृति नातिप्राचीनकालपर्यन्तं सर्वेऽपि गुरव एतेभ्य एव कांश्चन ग्रन्थान् संलक्षीकृत्य स्वशिष्यानायुर्वेदमध्यापयामासुः। अथ "युगे युगे यथा धर्मः पादतो हीनतां गतः, गुणसंघश्च भूतानां संसारो देहिनां तथा।" अतः प्राचीनानां अनेकशास्त्रपारंगतानामाचार्याणां स्थाने केचन नातिबहुश्रुताः अध्यापकाः समजायन्त। किन्तु ते यथामति आयुर्वेदपाठनमकुर्वन्। एतेषु आयुर्वेदाध्यापकेषु केचन सत्यमेव केवलं न्यायशास्त्रप्रवीणाः, केचन साहित्यपण्डिताः, केचिद्रसायनविधाननिपुणाः, केचन केवलं रोगचिकित्सकाः, अत एव एकाङ्गवीराः सन्तः सर्वाङ्गसंपूर्णमायुर्वेदं पाठयितुं प्रवृत्ताः। पद्धत्यानया किमभवत्तच्छ्रूयताम्। यस्मिन् विषये येषु विषयेषु वा गुरूणां बुद्धिविशेषात् प्रगतिविशेष आसीत्, ये च विभागाः पौनःपुन्येन दृष्टिपथमारूढाः तेष्वेव विषयेषु शिष्याणामप्यध्ययनं समीचीनतया संसिध्यति स्म। ये पुनरन्ये विषयाः कदाचिदेव प्राप्तकालाः, तेषामध्ययनाध्यापने नितरामौदास्यं संजातम्। शिष्याणामप्येतादृश्येव अवनतिः संजाता। विमलविपुलबुद्धेः अधीतानेकशास्त्रस्य आद्यशिष्यस्य भरद्वाजस्य स्थाने अल्पमन्दबुद्धीनाम् अन्यविषयेषु (भैक्ष्याचरणेऽपि) सर्वथा असमर्थानाम् अल्पसाधनानां जडानां बालानां वा आयुर्वेदशिष्यत्वेन संग्रहः कृतः। किं बहुना आयुर्वेदच्छात्राणामितरशास्त्राध्ययनं नावश्यकमिति सर्वसाधारणं मतं समभवत्। अतः ये केचन यथाकथंचिदायुर्वेदमधीत्य

दैद्यकचणा अभूवन्। तेषां मध्यात् केचन ग्रन्थानां वाक्यावयवपदवर्णानाम् औचित्यानौचित्यनिर्णये पाण्डित्यं प्रदर्शयन्तः कर्मण्यकुशलाः, केचन औषधिनिर्माणे कुशलाः किन्तु रोगचिकित्सायामज्ञाः, केचन परंपराप्राप्तानुभवयोगाच्चिकित्साकर्मणि कुशलाः किन्तु शास्त्रीयविचारादिनिर्णये सर्वथा असमर्थाः, एवं एकाङ्गा इव वैद्याः समभूवन्। साधारण्येन वर्तमानकालपर्यन्तमपि एतादृशी स्थितिर्विद्यते। एवं प्रवर्तिते अध्ययनाध्यापनचक्रे सम्प्रति वैद्यानामायुर्वेदज्ञानं कियदवशिष्टं तद्वर्णयामि।

अष्टौ खलु अङ्गानि स्मृतान्यायुर्वेदस्य। तानि यथा-१ कायचिकित्सा २ बालचिकित्सा ३ ग्रहचिकित्सा ४ ऊर्ध्वाङ्गचिकित्सा ५ शल्यचिकित्सा ६ दंष्ट्राचिकित्सा ७ जराचिकित्सा ८ वृषचिकित्सा चेति। एतेषामर्थाः संक्षेपतः स्पष्टीक्रियन्ते। १ कायचिकित्सा नाम कायिकरोगाणां विशेषतस्तु ऊर्ध्वजत्रुविकारान् परित्यज्य अधःशरीरजानां रोगाणां चिकित्सा। २ बालचिकित्सा नाम बालानां ये रोगविशेषाः स्कन्दापस्मारपारिगर्भिकादयस्तेषां चिकित्सा। ३ ग्रहचिकित्सा नाम देवासुरादिग्रहजुष्टानां चिकित्सा। ४ ऊर्ध्वाङ्गचिकित्सा नाम जत्रूर्ध्वं ये भवन्ति रोगास्तेषां चिकित्सा शालाक्यतन्त्रं नाम। ५ शल्यचिकित्सा नाम काष्ठलोष्टादिशल्यानां शरीरगतानां व्रणानां च यन्त्रशस्त्रादिसाधनैः शसनक्रियात्मिका चिकित्सा। ६ दंष्ट्राचिकित्सा नाम वृक्षमूलादिसर्पान्तसकलविषदष्टानां चिकित्सा। ७ जराचिकित्सा नाम जराप्रतिबन्धार्थं चिकित्सा। तथा च ८वृषचिकित्सा नाम सर्वशरीरधातुपुष्टिकरणार्थं चिकित्सा। एतेष्वङ्गेषु ३ ग्रहचिकित्सानामकं यदङ्गं तत्र दैवज्ञानां देवलकानां च वर्ततेऽधिकार इति मत्वा आयुर्वेदिकैः तस्याङ्गस्य त्यागः कृतः। सांप्रतं विरला एव वैद्यास्तस्य विज्ञानं समधिगच्छन्ति, कर्माभ्यासं वा कुर्वन्ति। ४ ऊर्ध्वाङ्गचिकित्सा ५ शल्यचिकित्सा चेति यदङ्गद्वितयं तत्कथं नष्टं तच्छ्रूयताम्। एतयोरङ्गयोर्वैज्ञानिके भागे प्रेतशरीरविच्छेदनपूर्वकस्य शारीरज्ञानस्य महती च आवश्यकता वर्तते। सुश्रुतकाले ईदृशं शारीरज्ञानं वैद्यानां सुस्पष्टमासीदिति तस्यैव ग्रन्थराजस्य विशदवर्णनेन दृष्टिपथमायाति। किन्तु बुद्धानां राजवृत्तौ "अहिंसा परमो धर्मः" इति वचनमर्थस्य परां काष्ठामगमत्। शारीरज्ञानार्थं कृतं प्रेतविच्छेदनमपि बुद्धनृपाणां शासने 'हिंसा' इति संज्ञामलभत। अथ राजदण्डभयाद्वैद्यैरेतच्छरीरव्यवच्छेदनं विसृष्टं तेन च शल्यशालाक्यतन्त्रमपि नष्टम्। आनन्तरिके काले तु भरतभूमिं समागते सर्वत्र प्रचालिते च पाश्चात्यवैद्यशास्त्रे तच्छास्त्रपारंगतेभ्यो दक्षतरेभ्यः शल्यशालाक्यचिकित्साविषये राजशासनेन अधिकाराः प्रदत्ताः। अतो वैद्यहस्तादेष विषयः पलायितः। ६ दंष्ट्राचिकित्साया अपि लोप एवमेवाभवत्। प्रायः सर्वेऽपि वैद्योत्तमाः नगरवासिनः सञ्जाताः। खेटकेषु उषित्वा तत्र वैद्यव्यवसायं कर्तुं न कोऽपि वाञ्छति। नगरेषु तु हिंस्रपशूनां कीटकानां वा वर्तते अभावः। अतः एतद्विषये चिकित्साकार्यप्रसङ्गो न वारंवारं समुत्पद्यते। अपरं च पाश्चात्यवैद्यैरेतद्विषयकं सुमहत्संशोधनकार्यं कृतम्। अनेकविधहिंस्रपशुकीटकविषप्रशमनार्थं किं बहुधा तत्तद्विषलक्षणप्रतिबन्धार्थमपि तैरुपाया निश्चिताः। राजाश्रययोगाच्च ते सर्वेषां सुलभाः संजाताः। अत एतच्चिकित्साप्रार्थिनः सर्वेऽपि रुग्णाः पाश्चात्योपायानाश्रयन्ते। न कोऽपि सर्पदष्टोऽलर्कदष्टो वृश्चिकदष्टोऽपि वा वैद्यं प्रति समागच्छति चिकित्सार्थम्।

वानरग्रन्थिसंयोजनेन जरायुक्तो नरो निर्जरो

भवति, तारुण्यमखण्डं च सम्प्राप्नोतीति वर्तते कश्चित्पाश्चात्त्यचिकित्साशास्त्रे नवीनप्रयोगः । सर्वसुलभे च संजातेऽस्मिन् प्रयोगे ७ जराचिकित्सा ८ वृषचिकित्सा चेत्यस्मिन्नङ्गद्वितये यच्च वैशिष्ट्यमायुर्वेदस्य अद्ययावद् दृश्यते तदपि कालान्तरेण मन्दीभवेदिति समुद्भूतं सकारणं भयम् ।

एतावता कर्तनेन कियदवशिष्टमायुर्वेदस्य वैद्यहस्तेषु । तदेतदेव केवलं यत्सर्वसाधारणकायरोगाणां निदानं तच्चिकित्सा च । अथ आधुनिकेषु आयुर्वेदग्रन्थेषु शार्ङ्गधरसदृशेषु अद्वितीयस्यास्य अङ्गस्य कथं प्रपञ्चः क्रियते इति चेत्, केवलं संख्यासंप्राप्तिरेव दीयते रोगाणाम् यथा-"पाण्डुरोगाश्च पञ्च स्युर्वातपित्तकफैस्त्रिधा । त्रिदोषैर्मृत्तिकाभिश्च" । "छायाः पञ्चैव विज्ञेयास्त्रिभिर्दोषैस्त्रयश्च ते । चतुर्थः सन्निपातेन पञ्चमः स्याद्उरःक्षतात्" । "तथाष्टावुदराणि च । वातपित्तात्कफात्त्रीणि त्रिदोषेभ्यो जलादपि । प्लीहक्षताद् बद्धगुदादष्टमं परिकीर्तितम्" । अथ एतदनन्तरं बहुविधा औषधिप्रयोगाः कथ्यन्ते । निदानं च चिकित्सा च सर्वथा कार्यकारणभावदर्शनाद्विनैव प्रपञ्चीक्रियते । किन्तु एतदङ्गं नित्यव्यवहारस्य प्राणभूतमिति कृत्वा यथाकथंचित् प्राणान्धारयति । ईदृशानेव ग्रन्थान् साम्प्रतं प्रतिशतं पञ्चसप्ततिसंख्याका वैद्याः पठन्ति । कर्माभ्यासः पुनरेतेषां यथाकथंचित् सद्गुरुकृपया गुरोश्चिकित्सालये यः कोऽपि भवेत् स एव । तत्र तु केवलं कायिकरोगपीडिताः प्रायेण समागच्छन्ति । तेषां मध्यादपि केचन स्त्रीरुग्णाः संकोचात्, पुरुषरुग्णास्तु केचन अतिप्रतिष्ठिता इति कृत्वा शिष्येभ्यो द्रष्टुं परीक्षितुं च न शक्यन्ते । व्यक्तिशो गुरोः सकाशादधीतानामियमवस्था वर्तते । सन्ति नाम साम्प्रतं केचन विद्यालयाः येषु आयुर्वेदः अध्याप्यते । परं च तेऽपि विद्यालयाः अपर्याप्तशिक्षणसाधनाः सन्तः सर्वाङ्गपरिपूर्णमायुर्वेदमध्यापयितुं न प्रभवन्ति । अयमेव वर्तते आधुनिके काले आयुर्वेदस्य पठनपाठनप्रचारविषयको वृत्तान्तः ।

एतदनन्तरं भविष्यति काले कथं करणीयमायुर्वेदस्य पठनपाठनमित्येनं विषयमधिकृत्य यथामति किमपि संसूचयामि ।

प्रथमं तावत् विषयप्रधानग्रन्थरचना कार्या । आर्षग्रन्थाः प्राचीनाः सर्वेऽपि आकरग्रन्थाः । तेषु सर्वाण्यपि वेदस्याङ्गानि प्रपञ्चितानि । किन्तु कस्य वा विषयस्य कुत्र उल्लेखः स्यादिति न नियतम् । यथा चरके शारीरेन्द्रियविज्ञानस्य केचन विषयाः शारीरस्थाने, केचन विमानस्थाने । अन्ये केचन चिकित्सायां कल्पस्थानेऽपि दृश्यन्ते । सर्वांस्तांस्तत्तत्स्थानस्थितानेकीकृत्य शारीरविषयक इन्द्रियविज्ञानविषयकश्च स्वतन्त्रः प्रबन्धः करणीयः । विषयप्रधानग्रन्थानां सर्वोत्तममुदाहरणम् "माधवनिदानम्" नाम । यद्यपि तस्मिन् "तेषां वक्ष्यामि भेषजम्" इत्यप्रस्तुतं किंचन वाक्यं दृश्यते तथापि तत्पादपूरणार्थमेवेति मन्तव्यम् । परं च एक एव निदानविषयस्तत्र सविस्तरं प्रपञ्चितः । विषयप्रधानेषु हि ग्रन्थेषु तत्तद्वर्ण्यविषयमनुसृत्य यत्किमपि वक्तव्यं स्यात्तत्सर्वमपि विनैव विषयान्तरभयात् विस्तरेण लिखितुं शक्यते । ईदृशानेव विषयप्रधानग्रन्थान् सम्मुखीकृत्य शिष्या अध्याप्याः ।

प्राचीनकाले गुरुरेव स्वशिष्येभ्यः अन्न—वस्त्रप्रदानपूर्वकमेव विद्यावितरणं करोति स्म । साम्प्रतं तत्कठिनं कठिनतरं च संजातम् । अधुना विद्याप्राप्त्यर्थं शुल्कप्रदानप्रचारः सर्वत्रापि दृश्यते । प्रभवन्ति च शिष्याः शुल्कं प्रदातुम् । निःशुल्का विद्यापि न समीचीनतया दीयते स्वीक्रियते चेति सार्वजनिकं मतम् । अतः व्य-

क्शिः संघशो वा आयुर्वेदाध्यापकैः महाविद्यालयाः, विद्यालयाः पाठशालाश्च संस्थापनीयाः। अद्यतन्यां-परकीयराजवृत्तौ ईदृश्यः संस्थाः राजाश्रयं तद-नुसरणशीलानां धनिकानां वा आश्रयं प्राप्नुवन्तु वा न वा। सहकार्येणापि संस्थाः प्रचालयितुं शक्यन्ते। एताश्च संस्थाः विशेषतस्तु महाविद्यालयाः यथा स्युः सर्वशिक्षणसाधनसम्पूर्णास्तथा करणीयाः। शिष्याणां प्रत्यक्षज्ञानार्थं कर्माभ्यासार्थं च सुतरां वर्तते आव-श्यकता शरीरव्यवच्छेदनशालानां शस्त्रकर्मशालानां च, तथा च संग्रहालयानां वनस्पत्युद्यानानां च, तथैव औष-धिनिर्माणशालानां विविधसंशोधनशालानां च विशेष-तया रुग्णालयानां प्रसूतिगृहाणां च। अथ कानिचित् कर्माणि अभ्यासार्थं वारंवारं द्रष्टुं न सुलभानि सन्ति। यथा प्रसूतिप्रयोगः स्वाभाविकः अस्वाभाविकश्च। तथा च महान्ति शस्त्रकर्माणि। एतेषां ज्ञानार्थं या च विद्यते आधुनिकी कला चलच्चित्रपटानां तस्या अपि साहाय्यं ग्राह्यम्।

एतादृशेषु विद्यालयेषु अनेकैर्गुरुभिः तत्तच्छास्त्र-पारंगतैः तत्तच्छास्त्रविशेषज्ञैश्च श्रमविभागयोगेन शि-ष्यगणाः पृथक् पृथक् पाठनीयाः। "शतायुर्वै पुरुषः" इति प्राचीनं वचनम्। अधोऽधो गच्छता भारतीया-नामायुर्मानेनानेन साम्प्रतं कुत्र पदं न्यस्तं तद्वक्तुमपि न समीचीनम्। एतादृशे ह्रस्वे आयुषि केनापि पुरुषेण अनेकशास्त्रपारंगतत्वं लब्धुं कठिनतरम्। अनेकशास्त्रशि-क्षितानामपि केषुचिच्छास्त्रेष्वेव बुद्धेर्विशेषो दृश्यते। तेषां तद्विशेषस्य लाभः शिष्येभ्यो देयः।

शिष्यैरपि कीदृशैर्भाव्यं तद्वर्णयामि। आयुर्वेदस्य सर्वप्रथमः शिष्यो भरद्वाजः। स तु विमलविपुलबुद्धि-रद्युमतपाश्चासीत्। तेन च अधीतसर्वशास्त्रेण केवलं लोकानुग्रहकाङ्क्षया आयुर्वेदोऽधीतः। सांप्रतं ये च छात्रा आयुर्वेदस्य गले पतन्ति तेषु साधारण्येन सर्वेपि स्वकीयप्राणयात्रार्थमेवायुर्वेदं सद्यः फलदायिनं पठन्ति। द्रव्याभावाद् बुद्ध्यभावाद्वा येषां नान्यत्र गतिर्भवति तेषां मध्याद् बहव आयुर्वेदस्य सम्मुखा भवन्ति। येन केनापि व्यवसायेन उदरभरणेच्छुभिः कैश्चन प्रवाह-पतितैरपि आयुर्वेदः पठ्यते। केचन वैद्यानां पुत्रा इत्यत एव आयुर्वेदं हस्ते गृह्णन्ति। आयुर्वेदस्य यत्किल सत्यत्वेन विद्यते माहात्म्यं तदेते नैव जानीयुः। सर्वेषां शास्त्राणां मुकुटमणिरेवायुर्वेदः। इतरशास्त्राणि केवलं मनःसंस्कारफलानि। आयुर्वेदेन पुनः व्याधि-परिमोक्षस्वास्थ्यरक्षणरूपेण सर्वप्रियतमाः प्राणाः संर-क्ष्यन्ते। इतरशास्त्राणां ये च सन्ति सिद्धान्तास्तान-धिष्ठायैव आयुर्वेदः सुप्रतिष्ठितः। न सन्ति कानिचि-दपि शास्त्राणि येषामुपयोग आयुर्वेदे न भवति। न विद्यते किमपि शरीरं यच्च नास्ति आयुर्वेदाधिकरणम्। न दृश्यते जगति किञ्चिदपि द्रव्यं यच्च भवेदनौष-धम्। आयुर्वेदच्छात्राणामितरशास्त्राध्ययनं नावश्यक-मिति यच्च दृश्यते केषांचिददूरदर्शिनां मतं तत्सर्वथा मिथ्यैव। उक्तं हि—"एकं शास्त्रमधीयानो न विद्या-च्छास्त्रनिश्चयम्। तस्माद् बहुश्रुतः शास्त्रं विजानी-याच्चिकित्सकः।" इति। येन खलु एकमेव चिकित्सा-शास्त्रमधीतं स वैद्य इतरशास्त्रसिद्धान्तान् परिपाल्य किमपि सुसम्बद्धं वक्तुं प्रभवेदिति न। उक्तं हि—"न ह्येकस्मिन् शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्तुम्" इति। अतस्तदुपरि उपायोऽपि चिन्तितः। यथा—"अन्यशास्त्रोपपन्नानां चार्थानामिहोपनीतानामर्थवशा-त्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यम्" इति। तद्विद्व्याख्यानश्रवणार्थमपि योग्यता स्यादिति कृत्वा आयुर्वेदाध्ययनेच्छुभिः पूर्वं तावद् इतरशास्त्राध्ययनम् अल्पतया किं न भवेत्, परं च अवश्यमेव कर्तव्यम्।

आधुनिके पाश्चात्त्यशिक्षणक्रमे या किल विद्यते पद्धतिः, तस्यामपि एतदेव दरीदृश्यते यन्महाविद्यालयीयादभ्यासक्रमात्प्राक् नित्यव्यवहारोपयोगिनामितरशास्त्राणामभ्यासोपक्रमः क्रियते। अनन्तरं च यस्मिन् शास्त्रे यस्य छात्रस्य चित्तप्रवणता स्यात्तदेव शास्त्रं स साकल्येनाध्येति। आयुर्वेदविद्यार्थिभिरेवमेव करणीयम्। जीवशास्त्रं किलायुर्वेदस्य प्राणभूतम्। अतस्तत्सर्वप्राणैः पठनीयम्। पदार्थविज्ञानशास्त्राद्विना न पदमपि प्रचलति, अतस्तद्विज्ञातव्यम्। भौतिकशास्त्रं भोक्तव्यम्। उद्भिज्जशास्त्रमुद्भेदनीयम्। रसायनं रसनीयम्। ज्यौतिषं द्रष्टव्यम्। गणितमपि नावगणनीयम्। एवं कृते सति शिष्या बहुश्रुता भवेयुः।

सर्वेषां पुनरेतेषां विद्यालयानां एकसूत्रीकरणमावश्यकम्। तदर्थे निखिलभारतायुर्वेदविद्यापीठसदृशं किंचन विश्वविद्यापीठं स्यात्। तेन सह सर्वेऽपि महाविद्यालया विद्यालयाः पाठशालाश्च सम्बद्धाः करणीयाः। अनेन च पीठेन प्रतिवर्षमेकसमये सर्वविद्यालयानां परीक्षा ग्राह्याः। उत्तीर्णेभ्यश्च छात्रेभ्यो यथायोग्यपदवीप्रमाणपत्रादिकं देयम्। एतेषां पाठ्यक्रमः ज्येष्ठकनिष्ठश्रेणी च अनेनैव पीठेन निर्णेतव्या।

अन्ते च सांप्रतमायुर्वेदस्य कथमध्यापनं कर्तव्यमित्यस्य प्रश्नस्य समासतः इदमेवोत्तरं दीयेत यत्—

**"विश्वविद्यापीठसम्बद्धेषु विद्यालयेषु सर्वसम्पूर्णसाधनेषु अनेकैरध्यापकैः तत्तच्छास्त्रपारंगतैः बहुश्रुतेभ्यः शिष्येभ्यः विषयप्रधानग्रन्थान् संलक्षीकृत्य प्रत्यक्षज्ञानपूर्वकं कर्माभ्याससहितं च साङ्ग आयुर्वेद अध्यापनीयः" इति।**

---

# बालतन्त्रम्

ले०—श्रीमूलचन्द्रशर्मा शास्त्री 'आयुर्वेदाचार्यः' लक्ष्मणगढ़ः (जयपुरम्)।

---

**बोधाब्जद्युमणिं तमोषधिपतिं सन्तापनाशाम्बुदम्**
**कारुण्यैकरसं सदाबहुरसं सर्वार्थदीक्षाप्रदम्।**
**लेखे बन्धुमना मनाङ् नतशिरा आचार्यपादाम्बुजम्**
**विद्वद्वैद्यमणिं चिदम्बुधिमणिं ध्यायामि कञ्चिन्मणिम्॥**

सन्तु परःसहस्रान्ताः धन्यवादास्तस्मै चराचरजगदुत्पत्तिस्थितिलयकारिणे परमात्मने येनेदं जगन्निजेच्छया समुत्पाद्य नानाविधनिजानुशासनसम्भारसम्भूतश्रुतिशास्त्राणि तदुज्जीवनाय समनुशिष्टानि। येषु तेनैव स्वात्मकल्पसानन्तवस्तुजातविषयकं ज्ञानं परिप्लुततयौतप्रोतं ब्रह्मादिशिष्योपदेशपरं परमाऽऽचार्यत्वपुरःसरं प्रदर्शितमिति। तत्र चतुर्भ्यो वेदेभ्यश्चत्वार उपवेदाः प्रादुरभूवन्, तत्रापि चाथर्ववेदात्, प्रादुरभूत आयुर्वेदः शरीरसंरक्षणोपायप्रतिपादक इति। यथाह तत्रभवान् धन्वन्तरिः सुश्रुतपुरोगान् प्रियशिष्यान् विषयीकृत्य सुश्रुतसंहितायाम् "इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकं शतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः" इति। ततश्च भूयोऽष्टधा विभक्तवान्। तद्यथा—शल्यम्, शालाक्यम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रम्, रसायनतन्त्रम्, वाजीकरणतन्त्रमिति। अ—

चैवं प्रतिपादितेष्वष्टस्वायुर्वेदाङ्गेषु मयेदानीं कौमारभृत्यमेव बालतन्त्रापरपर्यायं विषयीकृत्य किमपि निबन्द्धुं प्रयतिष्यते। अङ्गं चेदं कायचिकित्सायामन्तर्भवितुमर्हदपि बालानां विशिष्टमात्राया व्याध्यादिप्रतिपादकत्वेन पृथङ् निर्दिष्टमिति। उचितं चेदं यतः कस्यापि देशस्योन्नतिरवनतिश्च तत्रत्येषु बालकेषु निर्भरास्ति। बालका एव राष्ट्रस्य मौलिकी सम्पत्तिरस्ति। किं बहुना बालकाः करुणावरुणालयस्य भगवतः सृष्टिकर्त्तुः परमात्मनः प्राक्तनशुभकर्मप्राप्ता सर्वोत्कृष्टा पुरस्कृतिरस्ति। पित्रोरानन्दसन्दोहस्य निधिरिव, स्त्रीपुरुषयोः पवित्रस्नेहस्य बन्धनमिव, संसारसागरयात्रिणामवलम्बनमिव मातापित्रोः मुखाद् विलसन्त्या रेखायाः हेतुस्तु बालका एव। शिशोः पेशलप्रकाशप्रसृताः प्राकृतिका गतागताः पित्रोः नवीनां जीवनीमिव चमत्करोति स्वान्तम्। बालककलरवजनितोच्चावचौद्धत्यरहितेषु गृहेषु आपाततः सन्दृश्यमानापि शान्तिः न हि शमयितुमलं कौटुम्बिकानां मानसीमशान्तिम्। स्मारयन्ति तु श्मशानशान्तिनिर्वेदम्। सङ्गीतसुधापानमपि बालकसंस्पर्शरहितं विषायते। बालानां गद्गदजल्पनं स्मितसोदरा मुखश्रीः निःस्वार्थसम्भृता दृष्टिसम्पाताः किमपि अनिर्वचनीयमानन्दमनुभावयन्ति तत्सहयोगिनाम्। पुंनाम्नो नरकात् त्राणादेव पुत्रसंज्ञा अन्वर्थेति शास्त्रकर्तृभिरुपदिष्टम्। अस्तु, कौमारभृत्यं किं भवति, बालतन्त्रं किं प्रयोजनकमिति सुश्रुतोक्तदिशा तल्लक्षणं निवेद्यते।

"कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम्।" तत्र स्त्रीपुंसयोः संयोगात् वायुः शरीरात् तेजः उदीरयति, ततस्तेजोनिलसन्निपातात् शुक्रं च्युतं योनावभिसम्पद्यते संसृज्यते चार्तवेन। ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रपद्यते। शुक्रशोणितजीवसम्भोगे तु खलु कुक्षिगते गर्भसंज्ञेति चरकः, ततश्च स्त्रिया गर्भवतीसंज्ञा सञ्जायते। तदाप्रभृत्येव तया मातुर्दायित्वमुरीकरणीयं भवति। तत आरम्य सा यथेप्सितं बालकमुत्पादयितुं क्षमेत। "गर्भोपपत्तौ तु मनः स्त्रिया यं जन्तुं व्रजेत्तत्सदृशं प्रसूते" इति चरकवचनात्। तथा च—"आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ। स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः" इति सुश्रुतवचनाच्च। अत एव गर्भाधानावसरात्प्रसवं यावत् सा यान् यान् यादृशान् यादृशान् गुणरूपबलबुद्धिप्रकारकान् देशकालादीन् स्वात्मनि चित्रयिष्यति तथाभूतमेव बालकं प्रसूते इति। शोभनान् विकृतान् वा गुणरूपादीन् सा समनोयोगं पश्यति तस्या हृदये चित्रणयन्त्रे ( केमरा ) इव तेषां भावानां विद्युत्प्रतिबिम्बं धावति गर्भस्थं शिशुं च स्वप्रभावेण प्रभावितं करोति। अत्रोदाहरणानि च शतशः अभिमन्युप्रभृतीनि प्राचीनानि नवीनानि च नेपोलियनबोनापार्टप्रभृतीनि सन्ति। मातृनिष्ठशुभाशुभकर्मणः प्रभावो गर्भस्थशिशावश्यमत्र ऐतिहासिकी आनन्दी भगिनी अपि न विस्मरणीयाऽस्ति। यतस्तत्पुत्रो यदा गर्भे आसीत्तदा तयैव स्वयं स्वबन्धूनुन्मूलयितुं प्रयतितम्। फलतो बीजारावो महानुद्दण्डः धुन्धुमिरिवापरः सञ्जज्ञे, यस्यात्याचाराः प्रसिद्धाः सन्ति। एतावता गर्भस्थबालकस्य ग्रहणशक्तिप्राबल्यं सुस्पष्टं सिध्यति। अतस्तस्मिन् समये मात्रा स्वान्तःकरणं नितान्तं निर्मलं रक्षणीयम्। यतोऽत्र खचितैरेव संस्कारैः बालकस्य भावि जीवनं सङ्घटते। बालके चातुर्याद्यापादनार्थं गृहकार्याणि तथैव कार्याणि यथा श्वासोच्छ्वासक्रियापुरःसरं पक्तिशक्तिर्वर्द्धेत, रक्तं च सम्यक् सञ्चरेत्। औचित्येन व्यायामप्राणायामादिना च फुफ्फुसक्रियाद्वारेण गर्भस्थशिशुशरीरे रक्तसञ्चरणं साधु सम्भवेत्। गर्भस्थबालकस्य पाचनशक्तिर्यथा

न नश्येत्, तथाहर्निशं प्रयतितव्यम्।

**परिहार्याणि**—परिहरेच्च तानि यथा—व्यायामम्, व्यवायम्, लङ्घनम्, अतिकर्षणम्, दिवास्वप्नम्, रात्रिजागरणम्, शोकम्, यानावरोहणम्, भयम्, उत्कटकासनम्, निरन्तरं स्नेहादिक्रियाः, अकाले शोणितमोक्षणम्, वेगविधारणम्, वमनम्, विरेचनम्, अतिगुरु, अत्युष्णम्, अतितीक्ष्णम्, दारुणाश्चेष्टाः भूतादिग्रहेभ्यो रक्षणार्थं रक्तवसनानि मदकराणि वस्तूनि, मांसभक्षणं च परिवर्जयेत्। यच्चान्यदपि किञ्चिद् वृद्धा स्त्रियो वदन्ति तत्खलु वर्ज्यमेव। तीव्रायां तु गर्भिणीप्रार्थनायां सर्वथाऽहितमपि देयमेव, किन्तु तत् हितोपकल्पितं कृत्वा देयम्। यतः गर्भिणीप्रार्थनासन्धारणात् कुपितो वायुरन्तःशरीरं सञ्चरन् गर्भस्थबालकस्य विनाशं विकारं वा कुर्यात्।

**गर्भिणीकर्त्तव्यम्**—सामान्यत आप्रसवात्। गर्भिणी आरम्भादेव नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लस्वच्छवस्त्रा शान्तिमङ्गलदेवतागोब्राह्मणभक्तिपरा च भवेत्। मलिनविकृतहीनगात्राणि न स्पृशेत्। दुर्गन्धदुर्दर्शानि च अन्यांश्चेन्द्रियप्रतिकूलान् भावान् दूरतः परिवर्जयेत्। उद्वेजनीयाश्च कथाः परिवर्जयेत्। शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं न भुञ्जीत। बहिर्निष्क्रमणं शून्यागार-चैत्य-श्मशानवृक्षाश्रयान् क्रोधभयसङ्करांश्च भारानुच्चैर्भाष्यादिकं यानि च गर्भं व्यापादयन्ति तानि सर्वाणि परिहरेत्। न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत न चायासयेच्छरीरम्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसंबाधं विदध्यात्।

(१) भोजनं च नियतसमये नियमितरूपेणैव सति बुभुक्षोदये हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतं भुञ्जीत परमतिसौहित्यं न कार्यम्।

(२) तथानुतिष्ठेत् यथा मलमूत्रादिविसर्गः शोभनः (अविष्टम्भ्यैव) स्यात्। शरीरात् स्वेदनिर्गतिरपि नितान्तमावश्यकी, यतः स्वेदेन स्रोतसां मार्दवात् विकृतरजःकणा बहिरवयान्ति।

(३) भोजनसमये शीघ्रता न विधेया अपि तु धैर्येण सञ्चर्व्य भोज्यम्। द्रुतं भोजनादजीर्णसम्भवात् गर्भस्थबालके विकारोत्पादभयात्।

(४) भुक्त्वैव कार्यव्यापृता न भवेत् किन्तु कियत्कालं किञ्चिच्छनैः शनैरितस्ततः परिभ्रम्य मनोनुकूलान् शब्दस्पर्शरूपरसगन्धान् सेवेत विश्रामं च कुर्यात्।

(५) कदाचित् गर्भिणी प्रातरेव क्षुधातुरा भवति, तथा सति तस्यै साधारणं लघु पाकि च भोजनं देयमेव। क्षुधानिग्रहात् वत्सहानिसम्भवात्।

(६) व्रतोपवासादिभ्यो दूरे रक्षणीया। ते हि गर्भे दौर्बल्यमादधति।

(७) प्रातरुत्थानसमये दौर्बल्यं चेत्सानुभवेत् तदाऽल्पं धारोष्णं दुग्धं पाययित्वैव कार्ये योजनीया।

(८) ऋत्वनुरूपाणि वस्त्राणि नातिप्रसक्तानि (ढीले) स्वच्छानि च परिधापनीयानि।

(९) सङ्क्रामकरोगेभ्यः सुतरां रक्षणीया।

(१०) अन्यस्याः प्रसूतायाः सविधे न गन्तव्यम्।

(११) प्रसवकाले यावत् आदर्शस्त्रीपुरुषयोः चरितान्यपि अनुचिन्तनीयानि।

यथा मम शिशुः कमनीयरूपः स्वस्थः सुदृढः साहसी सद्गुणी आविर्भवेत् एतदर्थं मातुराचारविचारौ उत्तमौ आवश्यकौ।

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमश्नीयात्। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेत्। चतुर्थमासे गर्भस्य सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति, गर्भहृदयप्रव्यक्तभावा चेतना

धातुरभिव्यक्तोऽभिव्यज्यते तत्स्थानत्वाच्चेतनायाः, तस्मात् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदयां च नारीं दौहृदिनीमाचक्षते। अत आरभ्य गर्भिणी यद्यदिच्छेत्तत्तस्यै दापयेत् यतो दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षं वा सुतं जनयति। तस्मात्सा यद्यदिच्छेदहितमपि हितोपकल्पितं दद्यात्— लब्धं दौहृदादि वीर्यवन्तं चिरायुषं च पुत्रं जनयति। पञ्चमे मासि दुग्धघृताक्तं लघ्वपि भोजनं हितकरं देयम्। षष्ठे मासि साबुदानानिर्मितेन काञ्जिकेन सह पौष्टिकानि वस्तूनि सघृतदुग्धानि देयानि। मासेऽस्मिन् वातादमज्जा सघृतसितोपला भक्ष्यमाणा गर्भस्थबालकस्य मस्तिष्कं प्रीणयति। सप्तमेऽपि मासे एवमेवोपचारोऽनुशीलनीयः। अष्टमे च मासे पुराणपुरीषशुद्ध्यर्थं यौनौ च स्नेहःपिधार्यः, त्रिफलाक्वाथेनैरण्डतैलसम्प्रयुक्तेन बस्तिप्रयोगः कार्यः तेन हि अनुलोमे वायौ सुखं प्रसूयेत निरुपद्रवा च भवति। भोजनार्थं पञ्चमषष्ठमासनिर्धारितो विधिरेवानुसरणीयः। विशेषतस्तु स्निग्धा यवागूप्रभृतयो भोज्याः प्रसवं यावत्। शरीरे यथा दार्ढ्यमायायात् किन्तु श्रान्तिर्न भवेत् तथाभूतो व्यायामोऽपि शुद्धवायौ करणीयः। आघातादिभ्यो जठरं सर्वथा रक्षणीयम्। अपक्वफलानि, पूगखण्डानि, कोकिलानि, मृत्तिकाखण्डानि एवंप्रकारकाण्यन्यानि गर्भव्यापत्तिकराणि वस्तूनि न हि भोज्यानि। उदरे विष्टम्भादिसद्भावे योग्यवैद्यात् सम्मतिं गृहीत्वैव औषधादिकं ग्राह्यम्। चिन्ताशोकक्रोधादयो चित्तोद्वेगकरा भावा हेयाः। सतामुपासनं धर्मशास्त्रपुराणादिश्रवणं सुतरां सेवनीयमेवेति। कस्तूरीकुङ्कुमचन्दनादीनां लेपः सौमनस्यार्थं कार्यम्। सौभाग्यसूचकानि किन्तु लघूनि भूषणानि धार्याणि। अङ्गहीनम्, खञ्जम्, अन्धम्, बीभत्सदर्शनं वा कञ्चित्पुरुषं दत्तावधाना न पश्येत् न च स्मरेत्। कूर्दनम् ( फाँदना ) उत्प्लवनं जले मज्जनं अङ्गात्रमर्दनं न कार्यम्। एकान्तनिर्मलं ब्रह्मचर्यं पालयन्ती तिष्ठेत्। "पूर्णामिव तैलपात्रमसङ्क्षोभ्यान्तर्वत्नी भवतीति" चरकस्मृतेः। यस्याः पुनरतिमात्रदोषोपचयाद् वा तीक्ष्णोष्णातिमात्रसेवनात् वातमूत्रपुरीषवेगधारणात् वा विषमासनशयनस्थानपीडनैर्वा क्रोधशोकेर्ष्यासूयाभयत्रासादिभिर्वा परैः कर्मभिरन्तःकुक्षौ गर्भो म्रियते, तस्याः स्तिमितस्तब्धमुदरमानतं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः। शूलमधिकमुपजायते चाप्यः प्रादुर्भवन्ति योनिर्न प्रस्रवते अक्षिणी चास्याः स्रस्ते भवतः। ताम्यति, व्यथते, भ्रमते, श्वसिति, अरतिबहुला च भवति। न वास्या वेगप्रादुर्भावो वा यथावदुपलभ्यते। इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात्।

तत्र तु द्रागेव परिदृष्टकर्मणा शल्यहर्त्रा लघुहस्तेन द्राक्तरेण ( डाक्टर ) आहरणं कार्यम्। मन्त्रप्रयोगोऽपि उचित इति।

अस्तु, प्रसवकालात् प्रागेव प्रसूतागारो विधेयो भवति। तत्प्रकारश्च यथा अपहृतास्थिशर्कराकपालदेशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा वायुसञ्चरणार्थं गवाक्षैर्गवाक्षितं रक्षामङ्गलसम्पन्नं सङ्क्रामकरोगोत्पादककीटाणुनाशनार्थं विषौषधद्रव्यैरुपलिप्तभित्तिमृतुसुखं प्रसूतागारं कारयेत्। तत्र चावश्यकवस्तुजातानि एकत्रीकरणीयानि। तानि यथा नालच्छेदनार्थं तीक्ष्णा कर्तरी एका, अभ्यङ्गार्थं बलादितैलं प्रस्तरं सूचीपिप्पलकौ सौवर्णराजतौ, पर्यङ्कौ द्वौ दीपकं बहिरन्यानि च तदानीं तत्रावश्यकीयानि धूपादिभेषजादीनि स्थाप्यानि, तत्सविधे एव वर्चःस्थानं स्नानस्थानं च कार्यम्। ततश्च नवमे मासि प्रसूतागारमेनां प्रवेशयेत्, तन्निरीक्षणार्थं च कतिचित् बहुशः प्रजाताः सौहार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिप-

तिकुशलाः प्रकृतिवत्सलाः त्यक्तविषादाः क्लेशसहिष्णवो वृद्धाः स्त्रियो नियोज्याः कल्याणाभिशंसनार्थमथर्ववेदविदः शिवसङ्कल्पा ब्राह्मणाश्च मन्त्राणि जपन्तः शिवमदृष्टमुत्पादयेयुः। तत्रैवं नारी प्रसूतिकालं प्रतीक्षमाणा सुस्था तिष्ठेत् सुविचाराचरणेति।

**प्रसवलक्षणम्**—तत्रोपस्थितप्रसवायाः कटिपृष्ठंप्रति समन्तात् वेदना भवति। अभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रस्रवति योनिमुखात् श्लेष्मा चेति। तदानीमेव प्रजनयिष्यमाणां विहितस्वस्तिवाचनां कारिताभ्यङ्गां स्वास्तीर्णे मृद्वास्तरणे परिवेश्य ससर्पिष्कां यवागूमाकण्ठं पाययेत् ततश्च सोपधाने मृदुविष्टरे शयने स्थितां आभुग्नसक्थिनीम् उत्तानां पूर्वोक्ताश्चतस्रःस्त्रियः परिणतवयसः कर्तितनखाः परिचरेयुः विमुक्तगर्भनाडीप्रबन्धसशूलकस्यादौ प्रवाहणार्थं प्रेरयेयुश्चेति श्रावयेयुश्चास्याः कर्णे चरकोक्तमन्त्रमिदं यथा—

**क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः।**
**सगर्भां त्वां सदा यान्तु वैशल्यं च दिशन्तु ते।**
**प्रसुव त्वमविक्लिष्टमविक्लिष्टा शुभानने।**
**कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम्॥**

एवं प्रसूतायां तस्यां जातस्य बालकस्य अपराभुल्वापरपर्यायां मुखं तालु च स सैन्धवसर्पिषा विशोध्य सर्वं च शरीरं हरिद्रादिमाङ्गलिकौषधाद्युपयुक्तेन ससर्पिष्केनोद्वर्तनेन अनुसुखं सम्मर्घ प्रोञ्छयेत् मूर्ध्नि च घृतप्लुतं पिचुं सन्दध्यात् उष्णोदकेन स्नापयेच्च। ततश्च नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा तीक्ष्णया सुवर्णादिकर्तर्या यथाविभवं कर्तयेत्। नालमुखे च हरिद्रामधुकमयनसिद्धं सर्पिर्योजयेत्। इदानीं प्रचलितं व्हेसलीनं बोरिकाम्लो-(एसिड बोरिक)-पयुक्तं वा योजयेत्। सर्वतश्च सूतिकागृहस्य रक्षोग्रहकीटाणुघ्नैः सर्पपातसीविड (फिनाइल) आदिभिः प्रतिसारणं कार्यम्।

**दुग्धपानवेला**—पोषणार्थं मातृस्तन्यमेव शिशवे देयम्, पूर्वं स्तनौ जलेन प्रक्षाल्य शिशुमङ्के स्थापयित्वा स्वयं च स्वस्तिकासने चोपविश्य शिशुशिरःस्वहस्तेनावष्टभ्य घण्टात्रयमन्तरीकृत्य दुग्धं पाययितव्यम्। मातृस्तन्याभावे आजं तदभावे तु गव्यं साम्प्रतिकमाङ्गलीयं शुष्कं दुग्धं सजलं किञ्चिदुत्क्वाथ्य देयम्। मञ्चोपरि सुप्त्वा दुग्धं न देयं यतस्तत्र निद्रासम्भवात् बालस्य प्राणसङ्कटभयम्, कर्णस्रावोत्पादकञ्च स्यात्। अत उपविश्यैव दुग्धं पाययेत्। काश्चिन् मातरो विलम्बेन दुग्धं पाययन्ति तथा सति बालस्य क्षुन्नश्यति, पक्तिशक्तिर्विकृता स्यात्। अतो यथासमयं दुग्धं बालायावश्यकमिति। दुर्भाग्यवशात् माता सङ्क्रामकरोगजुष्टा स्यात् म्रियते वा दुग्धं वा तस्या न स्रवेत् अजादिदुग्धं च नोपशयीत तदा बालभरणार्थं धात्रीक्षीरस्यावश्यकता पतति। तत्र पूर्वं धात्रीक्षीरं परीक्ष्यं यद्दुग्धं शीतलम्, अमलं तनु शङ्खावभासम् अप्सु न्यस्तमेकीभावं गच्छत्यफेनिलं पतयत् नोत्प्लवते न सीदति वा तच्छुद्धमिति विदध्यात्। तेन कुमारस्यायुरारोग्यं शरीरोपचयबलवृद्धिश्च भवति। स्त्रीणां दुग्धे रासायनिकप्रक्रियया सामान्यतो नीचैस्तानि वस्तूनि लभ्यन्ते।

पानीयांशाः ८८६०८ शर्करांशाः ४३६४ वसांशाः २६६६ क्षारांशाः १३८ अन्यपदार्थाः ३६२४। सङ्कलिता सङ्ख्या १००००० ।

**धात्रीपरीक्षणम्**—धात्री मध्यप्रमाणा प्रौढा अरोगा सुखभावा अचपला अकृशा अस्थूला शुद्धक्षीरा अलम्बोर्ध्वस्तनी जीवद्वत्सा वत्सला कुलीना च रक्षणीया। एवंभूता स्त्री धात्रीस्थाने नानुयोज्या यस्याः केचन बालकाः मृता भवेयुः। तस्या भोजनव्यवस्थापि बालगृहे एव कर्तव्या, येन यथोचितं बालहितं भोजनं सा भुञ्जीत विरुद्धं परिहरेच्च।

**पानविधिः**—सा चैनं मातेव बालकमङ्के समुपवेश्य प्राङ्मुखी स्तनं प्रक्ष्याल्य किञ्चित् परिस्राव्य च पाययेत्; अन्यथा तु शिशोः कासश्वासवम्यादिरोगभयम्। किन्तु क्षुधितशोकार्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलाया विदाहिभक्तभोज्यविरुद्धाहारतर्पितायाः दुग्धं न पाययेत्।

**सशर्करं देयम्**—तद्यदि गुरुत्वात् उदरे आध्मानादिकारि लक्ष्येत तदा तत्र शुण्ठ्यादिभेषजयोगेन पाचयित्वा सूर्यक्षारं (सोडाबाईकार्ब) वा सुघ्योदकं वा दत्वा देयम्। शनैः शनैः पानीयभागं ह्रसित्वा यथाग्निबलं दुग्धमात्रा वर्द्धनीया स्यात्।

(१) यस्या गोः दुग्धं दीयेत सा स्वस्था भवेत्।

(२) दोहनसमये दोग्धुर्हस्तौ दोहन-पात्रं च शुद्धे स्याताम्।

(३) दुग्धस्य पात्रात् पात्रान्तरपातने स्वच्छता न विस्मरणीया।

(४) दुग्धं सद्यस्कं स्वच्छं च भवेत्। वालवत्साया विवत्सायाश्च गोः दुग्धं सर्वथा हेयं दुग्धं दुग्ध्वैव द्वित्रिवारं वस्त्रेण गालनीयं भवेत्।

साधारणतया बालाय दुग्धं सद्यस्कमेव देयम्, परमसम्भवे तस्य १६० षष्ट्यधिकशतप्रणालीं (डिग्री) यावत् औष्ण्यमापाद्य देयं येन तत्रत्याः कीटाणवः म्रियेरन्। दुग्धपानस्य कूपिकाऽप्याति, तयैव दुग्धपानमुचितम्, कूपिका च सा नित्यमुष्णजलेन प्रक्षालनीया। बालकस्य पुनः सौमनस्यार्थं गात्रसुखं गृह्णीयात् सहसा न प्रतिबोधयेत् वित्रासभयात् सहसा नापहरेत् उत्क्षिपेद्वा वातादिविघानभयात् नोपवेशयेत् कौब्ज्यभयात् नित्यं चैनमनुवर्तेत प्रियशतैरजिघांसुः। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत्। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति।

**बालग्रहाः**—पूतनास्कन्दादयो बहवः ग्रहा वायवीयशरीराः स्वप्रभाप्रभावितान् बालान् पीडयन्ति। तत्र तेषां लक्षणानि आर्षग्रन्थेषु बहुशो लभ्यन्ते। यथा सुश्रुतसंहितायाम् "अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानं च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्ध्वं निरीक्षते फेनमुद्वमति संदष्टौष्ठः क्रूरोभिन्नामवर्चा दीनार्तस्वरो निशि जागर्ति दुर्बलो म्लानाङ्गो मत्स्यच्छुछुन्दरीमत्कुणगन्धो यथा पुरा धात्र्याःस्तन्यमभिलषति तथानाभिलषतीति सामान्येन ग्रहोपसृष्टं लक्षणमुक्तं विस्तरेणोत्तरे वक्ष्यते।" सु० शा० अ० १०। तेषां ग्रहाणां शान्त्युपायश्च सुश्रुतोक्तदिशा स्वस्त्ययनप्रपातहवनजपादिरूपो ज्ञेयः।

**भोजनारम्भकालः**—साधारणतः बालस्य भोजनारम्भः दन्तोद्भेदानन्तरमेव। दन्तप्रादुर्भावेन जठराग्निना भोजनं पक्तुं क्षमः इति प्रकृतिकृतं विज्ञापनम्। दशमासानन्तरं लघु द्रवं भोजनं च जारयितुं शक्नोति।

(१) वस्तुतो बालं सदैव निश्चितसमये भोजनं देयम्।

(२) बालं यदा बुभुक्षा बाधेत तदैव भोज्यम्।

(३) कारयितव्यः स्नापयित्वा शुद्धवस्त्राणि परिधापयित्वा च भोजनम्।

(४) परिमाणेन यावत्स खादेत् तावदेव देयम्, आधिक्ये नाग्रहीतव्यम्।

(५) भोजयित्वा न स्नापयितव्यः यतो हि तदानीं श्लेष्मवृद्धेरग्निमान्द्यभयम्।

(६) सति सम्भवे भोजनानन्तरं पक्वानि फलानि देयानि।

(७) एकस्मिन् दिने अधिकादधिकं चतुर्वारं भोजनं देयम्।

(८) भोजने चाधिक्येन ओदनं मुद्गादिसूपं यवान्नं यावनालान्नं (जवार) हरितशाकानि दुग्धं दधि घृतं नवनीतं शर्कराप्रभृतिकं यथा देशसात्म्यं च प्रायेण देयम् ।

(९) द्राक्षादिफलानां रसा अस्थिदार्ढ्यार्थं देयाः ।

(१०) लवणप्रभृतीनि पोटासवन्ति च वस्तूनि यथा मात्रं शरीरवर्द्धनार्थं घृतादीनि च मेदोवर्द्धकानि देयानि ।

(११) शिम्ब्यः कन्दमूलफलानि च सर्वरसानि यथामात्रं शरीररक्षार्थं देयानि ।

(१२) भोजनात् घण्टाद्वयं यावत् विरम्य स्वाप उचितः ।

(१३) मात्रा स्वयं सविधे स्थित्वा सस्नेहं परिवेषितं भोजितमन्नं रक्तादिरूपेण सम्यक् परिणमते ।

(१४) आयुरारोग्यार्थं शुद्धजलस्यावश्यकताऽस्ति । बालकाय वस्त्रपूतं कीटादिभी रहितं कौपं जलं देयम् ।

(१५) शरीरे दार्ढ्यापादनार्थमुचितव्यायामोऽपि शिक्षणीयः ।

(१६) यथाकालं सप्तघण्टापर्यन्तं निद्रा सेवनीया । भोजनादधिकं निद्रा सदा लाभप्रदा मता । उत्थाय च तत्क्षणमेव नेत्रे प्रक्षाल्य चाञ्चल्यमापादनीयम् । शयनीयागारश्च गवाक्षितः स्यात् ।

(१७) बालकं स्वच्छं स्वस्थं च रक्षितुं प्रतिदिनं तैलं मर्दयित्वा स्नापयेत् । एकान्तरं द्व्यन्तरं वोद्वर्तनमपि कार्यं तेन चर्मरोगा न भवन्ति ।

**बालानां रोगाः**—कुकूणक-पारिगर्भिक-तालुकण्टक विसर्पादयो रोगास्तु बालेषु नियता एव भवन्ति । एतदतिरिक्तं ज्वराद्याः सर्वे व्याधयः ये महतां देहे भवन्ति त एव बालदेहेऽपि सम्भवन्ति । बालस्य यस्मिन् अङ्ग-प्रत्यङ्गे रुजा भवति प्रायः स तं देशं स्पृशति स्पृश्यमाने च रोदिति । शिरसि रोगे नेत्रे निमीलति एवमेवं ज्ञेयम् । तेषु च यथाविहितमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात् । क्षीरान्नादस्यात्मनि धात्र्याश्च, अन्नादस्य कषायादीन् आत्मन्येव न धात्र्याः । तत्र मासादूर्ध्वं क्षीरपस्य अङ्गुलीपर्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात् । कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय, कोलसम्मितामन्नादायेति । अतिलघुबालकं तु येषां येषां रोगाणां यानि भेषजानि तेषामेव कल्कं कृत्वा तेन स्तनौ लिप्त्वा पाययेत् । शक्तिमन्तं चैनं ज्ञात्वा यथावर्णविधां ग्राहयेत् नवीनां प्राचीनां चेति । वर्तमानयुगे रूसदेशीयानां बालकानां कृते तत्रत्यैरधिकारिभिर्यः सुप्रबन्धः कृतोऽस्ति स तु सुतरां प्रशंसास्पदोऽनुकरणीयश्चेति विरम्यते विस्तरेण ।

# भिषगायुर्वेदसमुत्थानीयपञ्चोपायाः

( प्रस्तावकः—प्रतिभासंपन्न—त्यागमूर्ति—मङ्गलदासस्वामी, दादूमहाविद्यालयः जयपुरम् )



वैज्ञानिकैस्तपोधनैर्वीतरागैर्लोकहितपरायणैर्विदितवेदितव्यैरधिगतयाथातथ्यैस्तत्रभवद्भिर्महर्षिभिर्लोकानामुपचिकीर्षया प्रकाशितस्यायुर्वेदद्युमणेर्दीर्घकालं प्रतिकूलशासनतः सामाजिकाव्यवस्थितेश्च तिग्मा अपि दीप्तयो मन्दतेजसः समभवन्, तदीयो ज्ञानकोषो लुण्ठकैर्विद्रोहिभिर्लुण्ठितो भस्मसात् कृतश्च। तदीयाष्टाङ्गेषूपनिबद्धा अनेकशः संहिता अद्य कथामात्रावशेषाः। अतीतानि द्विसहस्राब्दान्यायुर्वेदं कियदवानमयन्, इति नाविदितमितिहासविदाम्। बौद्धकालोपक्रमो ह्रासो नाद्यापि विरतः।

"उत्थानान्तं पतनं पतनान्ताश्च समुच्छ्रयाः"

इत्यनेन सर्गनिसर्गेणाद्यत्वे समयमहिम्ना वैद्याः स्वशय्यामुज्जिहानाः पार्श्वं पर्यवर्तिषत।

भगवतो धन्वन्तरेरतुलानुकम्पेयं यद् वैद्यसमुदायस्य भागीरथप्रयत्नेनायुर्वेददिवाकरस्तिग्मेन प्रकाशेन देशमिमं विद्योतयितुं पुनरप्युदितः। दुर्दैवाद् विलुप्ताश्चिकित्सापद्धतीः प्रतिसंस्कर्तुं वैद्याः दत्तावधानाः। वर्तमानसमयमनुसृत्य सभाभिर्व्याख्यानैरेतद्विषयकसमाचारपत्रप्रकाशनेन च लक्ष्यन्ते प्रयतमानाः, न केवलं महाराष्ट्रसौराष्ट्रद्राविडराजस्थानसिन्धुपाञ्चालवङ्गकामरूप ( प्राग्ज्योतिष ) प्रभृतिषु भारतीयप्रान्तेष्वेवापि तु लङ्कायामपि अनन्तरमतीतेषु पञ्चविंशत्यब्देष्वायुर्वेदोन्नत्यै यत् किंचिच्चेष्टितम्। आयुर्वेदविद्यालयसंस्थास्थापनादिभिः प्रवचनप्रणाल्यपि प्रोत्साहिता। प्रत्यहं नवीनौषधालयस्थापनं वैद्यानां तत्र नियुक्तिश्च भावि शुभं सूचयतः।

प्रान्तीयधारासभायाः ( कौंसिल ) सदस्यानामनुरोधात् प्रान्तीयैः शासकैरायुर्वैदिकपारसीकसरण्योर्विशेषतामन्वेष्टुं न्ययुज्यन्त समितयः। तत्सूचनानुसारं च कतिपयैः प्रान्तीयशासकैरिमे पद्धती उन्नेतुं धनसाहाय्यमप्युपक्रान्तम्। नगरस्वास्थ्यादिप्रबन्धकर्त्र्यः समितयः ( म्युनिसिपल बोर्ड ) इतस्ततः आयुर्वेदचिकित्सालयानुद्घाटयन्ति नियुञ्जते च वैद्यान्।

एतत्सर्वमायुर्वेदोन्नत्यभिलाषुकेभ्यः प्रमोदावहं तथापि आयुर्वेदीयां चिकित्साप्रणालीमग्रासन आरोपयितुं नालमेतावत्। सर्वत्रापि कार्यसिद्धिर्यावत्कारणान्यपेक्षते नेतरथा सा। आयुर्वेदोन्नतिरूपविशालकार्यापेक्षया चोपर्युक्तानां कारणानामपर्याप्तत्वम्। वैद्यसमुदायस्य सामान्यैरेव प्रयत्नैः सन्तोषे तु आयुर्वेदोन्नतिः खपुष्पायितैव। पूर्वमुक्तं सकलं तु श्रीगणेशमात्रमेव। साम्प्रतं वैद्यसमुदायेनात्रानवरतं श्रमितव्यम्। आयुर्वेदोन्नतिर्न सुशका। तस्य विशृङ्खलां परिस्थितिं परिष्कर्तुं वर्षाणि श्रमोऽपेक्षितः। लुप्तप्रायाणां शल्यशालाक्यजराकौमारभृत्यादितन्त्राणां पुनरुज्जीवनं न सुसाधम्। चिकित्सामुख्याङ्गभूतानां शोधनात्मकपञ्चकर्मणां क्षाराग्निशस्त्रकर्मशिराव्यधादीनां प्रचारोऽतीव श्रमसाध्यः। किञ्चापरं दुःशकं कार्यमपरचिकित्साप्रणालीभिः संघर्षः।

विज्ञानप्रधानोऽयं कालः। सर्वत्र नव्यतायाः नूतनानुसन्धानस्य चैकच्छत्रम्। साम्प्रतमनेकाश्चिकित्सापद्धतयः प्रचलिताः सन्ति, तासु 'ऐलोपैथिकहोमियोपैथिक' प्रणाल्योः प्राधान्यम्, तत्रापि 'ऐलापैथिक' प्रणाली मुख्यतरा भूमण्डलव्याप्ता च। सहस्रशस्तदनुयायिन इमामुन्नतुं प्रयतन्ते। बहूनां राज्ञां चात्र पक्षपातः। कोटिशो रूप्यकाणि तदुन्नत्यर्थं व्ययीक्रियन्ते। विविधैर्यन्त्रशस्त्रैरितरैश्चोपकरणैः सुसज्जितेयम्। अस्मद्देशेऽपीयमेव राजकीया चिकित्सापद्धतिः। अस्याः साधनानां प्रतिपक्षे प्राच्यप्रणालीसाधनानि न स्थातुमप्युत्सहन्ते। क कार्यकर्तृसहायकवर्गादिविविधसाधनसम्पन्ना नवीना चिकित्सापद्धतिः, क चालस्यानुद्योगनिरताल्पवैद्यसमुदायमात्राश्रिता जर्जरितकलेवरा आयुर्वेदपद्धतिरिति नवीनया चिकित्साप्रणाल्या अस्याः साम्यं कियद् दुष्करमिति विचारणीयं वैद्यानाम्। अद्यत्वे महदन्तरमेतयोः। वैद्यसमुदायतो नवीनप्रणालीविदः चिकित्सकाः (डाक्टर) ज्ञानसाधनोद्योगैर्ज्यायांसः। अतो मनसा वाचा कर्मणानवरतमुद्योगेनैव वयमायुर्वेदप्रणालीं परिष्कृत्यान्यप्रणालीसाम्यमारोपयितुं प्रभवेम। ऋते आयुर्वेदीयतत्वेभ्यो नान्यत् किंचिदालम्बनमायुर्वेदविदाम्। तन्मौलिकं विज्ञानं कालत्रयाबाध्यम्। सहस्रशो वर्षाणि विपरीतदशाघातप्रत्याहताप्यायुर्वेदप्रणाली अद्यापि प्रचलतीत्यत्रायमेव हेतुः।

अत्रत्यदोषविज्ञानद्रव्यविज्ञानावस्थिकचिकित्साक्रमविविधौषधप्रायोगिककल्पनानुपानपथ्यादिशैलीनां सुव्यवस्था तन्मूलभूतसूत्रसुरक्षा चेदृशे प्रतिकूले समये वैद्यानां प्रतिष्ठां रक्षति। अन्यत्तु सर्वं प्रतिकूलमेव तेषाम्। आयुर्वेदो वैज्ञानिकः, तत्सिद्धान्ताः स्थिराः, स दिव्यदृष्टिभिर्महर्षिभिराविष्कृतः, आधुनिकानां चिकित्साशैलीनामयमेवोद्भवः, वातपित्तकफाः वैज्ञानिका इत्यादिडिण्डिमोद्घोषो नोपस्थितविषमतामपहर्तुम्, न वा हरीतक्याः विरेचनरूपं फलं द्रव्यगतरसगुणवीर्यविपाकादिप्रभावान् साधयितुम्, न च सुश्रुते यन्त्रशस्त्रतदुपयोगशैली सम्यग् वर्णितेत्युद्घोषः आयुर्वेदमहत्त्वं द्योतयितुमलम्भूते कार्यपरिणतेः। शस्त्रकर्माभ्यासः (प्रेक्टिकल) शारीरकप्रत्यक्षाय शवच्छेदश्चावश्यकः प्रत्येकम्। कार्यप्रधानेऽस्मिन् काले यथासमयमाधुनिकशिक्षितजनाभिमतसाधनैरेव तन्महत्त्वं प्रदर्शनीयम्। नाद्य कथनस्य मूल्यं किन्तु व्यवहारस्य। आयुर्वेदसिद्धान्ताश्च वैज्ञानिकाः। एषां च तीक्ष्णं ज्योतिस्तिमिरयत्यभिमुखं पश्यतां दृशम्, तथापि शतानि वर्षाणि क्रमेण वर्धमानतदावरणभङ्गाय तु भिषग्भिर्विधेयो भागीरथप्रयत्नः। अतस्तान्येव साधनान्यस्माभिराश्रयणीयानि यैरायुर्वेदचिकित्साप्रणाली इतराः प्रणालीरतिशयीत।

यथाकालमायुर्वेदप्रकर्षाय किमाचरणीयमिति विमर्शनीयं वैद्यानाम्। सङ्घप्रचारानुसन्धानशिक्षौषधसुव्यवस्थादीन्यत्यावश्यकानि प्रथममत्रेति मे वितर्कः। प्रत्येकमेषां मीमांसा नाप्रस्तुतेति विवेचये किंचिदहमत्र यथामति।

### (१) सङ्घः

समष्टिकार्यमूर्तेर्मुख्यं साधनमैक्यम्। कस्यापि कार्यस्य मूल्यं तदनुष्ठापकानां संख्यैवानुमापयाति। तात्पर्यमिदमेव, अयं सङ्घकालः। किन्तु वैद्याः द्वैतमपि न सहन्ते, किं पुनः सङ्घीभावम्। एतद्दोषं पश्यद्भिस्तत्परिहर्तुकामैः कतिपयैर्वैद्यैरायुर्वेदसम्मेलनमपि संस्थापितम्। तेनैक्यकार्यमंशतो जातम्। परं चिरमभ्यस्ताः मतभेदप्रवृत्तयः कामं विघ्नन्त्येव। प्रतिवर्षं सम्पादितसम्मेलनादिभिरपि नापेक्षिताद्यापि सम्पादिता सङ्घशक्तिः। यद्यपि न केवलमखिलभारतीयायुर्वेदसम्मेलनमेव किन्तु

कतिपयप्रान्तेषु प्रान्तीयान्यपि तदधिवेशनान्यभूवँस्तथापि तत्रापि सपक्षविपक्षता बद्धबलेत्यास्तां दूरे सङ्घशक्तिः परस्परव्यवहारभित्तेर्मूलमेव शैथिल्यमाप्तम्।

प्रायशोऽनेके सदस्याः स्वीयं मुख्यमुद्देश्यं विस्मृत्य स्वं स्वं महत्त्वं स्थापयितुं प्रयतमानाः अन्योन्यं स्पर्धमानाः आक्षिपन्तश्चावलोक्यन्ते। क्रियमाणेषु आयुर्वेदोद्धारकार्येषु दूषणमपि दर्शयन्त्येते। किन्तु—

'मर्त्यैरसर्वविदुरैर्विहिते क्व नाम बन्धेऽस्ति दोषविरहः सुचिरन्तनेऽपि' इत्युक्तेस्तत्र स्खलनमपरिहार्यम्, विशेषतश्च कस्मिंश्चिन् नूत्ने आविष्कारे। तदस्माभिः सहयोगेन सौहार्देन च भ्रान्तयः परिमार्जनीयाः। कट्वालोचनास्तु न कस्यापि पथ्याः। तच्चैक्यमुद्देश्यपूर्त्यै परस्परं सख्येन सम्पादनीयम्। परच्छिद्रान्वेषणस्थाने चेद्वयं स्वीयं ज्ञानमनया दिशा तत्तन्नवीनानुसन्धाने उपयुञ्ज्महि तर्हि महच्छ्रेयः स्यात्।

## ( २ ) प्रचारः

स्वान् भावान् जनसाधारणस्य गोचरं कर्तुं प्रचारः प्रधानं साधनम्। तत्सौकर्याय च सन्ति मुद्रणयन्त्रालयराजकीयपत्रसंवाहन-( पोष्ट-आफिस )-विभागप्रभृतीनि साधनानि, येन निजगेहमधितिष्ठन्त एव जना नवान्नवानाविष्काराञ्जानन्ति। भाषणलघुपुस्तिका ( ट्रैक्ट ) दैनिकमासिकसाहित्यादीन्यत्युपयोगीनि प्रचाराय। पाश्चात्यदेशेषु तु किमन्यत्, एभिरेव लोकमतं संकलय्य राज्यमपि परिवर्तयन्तीति नाविदितं समाचारपत्रपाठकानाम्। भारतेऽप्यद्यत्वे समाचारपत्राणि वर्द्धिष्णूनि। वैद्यैरप्यवलम्बनीया एत उपायाः।

यद्यप्यायुर्वेदविषयाण्यपि कानिचिन्न पत्राणि प्रकाश्यन्ते तथापि तानि साधारणान्येव। तत्रत्याः निबन्धाः प्रायेणान्यदीयानां लेखानां प्रतिलिपिमात्रं सङ्क्षेपमात्रं वा। कस्यचिद् ग्रन्थस्य मक्षिकास्थाने मक्षिकापात इवाविकलमनुवादमात्रं न तु निबन्धुरनुशीलनं नूतनत्वं वा तेषु लेशतोऽपि इति न कोऽप्युपकारस्तैर्लोकस्य।

आस्तामेतत्, सर्वाण्येव चायुर्वेदपत्राणि प्रवाहयन्ति परीक्षितप्रयोगधाराम्, भवन्ति तु तान्यपरीक्षितान्येवेति किमाश्चर्यमतः परम्। हेतुस्त्वत्र योग्यसम्पादकाभाव एव। प्रक्रान्तेषु पत्रेषु नैकमप्यायुर्वैदिकतत्त्वविवेचनया जनतां प्रभावयितुमलम्। अत्र निदानमुत्कृष्टवैद्यमहाशयानामुपेक्षैव। ये आयुर्वेदतत्वज्ञास्तेऽत्र सर्वथोदासीनाः, ये च केचन वराकाः अत्र प्रयतन्ते ते तद्रहस्यानभिज्ञाः। जनसाधारणे आयुर्वेदप्रकर्षप्रकाशनाय प्रचार आवश्यकः। इतरचिकित्साप्रणालीप्रचारायानेकानि पत्राणि प्रकाश्यन्ते। तेषु बहुषु तु जना अतीव श्रद्दधते। आयुर्वेदपत्राणामपि जनसाधारणविषयश्रद्धासम्पादनार्थं सततं ग्रन्थानुशीलनमध्यवसायश्चापेक्षितौ।

पत्रमहत्ता सम्पादकज्ञानावलम्बिता। ततश्चायुर्वेदधुरीणा अनुभविनो महाशयाः प्रतिमासं स्वल्पमपि समयमायुर्वैदिकतात्त्विकविषयविवेचन उपयुञ्जीरंश्चेत् सम्पादकानां पाठकानां जनसाधारणस्य चानुभवद्वारा महाल्लाँभः स्यात्।

सम्मेलनीया पत्रिका तु नूनं विशिष्टनिबन्धनिबद्धैव प्रकाश्या। हिन्दीभाषायामाङ्ग्लभाषायामपि च प्रकाश्या। अस्याः सम्पादकाः विशिष्टवैद्याः स्युः। लेखकाश्च तत्तद्विषयविशेषज्ञाः। प्रान्तीयभाषास्वस्या भाषान्तरं स्याच्चेत्तदतीवोपकारकं स्यात्। पत्रप्रकाशनातिरिक्तमायुर्वेदमर्मज्ञौ आङ्ग्लभाषाविदौ च द्वौ वैद्यावपि वैतनिकौ नियोजनीयौ, यौ संवत्सरं सर्वेषु प्रान्तेषु क्रमशो भाषणादिद्वारा प्रचारं कुर्याताम्। तेषां भाषणादिप्रबन्धभारं प्रान्तीयवैद्यसंसदो वहेयुः। भाषणसमये चित्रपटान्यप्यावश्यकानि, येन तद्विषयज्ञाने सौ-

कर्यं स्यात्। मार्मिकेषु विषयेषु निबन्धान्निबध्य प्रकाश्य च व्ययमात्रमूल्येनैव जनसाधारणे प्रेष्याः।

प्रायोभाविनां ज्वरमन्थरज्वरश्वासकासमसूरिकाविषूचिकादिरोगाणां निदानमनुभूतां चिकित्साप्रणालीं च समासतो निबद्ध्योपकरणीयो जनसमाजः। कुशलाश्चिकित्सकाश्चिकित्स्यमानेषु विषमेषु रोगेषु साफल्ये सति साद्यन्तं स्वानुभवं प्रकाशयन्तु। एवं सति प्रचारोद्योगे लोकभावनाप्यायुर्वेदाभिमुखी भविष्यति। यदीच्छति वैद्यवर्गो यत् साधारणो जनसमाजोऽपीमां सरणिं प्राचुर्येणाङ्गीकुर्यात्तर्हि प्रथमं प्रचार एव विधेयः। सकलेऽपि वर्षे दिनत्रयं सम्मेलनाधिवेशनेन नूनं दुष्करस्तदुद्धारोऽतः प्रमुखाः वैद्याः प्रसिताः सन्तोऽनुतिष्ठेयुश्चेत्तत् पूर्येत।

## ( ३ ) शिक्षा।

अखिलस्यापि विषयजातस्य सामान्यविशेषोभयात्मकं ज्ञानं शिक्षामुखापेक्षि। शिक्षापद्धतिमन्तरा किञ्चित्कार्यं नोत्कर्षमधिगच्छति। साम्प्रतिकं पूर्वापेक्षया सर्वविधस्तत्क्रमोऽन्यथैव जातः। ग्रन्थाध्ययनमात्रमेव च नास्ति महत्त्वाधायकमतोऽध्ययनसमकालमेव तत्तद्विषयकर्माभ्यासोऽप्यपेक्ष्यते। शिक्षोपकरणानि च कीदृशं रूपान्तरमुपगतान्युपगच्छन्ति चेति न केषामपि महाशयानामविदितम्। लेखभाषणनिबन्धादीनि चाद्यत्वे तस्या उत्तमाङ्गत्वेन गण्यन्ते। गणितभूगोलेतिहासविज्ञानादिषु सकलेष्वपि विषयेषु यदोभयी शिक्षावश्यकत्वेनोररीक्रियते तर्हि सर्वथा व्यावहारिकस्यायुर्वेदस्य तु किमु वक्तव्यम्। अस्मिन् विषये परोक्षज्ञानापेक्षया प्रत्यक्षशिक्षाज्ञानं मुख्यं निर्विवादम्। नवीनप्रणालीशिक्षालयेषु क्रमोऽयमेवास्याः आश्रितः।

तत्र च शास्त्रज्ञानं प्रत्यक्षज्ञानं चेति द्वे अपि परं साम्यमावहतः। अत्रेदमेव तात्पर्यम्—एकं ग्रन्थाभ्यं तत्कर्म न कोऽप्यनुमोदयेत्। शरीरस्य समेऽवयवाः, भेषजम्, तन्निर्माणम्, रोगः, तस्य विभिन्ना दशाश्चेति सर्वत्रापि प्रत्यक्षज्ञानमेव वस्तुतो ज्ञानम्। अत एतच्छिक्षणाय परोक्षप्रत्यक्षात्मकस्योभयस्यापि ज्ञानस्य प्रबन्धः समनुष्ठेयः।

वर्तमानास्वायुर्वैदिकीषु संस्थासु यथाशक्ति बहवश्चैतदर्थं प्रयतमानाः सन्ति परमनेकाश्चाद्यापि प्रत्यक्षज्ञानशिक्षाया उपक्रमवर्जिता दृक्पथं यान्ति। एतत्प्रबन्धात्मिकास्वपि कासुचित् प्रकामं न्यूनता, अतोऽत्र तन्निराकरणमितरासु च तदारम्भविधानमावश्यकम्।

महत्तरोऽयमस्मद्देशः। जनसंख्यापेक्षया वैद्यानां संख्या अद्यापि नालम्! नगराणि खर्वटानि चापहाय प्रतिशतं पञ्चाशीतिपरिमिताः ग्राम्याः भारतीयाः सर्वथा भिषक्साहाय्यवञ्चितास्तिष्ठन्ति। यत्र च नगरेषु चिकित्सकबाहुल्यं तत्रापि अल्पीयस्येव संख्या कुशलानाम्। उत्तमानां तेषामभिवृद्धिर्हि योग्यशिक्षासंस्थानां प्राकाम्यमपेक्षते।

एतर्हि देशे वर्धमानोऽस्त्यायुर्वेदशिक्षाप्रचारो विविधाः नूत्नाः संस्थाश्च स्थाप्यन्ते। कलिकातामोहमयीमद्रासपाटलिपुत्रवाराणसीलवपुरजयपुरेन्द्रप्रस्थहरिद्वारादिस्थानेषु हृषीकेशपीलीभीतखुरजाभिवानीरामगढबीकानेराहमदाबादसूरतादिषु चैतदीयशिक्षणसुव्यवस्थाः विद्यालयाः वर्तन्ते। अतोऽपरमन्येष्वपि स्थानेषु लघवो महान्तश्चानेके शिक्षणालया आयुर्वेदं सेवमानाः समुपलभ्यन्ते। कतिपयैश्चैतेषु चिकित्साशास्त्रोत्थानाय यथेष्टमुद्युक्तम्। तथाहि—जयपुरराजकीयसंस्कृतविद्यालयः। श्रीमन्मान्यवरमहाराजाधिराजश्रीरामसिंहैः सं० १९ वर्षेऽस्य स्थापनं चक्रे। सर्वतः प्रथममत्राचार्याः राजवैद्यकुन्दनरामभट्टाः ततस्तदात्मजाः कविवरा भट्टश्रीकृष्णराममहाराजा नियुयुजिरे। ततस्तेऽत्र

एवेतरेभ्य इतरैः शास्त्रैस्सहायुर्वेदमधिगम्य सं० १९५४ मिते वैक्रमेऽब्दे श्रीमन्तः स्वामिपादा आचार्याः गुरुप्रवराः श्रीलक्ष्मीराममहाभागा आयुर्वेदप्रधानाध्यापकासने आसीनाः। तदा प्रभृत्यद्य आनवतितमवर्षं यावद् दीर्घेणानेहसा श्रीमद्भिरायुर्वेदप्रचाराय तच्चिकित्साप्रणाल्युद्धाराय चानवरतं प्रयतितमिति नाप्रत्यक्षं सर्वेषाम्। तत्रभवद्भिः स्वामिवरेण्यैः सुशिक्षिता अनल्पा विद्वांसोऽद्य विभिन्नेष्वायुर्वेदक्षेत्रेषु सेवाकर्मप्रवृत्ताः सन्ति। ज्ञानलवदुर्विदग्धानां मादृशां तु गणनैव का! आयुर्वेदशिक्षासंस्थासु च यावता सहयोगेन श्रीगुरुपादैरयमलङ्कृतस्तावता तेन पूर्वोदाहृतासु तासु चिरं प्रयत्नशीलैर्योग्यैर्महानुभावैरन्या कापि न सभाजिता स्यात्। अधुनापि विद्यालयोऽयं स्वध्येयेऽतिप्रयत्नशीलोऽस्ति। एवमपरा अपि संस्था उद्युञ्जते स्वस्वोन्नत्यै।

उदारचेतसो देशमान्याः श्रीमन्तो मालवीयमहाभागा अपि हिन्दूविश्वविद्यालयीयायुर्वेदविभागे प्रत्यक्षज्ञानशिक्षा-( प्रेक्टिकल ) पूरणाय बद्धपरिकराः अनवरतं प्रयतन्ते। कलिकातापाटलिपुत्रहृषीकेशहरिद्वारजयपुरादिष्वपि ग्रन्थाध्ययनेन सहैव प्रत्यक्षकर्मशिक्षाप्युपक्रान्ता।

सत्यपि एतावति परिस्थितिमनुसृत्यान्यदपि करणीयमवशिष्यते। तत्कार्यपूर्त्यै प्रवृत्तासु तासु सुव्यवस्थाया वृद्धेश्च परमावश्यकत्वम्। कर्माभ्यासोभाववतीषु संस्थासु तदुपक्रमापेक्षास्ति। इतोऽप्यावश्यकतरमेषां विद्यालयानां सङ्घटनम्। आयुर्वेदीयशिक्षाकार्यतत्पराणां तेषां कार्यक्रमो विभिन्नतां विहायैक्येनैव समनुष्ठेयः। एषां सञ्चालका अग्रेसरो वैद्यसमुदायश्च सम्भूयैवंविधं तन्निर्धारयेयुर्यत्सर्वत्र तत्प्रणालीमनुगम्यैव कार्यसञ्चालनं सुसम्पन्नं स्यात्। प्रतिप्रान्तं सामान्यं शास्त्राद्वयमेका च मुख्या, इत्थं शिक्षणालयत्रयी स्थाप्येति मे प्रतिभाति। इदानीं याः संस्थाः शिक्षाकर्मासक्तास्ता यदि शिक्षात्मिकायास्तस्याः कार्यपूर्तिं विदध्युस्तर्हि शाखाशिक्षणालयरूपेण विपरिणमनीयाः। अपरश्चैकः प्रधानस्तदालयः स्थापनीयः।

शाखाशिक्षणालयेषु ग्रन्थाध्ययनकाल एवौषधपरिचयः, शरीरस्य निखिलावयवानां साक्षात्करणम्, मलमूत्ररक्तश्लेष्मपरीक्षणम्, फुफ्फुसहृदयामाशयपक्वाशयमलाशयवस्तिप्लीहायकृद्वृक्कक्रियाणां सम्यग् ज्ञानं मांसपेशीनामस्थ्नां च सङ्ख्या धमनीनां शिराणाञ्चापि गतेः प्रत्यक्षज्ञानं कारयितव्यम्। एतदर्थं पुस्तकालयः, प्रदर्शनी, रसायनशाला ( लेबौरेटरी ) एषां विभागानामपि स्थापनं स्यात्।

तत्र पुस्तकालये प्रकाशितानि सर्वाण्युपलभ्यमानानि पुस्तकान्यायुर्वेदस्य सङ्ग्रहीतव्यानि। तत्सम्बन्धिनां मुद्रितानां पत्राणां सञ्चयोऽपि चावश्यकः। भारतीयप्रान्तभाषासु बङ्गीय-( बङ्गला )-महाराष्ट्री-( मराठी )-गौर्जरी ( गुजराती )-प्रभृतिष्वनूदितानि नवीनचिकित्साशास्त्रस्योपयोगीनि पुस्तकान्यपि विशेषतः सङ्कलनीयानि।

प्रदर्शनीविभागे शारीरिकचित्राणाम्, अस्थिपञ्जरस्य, अवयवानाम् ( मौडल ) सङ्ग्रहस्य, काष्ठमयानां खनिजानाञ्चौषधीनाम्, तथैषां चित्राणाम्, शरीरविकाशस्यावस्थिकचित्राणामपि च विपुलः प्रबन्धः स्यात्। भग्नास्थ्नां सन्धिस्खलनस्य च विद्युच्चित्राकर्षणयन्त्रतः ( ऐक्सरे ) आकृष्टानि विभिन्नावयवेषु प्रयुक्तशस्त्रकर्म-( औपरेशन ) प्रयोगाभिव्यञ्जकानि चित्राण्यपि च यथाशक्त्युपलब्धानि तत्र स्थाप्यानि। विविधानां विभिन्नाङ्गोत्पन्नानां व्रणानां बन्धप्रकारस्यापि चित्रद्वारा शिक्षाप्रदानमत्र छात्रहितायायोजनीयम्। शिरावेधोपयोगीनि यानि यन्त्राणि विभिन्नव्याधिप्रयो-

ज्यानि शस्त्राणि च सुश्रुते परिगणितानि तान्यपि यथासम्भवमत्र दर्शनीविभागे सङ्ग्राह्याणि ।

रसायनशालायाम् (लेबोरेटरी) चाणुवीक्षणतापमापकमलमूत्रश्लेष्मपरीक्षणयन्त्राणि, अन्यान्यपि यानि वस्तूनि नवीनानि यन्त्राणि चात्रातिशयेन योज्यानि, तानि सङ्ग्राह्याणि ।

एभिस्त्रिभिरेव विभागैः क्रियात्मिका शिक्षा समनुष्ठेया । सर्वेषां यन्त्राणां प्रयोगप्रकारस्थापनानुवासनोत्तरवस्तियोजनायाश्चापि शिक्षाप्रबन्धो विधेयः ।

ग्रन्थानामध्यापनशैली चापि भारतीयैवाङ्गीकरणीया । साम्प्रतिकीं व्याख्यानप्रणालीमनुसृत्य दुष्करं ग्रन्थानुशीलनम् । यतः संस्कृतभाषानिबद्धानां शास्त्राणां क्रमस्यावस्थितिर्विभिन्नैवास्ते । तानि च यत् किमपि विषयजातमेकस्मिन्नेव स्थले सङ्क्षेपेण निरूप्य प्रकरणान्तरेष्वपि विशेषेण तद्विवेचयन्ति । अतस्तत्पौर्वापर्यसम्बन्धमनवगम्य विषयस्य तात्विकं ज्ञानं नूनं दुरापम् । अतः शास्त्रीयविषयाः शुकवद् घोषणं विवर्ज्य तथा विज्ञातुमर्हा यथा परिणामे हितवाहाः स्युः ।

एषु विद्यालयेषु कतमाः परीक्षा आयोजनीयाः ? पाठ्यक्रमसमयश्च कः ? के च ग्रन्थाः पाठ्यत्वेनावधार्याः ? इत्यादिस्सर्वोऽपि निर्णयोऽखिलभारतीयवैद्यसमुदायाभिमुखं संयुक्तसमित्यैव प्रमुखैर्महाशयैर्निर्धार्यः।

अत्र शिक्षिताश्छात्राः पुनः प्रधानेषु विद्यालयेषु प्रविशेयुस्तत्र चोर्वरितग्रन्थशिक्षणम् , तथा विशिष्टकर्माभ्यास-( प्रैक्टिस )-परिशीलनं च कुर्युः । एषु च पूर्वोक्तविभागत्रयसहितं भैषज्यनिर्माणशालाः, औषधालयः, आतुरालयश्चेति तत्त्रितयमपि व्यवस्थापनीयम् ।

तत्र निर्माणशालायां रसानामुपरसानाञ्च धातूपधातुशोधनमारणस्य तालताम्रसम्मिश्रितचन्द्रोदयमृगाङ्कहेमगर्भपोटलिकाप्रभृतीनां काचकूपिकापक्वरसानां लौहताम्राभ्रकादीनां सहस्रपुटभस्मनाम्, वङ्गत्रिवङ्गनागेश्वरादीनां तालहिङ्गुलमङ्गमिश्रितभस्मानां च घृततैलासवारिष्टक्षारगुग्गुलुगुडकावलेहगुटिकाचूर्णकाञ्जिकखण्डयूषमोदकपाकादीनां निर्माणप्रक्रियाश्च छात्रेभ्यः प्रत्यक्षीकृत्य प्रदर्शनीयाः । भेषजसंरक्षणव्यवस्था वितरणप्रकारश्चापि तत्रैवाभ्यसनीयौ ।

औषधालये च रोगिपरीक्षणस्यौषधोपचारकौशलस्य चापि शिक्षावश्यकी ।

आतुरालये च विभिन्नव्याधिपीडितानां रक्षणपूर्वकं तेषां विभिन्नावस्थाविषयकं छात्राणां प्रत्यक्षज्ञानशिक्षणमनिवार्यम् । ग्रहण्यामवाताद्युदररोगिभ्यश्छात्राः भेषजप्रयोगमपि विदध्युः येन व्याधेर्ह्रासं वृद्धिं चानायासेन जानीयुः। यथासमयं रोगिनिरीक्षणं तन्मलमूत्ररक्तादिपरीक्षणम्, मानम्, औषधपथ्यादेश्च सुव्यस्थापनम्, इति सर्वमपि कार्यं तत्रत्यं छात्रसात्करणीयम् ।

तत्र चैको विभागो भग्नास्थिकानां व्रणिनां चाप्यामयाविनां पृथक् कार्यः । तदुपक्रमाय सुश्रुतोक्तानि स्वस्तिकसन्दंशतालनाडीशलाकोपयन्त्राणीमानि षड्विधानि यन्त्राणि, मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूचीकुशपत्रारिमुखादीनि विंशतिविधानि शस्त्राणि च सङ्ग्रहीतव्यानि । तानि च किं धातुमयानि स्युः ? यन्त्राणि चातिस्थूलादिद्वादशविधदोषवर्जितानि, शस्त्राणि च वक्रकुण्ठखण्डखरधाराद्यष्टविधदोषवर्जितानि स्युः, कस्यां दशायां कस्य यन्त्रस्य शस्त्रस्य वा प्रयोगस्तथैतेषां कर्मविशेषप्रकर्षाय कैः कैः पदार्थैः संस्करणमित्यनेनापि छात्राः बोद्धव्याः । इदानीमाविष्कृतान्यनेकविधानि यन्त्रशस्त्राणि सन्तीति व्यवहार्याणि नवीनानि तान्यप्यत्र रक्षणीयानि । छेद्यभेद्यलेख्यवेध्याद्यष्टविधानां शस्त्रकर्मणां सम्यग् ज्ञानमपि च तत्रावश्यकम् ।

व्रणानामवस्थाविशेषेषु सुश्रुतोपदिष्टाः क्षाराग्नि-कर्मशिरावेधा अपि यथायोग्यं प्रत्यक्षं शिक्षणीयाः। एवमेव व्रणानामपक्वपच्यमानपरिपक्वविकृतरुह्यमानाद्यवस्था अपि। व्रणानां शोधनलेखनरोपणादिषु फलिनो योगाश्चोपयुज्य दर्शनीयाः। व्रणेषु क्रिमयो मा जायन्तामिति धूपानां प्रयोगः, व्रणक्षालनम्, पिचुवर्तिका-शलाकादिप्रयोगाः, व्रणानां वेष्टनप्रकारश्चेत्यादिकं सकलमपि छात्राणां क्रिययैव तथा बोधनीयं यथा ते विषयेऽत्र नदीष्णाः स्युः।

अत्रैव विभागेऽर्शोऽश्मरीव्रणभगन्दरमूढगर्भादीनां शस्त्रचिकित्साशिक्षाया अपि प्रबन्धो विधेयः।

आयुर्वेदस्याष्टाङ्गवत्वं सर्वविदितम्। परमद्यत्वे कायचिकित्सां विहाय शल्यशालाक्यभूतविद्याकौमारभृतागदरसायनवाजीकरणेति सप्ताङ्गानि विलुप्तप्रायाणि विस्मर्यमाणानि च वैद्यसमाजेन प्रचारद्वारा पुनरुज्जीवनीयानि। तत्र शल्यतन्त्रविषयेऽनुपदमुक्त एव व्रणविभागस्थापनोल्लेखः। एतत्सम्बन्धिसामग्र्यश्च बहुलमुपलभ्यन्ते। शेषेषु षट्सु त्विदमपि काठिन्यं यन्न तद्विषयकाः स्वतन्त्राः ग्रन्था अद्योपलभ्यन्ते। केवलं बृहत्त्रय्यां सामान्येन कृतं विवेचनमेवोपलभ्यते। अतश्च पुनः वैद्यसमाजे एतत्प्रचारोऽदभ्रश्रमसापेक्षः। साम्प्रतमुपलभ्यमानां सामग्रीमेवाश्रित्य प्रतिभासम्पन्ना वैद्याः विशेषतयैतान्यनुभूय पुनरेतेषु स्वतन्त्रान् ग्रन्थान् विरचयेयुः। आ अविकलसामग्रीसम्पादनमेतेषामध्ययनाध्यापनं बृहत्त्रयीस्थसामग्र्यैव सम्पादनीयम्। एतेषां प्रत्यक्षज्ञानाय बालोर्ध्वाङ्गविषप्रतीकारविभागाः स्थापनीयाः।

विभागैरेतैरेतेषामङ्गानां सनिदानचिकित्सापरिचयः साक्षात् सम्पादनीयः। रसायनवाजीकरणस्यापि च शास्त्रीयविधिना प्रचारो विधेयः। भूतविद्या कथं प्रचारणीयेति विषयो विचारणीयः। तं च वैद्यवराः सम्भूय वादेन निर्णयेयुः। एवं च तत्तच्छाखाभूतविद्यालयेषु सामान्यमायुर्वेदीयज्ञानं प्रत्यक्षं सम्पाद्योक्तप्रधानविद्यालयेषु वैशिष्ट्यं प्रत्यक्षज्ञानं च सम्पाद्यैव लोके व्यवहरेयुः।

किं चोक्तोभयविधविद्यालयातिरिक्तमिन्द्रप्रस्थसदृशे नगरेऽखिलभारतीयः कश्चिदायुर्वेदविद्यालय एवंविधः स्थापनीयो यत्राष्टाङ्गेषु प्रत्यक्षं छात्राः विशिष्टविदः सम्पन्नाः स्युः।

उपर्युक्ता सर्वापि योजनावलम्बते सर्वत्र सर्वदा च सुदुर्लभान् योग्यशिक्षकान्। अतोऽस्माभिरेतत्सिद्धये सर्वं विहाय प्रथमं विशिष्टविदः शिक्षकास्तत्र तत्र द्रुतं नियोजनीयाः।

साम्प्रतं राजप्रबन्धेन तत्तद्विषयकाध्यापनप्रणालीविदोऽध्यापकानुपस्थापयितुं चाल्यमानाः विद्यालया इवायुर्वेदशिक्षकानप्युपस्थापयितुं कश्चिच्छिक्षणपद्धतिविद्यालयः स्थापनीयः। काममयं निखिलभारतीयाष्टाङ्गायुर्वेदमहाविद्यालयस्यैवाङ्गमस्तु पृथग्वा। तत्र च मेधाविनश्छात्राः परीक्ष्य प्रवेश्यन्ताम्, न तु दुर्मेधसो यथाश्रुतग्राहिप्रतिपत्तारो वा। अध्यापकानां च संस्कृतभाषाज्ञानातिरिक्तमुत्कृष्टाङ्ग्लभाषायोग्यताप्यनिवार्या स्यात्, येन प्राच्यचिकित्साशास्त्रातिरिक्तं प्रतीच्यचिकित्सासिद्धान्तानपि जानीयुः, नान्यथायुर्वेदीयविद्यालयानां कार्यमनवद्यं स्यात्।

एवं योग्यशिक्षकैः विलुप्तेष्वायुर्वेदाङ्गेषु नवीनग्रन्थनिर्माणेन, प्रचलितशिक्षासंस्थासंशोधनेन, नवीनशिक्षासंस्थापनेन चास्माभिः शिक्षाक्षेत्रं समुन्नेयम्।

नैतदशेषं कश्चिद्व्यक्तिविशेषः सम्पादयितुमलम्। निखिलभारतीयायुर्वेदसम्मेलनेन प्रान्तीयसम्मेलनैर्वैतद्विधेयम्। अद्यापि जना आयुर्वेदे कामं श्रद्दधते।

तैः परमार्थमुत्सृष्टानि लक्षशो रूप्यकाणि आयुर्वेदसेवायामुपयुज्यन्ते ।

प्रमुखैर्वैद्यैरेष धनराशिर्व्यवस्थयोपयोज्यः । तैर्धनसाहाय्येन संस्थास्थापनादिभिश्च वैद्यसमुदायन्यूनताः परिहार्याः । नैतत्कल्पनामात्रं प्रस्तावमात्रं वा तिष्ठतु, एतदुन्नत्यवनती अस्माकमुन्नत्यवनत्योर्बीजमिति मा वैद्यमहानुभावा उदासतामत्र विषये किन्तु यथाबलं कार्ये परिणमयेयुरिति प्रार्थये ।

## ( ४ ) अन्वेषणम् ।

अन्वेषणमाविष्कारस्य प्रसवितृ । दृश्यमानानि नवनवानि सकलान्यपि जगतीह वस्तूनि अन्वेषणस्यैव फलम् । अस्मभ्यन्त्वस्याश्रयो नितरामेवावश्यकः । आयुर्वेदज्ञानकोषो हि सहस्राणि वर्षाणि उन्मूल्यमान इव वर्तते । यस्य गृहिणो गृहोपकरणानि यथा यथाऽसंयतानि गृहिणस्तथा तथैवान्वेषणमपि विधीयते । आयुर्वेदो हि विशृङ्खलितस्वशक्त्यन्वेषणाय गवेषणामपेक्षते प्रभूतवर्षाणि यावत् । मधुकोशडल्लणचक्रपाणिभिर्निर्मितासु टीकासु येषां विदेहनिमिभोजभालुकिजेज्जटगयीभेलजतुकर्णकार्त्तिकेयादीनां ग्रन्थाः प्रमाणत्वेनोपन्यस्तास्ते कुत्र सन्तीत्यन्वेषणायोद्योक्तव्यम् ।

ये ये आयुर्वेदविषया अजस्रं वर्षाणि कार्यक्षेत्रेऽप्रयुक्ताः सन्तोऽव्यवहार्याः सञ्जातास्तेऽप्यनुसन्धानादेव यथापूर्वं भविष्यन्ति । दिव्यचमत्काराण्यनेकानि भेषजानि चरकसुश्रुतादिषु दृश्यमानान्यपि अद्यत्वेऽविदितान्येव, तान्यपि नान्येन विना प्रत्यक्षाणि भविष्यन्ति ।

ग्रन्थेषु तावच्चतुर्विधो गन्धकस्तावद्विध एवाभ्रकः शिलाजतु च, क्रौंचकालिङ्गभद्रवज्रपाण्डिकान्तादिभेदेन वर्णिता लौहभेदाश्च, दार्विकवत्सनाभसैकतशक्तुकमुस्तकसार्षपकौर्मशृङ्गीकालकूटदर्दुरहालाहलयमदंष्ट्रमेषशृङ्गीहरिद्राकर्कटरक्तशृङ्गीग्रन्थकेसराद्यष्टादशप्रकारवतां कन्दविषाणां चोल्लेखः, इमे च पारदसंस्कारकर्मणि विशेषतयोपयुज्यन्ते, तेषु कत्युपलभ्यन्ते ? खर्परकङ्कुष्टे विवादग्रस्ते स्त एव । भूयस्यो दिव्या औषध्यो या ब्रह्मसुवर्चलाऽऽदित्यपर्णीसुवर्णक्षीराश्वबलाकाष्ठगोधासर्पसोमपद्माद्याश्चरकस्यायुर्वेदसमुत्थानीयरसायनपादे विवेचितास्ता एतदात्वे कथं ज्ञातुं शक्याः ? किं च प्रचलितानि पाठागाम्भारीरास्नादिनाम्ना भेषजानि, अथापि च विभिन्नरूपेण समुपलभ्यमानः काकोलीक्षीरकाकोल्यृद्धिवृद्धिमेदामहामेदाजीवकर्षभकेत्यष्टवर्गः कथं यथार्थतो निर्णीयेतेत्यादिविषयजातस्य समाधानमनुसन्धानवशंवदमेव । यद्यपि सम्मेलनावसरे द्रव्यगुणसंभाषा-निदानसंभाषा–चिकित्सासंभाषेत्याद्याः कतिचित् परिषदः आयोज्यन्ते परं नैतावता स्वल्पकालपरिमितेन विमर्शेन किमपि निर्णेतुं शक्यम् । वर्षात्मके काले होराद्वयमेवानुसंहितं कार्यं कियदंशेनायुर्वेदस्य विलुप्ताः विभूतीः प्रकाशयिष्यतीति नाविदितं संख्यावताम् । तदर्थं काचिदन्वेषणसमितिः वैद्यसम्मेलनेन भारतीयैरशेषैः प्रतिष्ठितैर्वैद्यैर्वा स्थापनीया । एतत्कृते च वैद्याः धनं समयञ्चोभयमपि दद्युः ।

समितिः प्रतिवर्षं कतिचिद्विषयान्निर्धार्य तदन्वेषणकार्यं चापरेषां तत्प्रणयिनामधीनं कुर्वीत । यत् किञ्चिच्चैकस्मिन् वर्षेऽन्वेषितं भवेत् तत्सम्मेलने संसूच्य समाचारपत्रेषु प्रकाशनीयम् । अन्वेषणीयाश्च क्रमशो विलुप्ता ग्रन्थाः संशयास्पदीभूता औषध्यश्च । विशिष्टा एव च वैद्याः रोगस्य, निदानस्य, आवस्थिकचिकित्सायास्तथा विशिष्टप्रयोगाणां च परीक्षणकार्ये आत्मानं नियोजयेयुः । प्रतिरोगं क्रियासमभिहारेण चिकित्स्यमानानां तेषामेव हि ज्ञानमत्र निर्विचिकित्सं भवति । प्रमुखेषु रोगेष्वेतानि परीक्ष्य प्रतिवर्षं परीक्षितरोगप्रयो-

गादीनां विवरणं सामयिकेषु पत्रेषु मुद्रापणीयम् । उदरक्षयकुष्ठप्रमेहवातव्याध्यर्शोग्रहणीज्वरादिपरिगणितामयानामावस्थिकचिकित्सा सर्वाङ्गीणमनुसन्धेया । एवं सति पत्राण्यप्यनायासेनैव पुष्कलां सामग्रीं, भिषजः सामान्याश्च जनाः नवं नवं ज्ञानमधिगमिष्यन्ति, आयुर्वेदप्रणाल्याः भवनं च समृद्धिमेष्यति । न चैतावदेवापि तु कथाशेषतां याताः भूयांसो विषयाः अचिरादेव विश्वजनीनाः भविष्यन्ति । परमेतन्नास्ति सुकरं कर्म ।

शतशो भिषज आत्मानमेतस्मा एव समर्पयेयुः, सहस्रशश्च ते यथाशक्ति स्वं दद्युस्तदात्वे कथंचिदस्योपक्रमः संभाव्येत । सर्वमेव च कार्यं सिद्धये त्यागमपेक्षते । अतश्चायुर्वेदमुद्धर्तुं वैद्या उभयथापि त्यागं विदधीरंश्चेत्तर्ह्येवेयं प्रणाली स्वदिव्यालोकेनाभिभवितुमपराः प्रभवेत् ।

## ( ५ ) औषधव्यवस्था ।

यथायुर्वेदमुन्नेतुमनन्तरोदीरितकार्यचतुष्टयी साधीयसी तथैव 'औषधव्यस्था' अपि । चिकित्साया मुख्यमङ्गं दिव्यौषधानि । नवीनानि, शक्तिमन्ति, यथाशास्त्रं निर्मितान्येव च तानि रागानुपशमयितुमलं स्युः, वैपरीत्ये त्वकिंचित्कराण्येव तानि ।

एतदात्वे आयुर्वेदस्येदमप्यङ्गं बहुसंशोधनमर्हति । साम्प्रतिके खलु वैद्यवर्गे बहवो व्यवहर्तव्यौषधान्यपि नैव परिचिन्वन्ति गान्धिकानारण्यकानेव चाश्रयन्ति ये किमौषधं कस्मिन्नृतौ, कुतः स्थानात् कथं च संग्राह्यमग्राह्यं वेत्यनभिज्ञाः । तेषां तु केवलमौषधीनां संग्रहणविक्रयाभ्यां जीविकैवोद्देश्यम् । भूयांसो विक्रेतारस्त्वीदृशा अपि सन्ति य ईप्सितं विहायापरमेवापरिचिन्वद्भ्यः तत्स्थाने ददति । प्रकृतिरेषा यत् संवत्सरमेकमनु सर्वाः काष्ठौषध्यो निर्वीर्याः सम्पद्यन्त इति, आपणिकास्तु वर्षचतुष्टयात् प्राक्कालिकीरपि ता विक्रीणत एव यावन्न ताभिस्समाप्येत । नूतनपुरातनसांकर्येण विक्रयणन्तेषामाह्निकं कर्तव्यम् । एवं चेदव्यवस्थया आयुर्वैदिकयोगा दुरवस्थां ययुश्चेन्नात्र किमपि चित्रम् । आसतां तावद् भेषजान्यापणिकाश्च, तन्निर्माणपरिस्थितिस्त्वितोऽपि वाच्यतरा ।

बहवोऽद्यकाराः घृततैलासवारिष्टरसादीनां तथा धात्वादीनां च निर्माणस्याप्यनभिज्ञाः । ये केचिच्च निर्मिमते तत्रापि शास्त्रीयप्रक्रियाया अभावः । आसवारिष्टसन्धानम्, घृततैलानां मृदुमध्यखरपाकाः, रसानामेकीकरणम्, धातूनां च मारणमिति सर्वोऽपि विषयो विशेषमनुभवमपेक्षते । अवलोक्यते यद् त्रिवङ्गवङ्गनागेश्वरलोहाभ्रकताम्रस्वर्णरजतादीनां भस्मानि प्रायोऽयथार्थान्येव व्यवह्रियन्ते । अपि च रसकर्पूरतालहिङ्गुलप्रभृतीनामयुक्ताः योगा अतीव विषमां समस्यामनुभावयन्तीत्यपि न चिकित्सकवराणामज्ञातम् । प्रतीकारश्च तदैव भावी यदा रोगहारिणः स्वयं कृत्येष्वेषु संलग्नाः स्युः । सर्वेऽपि भिषजश्चिकित्सका एव स्युरिति नावश्यकम् । तैर्जायुविक्रयनिर्माणात्मकमपि कार्यमात्मसात्कर्तव्यम् ।

इदानीं शतश औषधनिर्माणशालाः (फार्मेसियां) स्थापिताः सन्ति । नित्यं नूतना उद्घाट्यन्ते च । परं तत्र प्राप्यमाणान्यप्यौषधानि न सर्वांशेषु प्रामाणिकानि । यतस्तत्रापि सैव दुरवस्था । अत्र च हेतुस्तेषां व्यापारैकलक्ष्यमेव । व्यवसायिनश्च प्रकृत्या श्रमव्ययाभ्यां स्वलाभमेव महत्तरं काङ्क्षन्ते । अत एव स्वर्णमयस्य मकरध्वजस्य, अष्टवर्गगर्भितस्य च्यवनप्राशस्य, मौक्तिकस्वर्णमिश्रितस्यामृतप्राशस्य, सूर्यतापिनः शिलाजतोश्च सत्त्वेऽपि मानुष्यकमधिकाधिकं कासक्षयमन्दाग्निदौर्बल्यादिभिः पीड्यते । नात्रापराद्धं शास्त्रेण किंचित्

तत्तु यथाविधि निर्मितानामेवौषधीनां गुणान् वर्णयति। तथा च चिकित्सासाफल्यमभिलाषुकेण भिषग्गणेन तासां प्रकारः सुव्यवस्थितो विधातव्यः।

एतदर्थमावश्यकमेतद्यच्चिकित्सकास्तद्देशेषु प्रधानेषु नगरेषु औषधविक्रयणापणानुद्घाटयेयुः, यत्र तत्प्रदेशप्रसूतानामौषधीनां सौलभ्यम्। शास्त्रोक्तविधिना यथर्तु च भेषजः संगृह्णीयुः, संवत्सरान्ते च न जीर्णमौषधं हट्टेषु रक्षेयुः, काष्ठौषधानीव खनिजद्रव्याण्यपि, यथासंभवं समुपलब्धं विषमुपविषं चापि (संगृह्णीयुः)। वैद्याश्चैतादृशेभ्य एव प्रामाणिकेभ्यः स्थनेभ्यस्तानि (भैषज्यानि) क्रीणीयुः। सिद्धेभ्यश्च तेभ्यस्तत्प्रान्तीयास्ते स्वस्वप्रान्तेष्वेकैकामौषधनिर्माणशालां (फार्मेसी) संस्थाप्यानुभविनः कार्यदक्षाश्च वैद्यास्तत्संचालकपदं विभूषयेयुः, तन्निर्माणस्य सम्पूर्णानि कार्याणि च स्वसमक्षमेव कारयेयुरिति।

तत्तत्प्रान्तीयानां चैतेषां प्रान्तान्तरेष्वपि प्रेषणस्य प्रबन्धो भवेद्येन प्रत्येकं प्रान्तस्थास्ता अयत्नेनैव तत्तत्स्थानि तानि प्राप्नुयुः, तन्मूल्यं चापि व्ययं प्रपूर्योचितलाभपुरस्सरमेव विधेयं येन साधारणासाधारणलोकः सर्वोऽपि तत्क्रेतुं प्रभवेत्।

एतासामौषधनिर्माणशालानां (फार्मेसियाँ)-विशेषा हट्टाः (एजेन्सियाँ) अपि विशिष्टेषु नगरेषु स्थापनीयाः, येन स्थानीयाः नैकटिकाश्च रोगहारिणस्ततो भैषज्यानि लभेरन्। रसानां धातूनां च द्वित्राः निर्माणशालाः भिन्ना एवायोजनीयाः, यासु तत्प्रयोगान् वर्जयित्वा तदितरौषधानि न निर्मीयेरन्। अत्र च पारदतालहिङ्गुलताम्राभ्रकशतमल्लप्रभृतीनामुत्कृष्टाः प्रयोगाः समनुष्ठेयाः। प्रतिप्रान्तं चासां शाखाः (एजेन्सियाँ) स्थापनीयाः, यतस्तत्प्रान्तस्थानानां स्वस्मिन्नेव प्रान्ते सर्वविधभेषजावाप्तिसौकर्यं स्यात्। एवंविधयोजनयैवौषधाव्यवस्था निवारयितुं शक्यतेऽन्यथा विज्ञापनेषु प्रकाशितानि भेषजानि नूनमेतेषां प्रचारेऽन्तरायाः भविष्यन्ति।

एवं संगठनशिक्षाप्रचारान्वेषणौषधव्यवस्था वैद्यसमुदायस्यैवानुष्ठेयाः। अन्तरैतत्पञ्चकर्मपूर्तिं नास्माकीना प्रणाली सम्यक् संशुद्धिमर्हति। अतश्चाधुना परिवर्तनीया स्वकार्यसरणिर्वैद्यसम्मेलनेन। न केवलं भाषणैर्दिनत्रयं प्रदर्शनेन च सन्तुष्यताम्। उत्कृष्टैः प्रतिभायुक्तैश्चागदंकारैः सम्मेलने रङ्गम्योपर्युक्तकार्याणि स्वायत्तीकर्तव्यानि। अन्यथाऽस्थिरेण कार्येण न वयं स्वान् साम्प्रतिके संघर्षे स्थिरीकर्तुं शक्ष्यामः। आयुर्वेदव्यपदेशमात्रेणैव नास्माकमुद्धारो भावी। साधारणो जनो न केवलं वार्तयापि तु प्रत्यक्षं फलदेन कर्मणानुगमिष्यति नः। अत आशासेऽहं यद् वैद्यवरा दत्तावधानाः कर्णे करिष्यन्ति निवेदनं मदीयमिति।

सहैव च वैयक्तिकीमीर्ष्यां विहाय, पारस्परिकमनैक्यं प्रणाश्य, स्वकीयगौरवापेक्षयायुर्वेदगौरवमेव प्रधानीकृत्य, समे एकीभूय यथाशक्ति धनेन ज्ञानेन सेवया च प्राङ्निगदितानि कार्याणि पूरयितुं द्रुतं प्रवृत्ताः सन्तः आयुर्वेदोन्नतेः सूत्रपातं विधास्यन्तीति।

॥ इतिशम् ॥



# 'सूर्यभगवान् की अपूर्वमहिमा'

ले० श्रीमान् स्वर्गीय डा० श्री अमरनाथजी 'याज्ञिक' एम्, सी, पी, एण्ड, एस्, प्रोफेसर
अर्वाचीन-आयुर्वेदविभाग 'संस्कृत कालेज, जयपुर' फिजीशियन एण्ड सर्जन
मेडीकल ऑफिसर जयपुर स्टेट एज्यूकेशन डिपार्टमेण्ट—



भगवान् सूर्यदेव के प्रकाश को चिकित्सा और भेषज का स्वरूप देना जनता को आश्चर्यजनक और हास्यप्रद प्रतीत होगा परन्तु प्रकट में आये हुवे गुण उनके प्रकाश के प्रभाव को और हमारे विश्वास को दृढ़ करते हैं। पृथिवी के पुरातन-निवासियों को भी सूर्य भगवान् की महिमा विदित थी कि यह प्रकाश कितना लाभकारी और दोषहारी है। आधुनिक प्रकाशचिकित्सा केवल प्राचीनचिकित्सा की ही कायापलट है-जिसको कि अर्वाचीनविज्ञानकला ने प्राप्त की है। प्रकाशकिरण का एकभाग ( Ultra violet ) जो कि घोर-कीटाणु-नाशक सिद्ध हुआ है। सूर्य के प्रकाश की सुगमता यह है कि वह संसार के प्रत्येक भाग में उपस्थित है, इसके उपचार में किसी बहुमूल्य यन्त्र तथा विशिष्ट कार्यकर्ता की भी कोई आवश्यकता नहीं पड़ती। सूर्य के प्रकाश में अग्निकिरण (Heat-ray) प्रकाशकिरण Light ray' और रासायनिककिरण 'Altra violet' आदि कई किरणें हैं।

वनस्पति-संसार में सूर्य के प्रकाश का गुण सब को विदित है। कर्वनगैस $CO_2$ की उपस्थिति में श्वेतसागर बनता है। जब कि वनस्पतियों पर सूर्य का प्रकाश पड़ता है। $C.O_2$ गैस के उपस्थित होते हुवे भी सूर्य के प्रकाश के अभाव से श्वेतसार नहीं बनता जिससे कि पौधे नहीं बढ़ते, उनमें कणरञ्जक 'Chrophyle, क्षीण होजाता है। प्रकाश पौधों की वृद्धि में विशेष उत्तेजना देता है। जिससे कि फूल फल बहुतायत से निकलते हैं।

उपर्युक्त बातों को देखते हुवे यह स्पष्ट होजाता है कि प्रकाश के गुणों से प्राणिवर्ग को भी परमलाभ प्राप्त हो सकता है। इसमें सन्देह नहीं। छोटे प्राणियों में जैसे—मैण्डक, खरगोश आदि, में श्वास क्रम बढ़ जाता है। ऑक्सिजन उच्छ्वास से विशेष प्रविष्ट होता है और $C.O_2$ गैस प्रश्वासद्वारा बाहर निकलती है। रक्तमें सदैव उपस्थित द्राक्षौज 'Glueose' अपनी प्रामाणिक ( प्राकृतिक ) अवस्थापर रहता है। क्योंकि सूर्य का प्रकाश उसकी अधिकता को व न्यूनता को रोकता है। प्रकाश रक्तभार 'Blood pressure' को स्थिर करता है, त्वचा की केशिकाएँ प्रकाश से फैलकर विशेष रक्तपूर्ण होजाती हैं जिससे त्वचा का स्वेदन भी भलीभांति होजाता है। त्वचा में विशेष रक्तसञ्चार के कारण श्वेताणु 'w. p c.' अधिकांश में रहते हैं। जिससे बाह्यरोगसंक्रमण नहीं सताता है।

त्वचा में रहनेवाली वसा सूर्य के प्रकाश से एक प्रकार की शक्ति 'Vrtimine D' उत्पन्न करती है। जिस प्रकार वनस्पतियों में प्रकाश के अभाव से कणरञ्जक कम होजाता है। उसी प्रकार प्राणिवर्ग में भी रक्तक-

रक्षक Hemoglobine' कम होजाता है और रक्तक्षीणता 'Animia' पैदा करता है । अन्धेरे में रहने से रक्ताणुओं की संख्या कम होजाती है। ओपजनवायु के मिलने पर भी प्रकाश के न होने से रक्तक्षीणता स्वाभाविक दशा को प्राप्त नहीं करती । लौह 'Iron' भी प्रकाश की साक्षी में गुणकारी हो सकता है, अन्यथा नहीं ।

प्रकाश से शरीर के अन्य अवयव भी अपना नियमित कार्य करते हैं । आन्त्रिक आकुञ्चन तीव्र होता है, और मलबाधा नष्ट हो जाती है । प्रकाश से क्षयकेन्द्र शीघ्र निर्बल होजाता है । काले मनुष्यों में प्रकाशग्रहण विशेष होता है अपेक्षा और वर्ण वालों के। अतः क्षय गौरवर्ण वाले मनुष्यों में विशेष होता है ।

प्रकाश जिसप्रकार गुणकारी है उसी प्रकार विशेष मात्रा में विषजनक हो सकता है और अनेकप्रकार की हानियां हो सकती है जैसे लू लगना घर्मजन्य ज्वर ( Heat fever ) त्वचा का काला पड़ना सूर्य के प्रकाश से अन्धे हो जाना, आंखों में रोहों का पड़ना, अरूंषिका ( अलाईयों का निकलना ) शरीर में मूत्रसार ( यूरिया ) का होना रक्तकी अम्लता का बढ़ना, शिरोवेदना, वमन और भ्रम आदि २ ।

सूर्य का प्रकाश सदा ऊँचे स्थलों में अच्छा मिलता है । ऊँचे स्थलों में प्रकाश तीव्र रहता है । वर्षाऋतु में और धूँए से तथा मिट्टीवाली हवा में प्रकाश गुणकारी व लाभकारी नहीं होसकता है ।

सूर्यप्रकाश से शल्यकर्म में अधिकांश लाभ पहुँचता है । व्रण सूर्य के प्रकाश से शीघ्र अच्छे हो जाते हैं । प्रकाश के कारण कीटाणुओं को व्रण में खाद्य पदार्थ नहीं मिलते हैं । व्रण प्रकाश को पीड़ारहित बना देता है । प्रकाश से अस्थिप्रदाह में विशेष लाभ पहुँचता है, प्रकाश से गुल्म व अर्बुद भी ठीक हो जाते हैं, सन्धिगत प्रदाह में प्रकाश लाभकारी है, शरीर के अनेक विषजन्य रोगों में प्रकाश लाभप्रद है। त्वचासम्बन्धी रोगों में प्रकाश अत्युत्तम माना गया है, अनेकप्रकार की क्षयावस्थाएँ सूर्य के प्रकाश से सुधर जाती हैं । सूर्य के प्रकाश से चूना, खटिक 'Calcium और स्फुरित 'Phosphorous' और लौह 'Iron' का आत्मीकरण भलीप्रकार होता है— सूर्य के प्रकाश से वातसंस्थान और अन्तरीयरस 'Hormones' अच्छे कार्य करते हैं ।

प्रकाश चिकित्सा 'Heliotherapy' के उत्तमभोजन मानसिकशान्ति, विश्राम तथा व्यायाम सहायक हैं । जहां प्रकाश नहीं मिलता है वहां आधुनिक विज्ञानवेत्ताओं नें Ultraviolet lamp' अल्ट्रावायलेट नामक दीपक बनाया है जो उपर्युक्त सूर्य का प्रतिनिधि है ।

सूर्यभगवान् की महिमा वास्तव में अवर्णनीय है—उनके गुणों को और कृपा को मानते हुवे हमें सूर्यभगवान् का बड़ा ऋणी रहना चाहिए । सूर्य भगवान् की सेवा और साष्टाङ्ग प्रणाम करना प्रत्येक मानव के लिये लाभप्रद है—इति शम् ।

' हास्य '

वैद्यराज—आप बहुत स्वस्थ मालूम होते हैं ।

रोगी—हां महाराज ! मैंने आपकी आज्ञा का यथार्थ पालन किया ।

वैद्य०—वह क्या ?

रोगी—शीशी के काग को सावधानी से बन्द रखने की सम्मति का पूर्णरूपेण पालन किया है ।

❋ शम ❋



विद्यालयाद्धिश्रमावसरे
जयपुरराजकीयसंस्कृतविद्यालयाध्यापकमध्यस्थः श्रीस्वामिमहाभागः

# परिशिष्टम् ।

## श्रीलक्ष्मीरामस्वामिनां वैदुष्यमभिनन्दनं च ।

( ले० महामहोपाध्यायः श्रीगिरिधरशर्मा चतुर्वेदः, संस्कृतविद्यालयाध्यक्षः, जयपुरम् )

लेखकोऽयं विद्याभ्याससमयादेव स्वामिमहाभागानां सौहार्दभाजनमिति तदीयां कांचन स्तुतिं यद्यपि नौचित्यपक्षे परिगणयति, तथाप्येतावत्तथ्यमवश्यमालेख्यम्—यदेवंविधा विसृत्वरप्रतिभाभाग्यसौभाग्यभाजः सदाचारपरा अजातशत्रवश्च महान्तः क्वचित् कदाचिदेवेश्वरेच्छया प्रादुर्भवन्ति । 'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः' इति कविकुलगुरोरवितथायाः सूक्तेरपवादभूतास्त इमे जगत्यादर्शतां यान्ति, सर्वसहृदयहृदयावर्जकाश्च भवन्ति । जयपुरस्य, विशेषेण जयपुरराजकीयसंस्कृतपाठशालायाश्च सौभाग्यमिदम्, यदेवंविधानां स्वामिमहाभागानामिह प्रान्ते जनिः, इह च विद्यालाभः । भाविनोऽर्थस्य गौरवाद्यतः प्रभृति श्रीदादूसंप्रदाये सुप्रसिद्धगुरोः पद्मशिष्यतामाप्य शास्त्राण्यभ्यसितुं संस्कृतपाठशालां प्रविष्टाः स्वामिमहाभागाः, तत एवैषां सर्वतो विसृत्वरीं प्रतिभामभिवीक्ष्य सुपरितुष्यदन्तरङ्गा अध्यापका अन्ये च महान्तो विद्वांसो यशःसौरभमेषां प्रासारयन् । अभ्याससमय एव विद्वद्भिर्भूयोऽभिनन्दनं कृतम्, परीक्षाकाले परीक्षकैश्च बलवदाकृष्टैर्गुणगणसंमाननाय स्वयं पारितोषिकं प्रहितम्, स्तुतिश्च स्वहस्तेन लिखितेत्यादि सर्वं वृत्तमन्येषु लेखेषु पठिष्यते पाठकमहाभागैः ।

शिरस्यापतितोऽध्ययनभारः कथमपि वोढव्यः, ग्रन्थानारभ्य कथमपि परीक्षोत्तरणीयेत्यन्यद्वस्तु, सोत्साहं योग्यताधिगमाय रात्रिंदिवं प्रयतनम्, 'व्युत्पत्तिमात्रं पठनं नराणाम्' इति प्राक्तनवचश्चरितार्थीकरणम्, सर्वतः प्रतिभाप्रागल्भ्यप्रदर्शनं चान्यदेव । 'भविष्यतां महावृक्षाणामारम्भ एव मसृणानि भवन्ति पत्राणि' इति लोकोक्तिं चरितार्थयन्तो महान्त आरम्भादेव स्वं महिमानमुपदर्शयन्ते । स्वामिमहाभागाः प्राधान्येनायुर्वेदमधीयाना एव शास्त्रान्तराणामपि मर्मज्ञातायां मनो दधुरिति नैतावदेव, प्रौढलेख-कवित्वपाटवमपि तदैवाभ्यसितुं तीव्राभियोगा इमे आसन् । पाठशालायामनुपस्थितिकारण आपतिते छात्रा निवेदनपत्रं प्रेषयन्तीति रीतिः । तत्रैतेषां निवेदनपत्रमेकमवलोकितं पुरा दोहाद्वितयनिबद्धम्—

> "जातोऽहं ज्वरपीडितो दैवाचाकस्मात् ।
> अवकाशो दिनपञ्चकं देयो मे तस्मात् ॥
> विनयदलं प्रहितं मया लक्ष्मीरामाख्येन ।
> नभसि सिते चैकादशीतिथौ युते भौमेन ॥" इति ।

वङ्गेषु वैद्यप्रवराः कविराजा इति प्रसिध्यन्ति ( बहुत्र तत्पदं रूढमेव ) परं श्रीस्वामिनां गुरुषु श्रीकृष्णराम-भट्टमहाभागेषु यौगिकमासीत् कविराजपदम् । तदन्तेवसद्भिः श्रीस्वामिभिरप्यारम्भादेव कवितापाटवमप्यावश्यकमाकलय्य तत्रापि दत्तैव दृष्टिः । अभ्यासकाल एव कविकुलगुरोः कालिदासस्य प्रधानं महाकाव्यं रघुवंशमनेकधा प्रकारान्तरेणानुवदितुमेत-दुपक्रान्तवन्तः । तस्य निदर्शनानि कियान्तिचित्—

"ततः कीर्तिधनो राजा प्रातर्मागधिपूजिताम् ।
ऋषेर्धेनुं वसिष्ठस्य वनं गन्तुममुञ्चत ॥ १ ॥
तस्या मार्गं शफन्यासशुद्धरेणुं सुदक्षिणा ।
अन्वगच्छदसौ साध्वी श्रुतेरर्थमिव स्मृतिः ॥ २ ॥
निवर्त्य मागधीं राज्ञा गौररक्षि दयालुना ।
स्तनीभूतचतुःसिन्धुर्धेनुरूपेव मेदिनी ॥ ३ ॥
प्रभावानुमितां बिभ्रत्यक्तलिङ्गामपि श्रियम् ।
सोऽव्यक्तदानलेखोऽभूदन्तर्मद इव द्विपः ॥ ७ ॥
नृपस्तां देवतादीनामन्वैत् सत्कृतिकारणम् ।
नरेन्द्रेण बभौ रात्रिः पूर्णचन्द्रान्वितेव सा ॥ १६ ॥
वेशन्तोत्थितक्रोडं स मृगाचरितशाद्वलम् ।
वृक्षोन्मुखमयूरं च वनं पश्यन् समाययौ ॥" इत्यादि ।

प्रकारान्तरेण—

"अथो वसिष्ठस्य मुनेश्च धेनुरमोचि प्रातर्मनुजाधियेन ।
गन्तुं वनं कीर्तिधनेन शुद्धा सुदक्षिणापूजितशृङ्गमध्या ॥ १ ॥
तस्याः शफस्थापनशुद्धरेणुः पन्था नराणामधिपस्य राज्ञ्या ।
पतिव्रताग्रेसरया दयालोः स्मृत्या श्रुतेरर्थ इवानुजग्ये ॥ २ ॥
ग्रासैस्तृणानां रसिभिश्च तस्याः स्वच्छन्दचारैर्वनमक्षिकाणाम् ।
निवारणैर्गात्रविघर्षणैश्च सेवापरोऽभूत्सहि सार्वभौमः ॥ ३ ॥

समये समये कार्यवशात्सुहृद्भ्यः संवादप्रेषणम्, कदाचित् सति प्रवासे पत्रप्रेषणमपि च स्वामिनां सरसैः पद्यैरेव बाहुल्येन समपद्यत । इदानीं कृतेऽप्यन्वेषणे तादृशानि पत्राणि न लब्धानि इति स्मृतिपथ्युपस्थितान्येव कतिचित् पद्यानि तच्छैलीं निदर्शयितुमिहोदाह्रियन्ते—

'पयोदच्छटाच्छन्नघर्मांशुबिम्बे
लसद्भूरिसौरम्यभूमीसहौघे ।
निजैर्बन्धुभिः[1] सार्द्धमाराममानं
दिदृक्षामि वृक्षावलीभासमानम् ॥

१ सुहृद्भिः, २ आनयति-जीवयति तादृशम् ।

"निजसहवासात्रिभूषितामलगुणगणावलीषु ।
नतिततियुतं निवेदनं श्रीहरिदत्तसुधीषु ॥"

"स्वस्तिश्रीमदुदारसुन्दरगुणग्रामावलीराजिते ।
विद्वद्वृन्दसुगीयमानधिषणाप्रागल्भ्यविभ्राजिते ॥
नानानाटकभाणकाव्यसरसाम्भोजद्विरेफायिते ।
श्रीचन्द्राभिधसज्जने नतियुतं वृत्तं समावेद्यते ॥"

"अपारः शब्दपाथोधिः सहसा चुलुकीकृतः ।
लोकोत्तरधिया येन वन्द्यो गिरिधरो ह्यसौ ॥" इत्यादि ।

अध्ययनादविरतैरेव च स्वामिमहाभागैः स्वगुरुनिबद्धा सिद्धभेषजमणिमाला तथाविधया टिप्पण्या विभूषिता, याद्यापि वैद्यवर्यैर्बहुमूल्यतया समाद्रियते । छात्रावस्थायामीदृशस्याभिनिवेशस्यैवायं महिमा, यत्स्वामिमहाभागा अध्यापने चिकित्सिते च तुल्यमनुपमत्वेन सुख्यातिमध्यगच्छन् । यशःसौरभेण यथा दिगन्ता एभिः सुरभीकृताः, तथैवानन्यसाधारणो द्रविणराशिरपि संगृह्य लोकहिते नियोजितः । 'संस्कृतविद्या नास्तीदानीमर्थकरीति' विरोधिनां प्रवादः समूलमुत्खातः ।

चरकसंहितायां ये समुपलभ्यन्तेऽतिगभीरा दार्शनिका विचाराः, तेषामुपपादनमनेन लेखकेनाध्यापयतां स्वामिमहाभागानां मुखादनेकशः श्रुतम् । दार्शनिकं प्रखरपाण्डित्यमन्तरेण न तथा तानि प्रकरणानि कोऽपि व्याख्यातुं प्रभवतीति सुस्फुटं तत्र शक्यते वक्तुम् । स्वसंप्रदायं स्वाभिरुचिं चानुरुध्य वेदान्तस्याकरग्रन्थास्तु स्वामिभिर्गुरुमुखादेवाधीताः, परं सुहृद्गोष्ठ्यां प्रचलति प्रसङ्गे व्याकरणन्यायादिविषयेष्वपि विसृत्वरप्रतिभापरिचय एषामनेकधा प्राप्तः ।

भरतपुरराज्ये आनन्दाब्दे गोस्वामिप्रवराचार्यवर्यश्रीवल्लभाचार्यमहाभागानामादेशेन यदभूद्राजपुत्रप्रान्तीयमायुर्वेदसंमेलनम्, तत्र 'अवैज्ञानिकीयमायुर्वेदचिकित्सापद्धतिः' इति द्राक्तराणामलीकं परीवादमुपमर्दयितुं प्रस्तावे समुपस्थिते स्वामिमहाशयैरायुर्वेदस्य वैज्ञानिकत्वमुपदर्शयितुं चरकसंहितायाः—

"विपरीतगुणैर्देशमात्राकालोपपादितैः ।
भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः ॥"

इति पद्यमवलम्ब्य तथा व्याख्यातम्, यथा चमत्कृता विद्वन्मण्डली प्रत्यक्षमिवायुर्वेदस्य वैज्ञानिकत्वमपश्यत् ।

भूयोऽपि समये समये कवित्वप्रौढिः स्वामिमहाशयैराविष्कृता । सम्राज एडवर्डमहाराजस्याकस्मिकरोगवशात्प्रत्यूहितो राज्याभिषेको यदा सत्यामुल्लाघतायां निष्पन्नः, तदा राजनियोगाज्जयपुरे श्रीगोविन्दमन्दिरे संघटितायां विद्वत्सभायां सर्वेषु विद्वत्सु स्वस्वकविताः श्रावयत्सु स्वामिमहाभागैरपीमानि पद्यानि पठितानि—

१ स्वामिनां शैलीनिदर्शनायैवास्यापि पद्यस्य प्रकाशने वैयात्यमालम्बितम् ।

"वृन्दारकवृन्दादृतचरणं वृन्दारण्ये विहरन्तं ।
मानवकुलदावानलदानवदुष्टकुलानि प्रहरन्तम् ॥
अम्भोदाधिपजम्भारिभ्रमवारणकारणकुरुविन्दं ।
वन्दामो नन्दात्मजमेनममन्दानन्दं गोविन्दम् ॥ १ ॥

अद्य विस्फुरत्प्रभाविलज्जितेन्द्रपीठकं ।
भूपवृन्दमौलिरत्नचुम्बिपादपीठकम् ॥
एडवर्ड इन्दिराविलासगेहकाननं ।
नन्दने ह्यलङ्करोति राजकीयमासनम् ॥ २ ॥

केचित् प्रोद्यदमन्दामोदं हृद्यानाघ्रान् स्वच्छन्दं ।
वादित्रानपरे वीणाद्यान् बहुविधनादांश्चामन्दम् ॥
सद्विद्या अनवद्यं पद्यं रसतो धिक्कृतमाकन्दम् ।
आस्वाद्यात्राद्यानुभवन्ति ह विरचय्याद्भुतमानन्दम् ॥ ३ ॥

निजगतिकृतिजितदितिजादितिजं गणनातीतनृपतिततिविनुतम् ।
योरोपीयममुं यन्तारं राज्यश्रीः स्वयमागन्ताऽरम् ॥ ४ ॥

गुणानुरञ्जिताखिलप्रजाजनः प्रभाववान् ।
सुनीतिरीतिचातुरीप्रभातुरीकृतोशनाः ॥
अखर्वगर्ववोरवीरपूजिताङ्घ्रिमण्डलः ।
समस्तभूमिमण्डनं स एडवर्डसप्तमः ॥ ५ ॥"

तथैव देहल्यामाततायिनो जघन्यादाक्रमणाद्यदा लार्डहार्डिञ्जमहोदयस्य परित्राणमभूत्, तदापि तथैव संघटितायां सभायां स्वामिमहोदयानां पद्यानि सर्वैः सानन्दमाकर्णितानि—

"सर्वाधार निराधार सर्वेश्वर निरीश्वर ।
सर्वाकार निराकार गोविन्द ब्रह्म ते नमः ॥

अद्य स्वीयमुदारभावमतुलं यत्प्रौढभावोदयाद् ।
हार्डिञ्जोऽयमनामयं सदुदयं संभावयन् भावितः ॥
आबद्धाञ्जलिभक्तिभावमधुरं पीयूषवर्षाकिरं ।
तामुद्दामदयादृशं भगवतो वन्दामहे सादरम् ॥ २ ॥
आग्नेयास्त्रजवेदनामनुभवन् यो दुस्सहां श्रीमता
क्ष्माधौरेय परीक्षणं विदधताऽनायासमुत्तारितः ॥

तं भूयोऽधिकमेधमानमभितः संगीतनीतिच्छटं ।
हार्डिञ्जं प्रविलोक्य नीरुजमज श्लाघ्यं प्रमोदामहे ।। ३ ।।
तत्तादृङ्निबिडप्रहारजनितोद्दामव्यथाभोगिना ।
येन क्षान्तिरमानुषी प्रकटिता लोकोत्तरा धीरता ।।
श्रीमत्पञ्चमजार्जभूपतिलकप्रेयान् स लार्डाग्रणी–
हार्डिञ्जोऽवतु देवदेव भवतो भक्तौ रतं भारतम् ।। ४ ।।
धैर्यौदार्यदयाक्षमागुणगणस्यैकं निवासाश्रयं ।
रक्षाकर्मसमीक्ष्यकारिणमलं शिक्षाप्रसारोद्यतम् ।।
त्रातारं किल भारतस्य करुणापात्रस्य सन्तारकं
हार्डिञ्जोपममेव नाथमनघं हे नाथ नाथामहे ।। ५ ।।
बालान् मोदकलाभमेदुरमदामोदप्रमोदाकुलान्
नूनं जन्मदिनोत्सवे विदधता सोत्साहमुत्सारिता ।।
श्रीलार्डप्रवरस्य येन नगरस्यालस्यजा म्लानता
सोऽयं धर्मधुरंधरो विजयतां श्रीमाधवक्ष्माधवः ।। ६ ।।
श्रीमज्जार्जमहोदयस्य नृपतेः श्रीधर्मपत्नीजुषः
शश्वद्भारतभारतस्य नितरामास्तां सदानामयम् ।।
हार्डिञ्जस्य तथैव माधवमहीपालेन्द्रचूडामणे–
र्विश्वस्यापि च राजभक्तिनिरतस्यास्तां सदानामयम् ।। ७ ।।
हार्डिञ्जमोदवृद्ध्यर्थं श्रीमाधवनिदेशतः ।
प्रार्थना विहिता विज्ञैः सायं गोविन्दमन्दिरे ।। ८ ।।
अधिवसता जयनगरं
लक्ष्मीरामेण निर्मिता नवका ।।
गोविन्दपादयुग्मे
पद्यसुमालिः समर्प्यते मयका ।। ९ ।।"

अथ कालिकातानगरे षष्ठवैद्यसंमेलनपदमलंकुर्वद्भिः स्वामिमहाभागैर्यद् व्याख्यातम्, तत् गद्यपद्यशैल्याः, शास्त्रज्ञानस्य, अध्ययनशीलतायाः, विवेचनापाटवस्य च प्रौढं निदर्शनम् । सर्वमेव तद् व्याख्यानं न केवलं वैद्यधुरन्धराणाम्, अपि तु संस्कृतविद्याप्रणयिनामपि पठनार्हं मननार्हं च । तदैव मुद्रितमिदं लभ्यतेऽद्यापि, तथापि वैद्येतराणां विदुषां परिचयाय कतिचित्स्थलानि समुदाह्रियन्तेऽत्रापि ।

आदौ पद्यानि तावद् दृश्यन्ताम्—

"वँलेः सर्वस्वहरणं प्रवणं भवतारणे ।
साधूनामेकशरणं श्रीकृष्णचरणं नुमः ॥ १ ॥
सद्वैद्यागमनित्यखेलनकलारङ्गाननुपागामिमान्
बङ्गान् भेषजसम्प्रयोगपटुताकामः कदाचित् पुरा ॥
एतेष्वेव च सत्क्रिये यदधुना मन्दोऽप्यहं द्वारका–
नाथस्याखिलवैद्यभूषणमणेः सोऽयं प्रसादोदयः ॥ ५ ॥
पूर्वैः साधुगुणोज्ज्वलैरुपचिताभिख्ये सभानायक–
स्थाने दोषमलीमसस्य मम यन्निर्वाचनं साधु तत् ॥
षड्वर्षीयशिशोरसौ समभवत् सम्मेलनस्यालिके
कृष्णा कज्जलरेखिकेव जनतादृग्दोषनिर्मूलिनी ॥ ६ ॥"

अथ लेखप्रौढिपरिचयाय वङ्गवर्णनमिदमादावालोक्यम्—

"यावनपाश्चात्त्यचिकित्सावात्ययोत्सारितो लोकोपेक्षातपेन क्लान्तश्चिकित्सकपाशोपेक्षया क्षीणो यथायुर्वेदो भूमिमिमामाजगाम वाङ्गीं निवाताय शान्त्यै पुष्ट्यै च, तथैव वयमपि सोत्साहकृतीनां स्वनिर्भराणां विघ्नैरदूयमानानां वर्तमाने ऋषिप्रवर्त्तितायुर्वेदप्रचारे कनिष्ठिकागणनीयानां वाङ्गविदुषां करावलम्बं लब्धुमायाताः स्मः । अन्यत्र च पुस्तकेषु वृद्धेषु कथासु वा स्मृतिशेषतां गतश्चिकित्साम्नायोऽत्र गुणबहुलां वैद्यजातिमाश्रित्य न केवलं जीवति, परमपसारयति स्वचमत्कारैः प्रतिद्वन्द्विविहितापलापान् । अत्र हि सुगृहीतनामधेया महामहोपाध्यायपदालङ्कारा मद्गुरुचरणाः श्रीद्वारकानाथसेनमहानुभावाः श्रीविजयरत्नसेनमहाशयाश्च नानादेशागतेषु च्छात्रेषु तद् विद्याबीजमवपन् यत् पुष्पितं फलितं काण्डप्ररोहवदायूंषि पुष्णाति बहूनां चिकित्सान्तरविप्रलब्धानाम् । अत्र हि युवापि विद्यया वृद्धो गणनाथसेनमहोदयः पाश्चात्त्यव्यावहारिकविज्ञानात् प्रयोगसापेक्षां सूक्ष्मगवेषणां भाषान्तरजह्नौ लीनामुद्धृत्य भगीरथ इवायुर्वेदमहोदधौ समयोजयत् । अत्र हि यूरोपाख्यातयशा लब्धवर्णः प्रफुल्लचन्द्ररायः प्राचीनार्य्यरसायनशास्त्रस्येतिहासं गुम्फन् रसार्णवं विलुप्तं पुनः समस्करोत् । अत्र हि वैद्या न यथेतरत्र वैयाकरणकिरातापसारितापशब्दमृगसुखविहाराय कन्दरीकृताननाः, किन्तु शब्दार्थोभयविदो नामानुसारं कविराजा एव । न ते शुष्काः स्तब्धाः स्थाणवः परं रसाढ्याः । नियतमेतेषां कृपया पुरीमेतेषां समागतैरस्माभिः कापि नवीना संजीवनी शक्तिरुपलभ्येत, यथा वङ्गेष्विवान्यत्रापि भूयादग्निवेशसनत्कुमारचरकादीनामाचार्यवर्य्याणां तपसो ज्योतिषः प्रकाशः"

अथातो विनयातिशयात्स्वस्य सभापतिपदायोग्यतां बोधयितुमुपक्रमते—

अहं व्यवहारानभिज्ञः श्रीगुरुचरणप्रसादावाप्तकतिपयज्ञानकणः कोणस्थ इव कांश्चिच्छा-

१ स्वगुरोः श्रीकृष्णरामवैद्यमहाभागस्य भगवतश्च श्लेषेणात्र स्तुतिः ।

त्रान् यथामत्यध्यापयामि, कांश्चिदपरिचिताभिषगन्तरान् रोगिण उल्लाघीकर्तुं महतः शास्त्रसंभारस्य पृष्ठमेक-माश्रित्य यते । न मया गणनाथेनेव गणिनाः शिराः, न योगीन्द्रनाथेनेव योजितं ग्रन्थजातम्, न च कीर्तिकरेणेव संचिता वनस्पतिचयपरिचयकीर्तिः । विशेषतश्च जिह्नेमि प्रातःस्मरणीयानां गुरुचरणानां लीलाभूमावत्र प्रधानतां धाष्ट्र्येन नाटयितुम् । परं तत्र भवतां भवतां निदेशैकपरवशः स्वस्खलनसहस्रशङ्कान्दोलितमानसोऽपि स्वीकरोम्यनर्होऽपि यद्भवद्भिरुचितमिति यथारुचि विहितम् । आशासे च दोषमर्षणं मुहुर्मुहुर्दयालुभ्यः" ।

अथ सांप्रतिकदशावर्णनेऽत्रापि विलोक्या लेखप्रौढिः—

"सोऽयमेतादृशीमुन्नतेः परां काष्ठामारूढो, दिव्यदर्शनैरमितज्ञानविज्ञानैरानृशंस्यपरैः पूर्वैः पूर्वतरैर्महर्षिभिर्लोकानुजिघृक्षुभिः स्वीकृत्य महान्तमायासं यतमानैरुल्लासितः, अस्माकं दुर्दैवदोषात् प्रज्ञापराधाद्वा कालवशाद्वा राजनुग्रहाश्रयसापत्नभावाद्वा क्रमेण क्षीयमाणनवनवाविष्कारधातुर्विकलाङ्गः प्रायः सर्वाङ्गबाधाबहुलो जराजीर्ण इव निष्प्रभः, केवलं स्वीयेन स्वाभाविकबलेनावष्टभ्यमानः कालजयुक्तिकृतबलोपबृंहणप्रत्याशः रक्षाभारनियुक्तानामलसवराणां शारीरज्ञानविरहादचक्षुषामिव चिकित्सापथे भ्राम्यतां पदे पदे स्खलतां चास्माकं सिद्धभेषजकरावलम्बं दयावशोऽधुनापि ददद् 'उपकारप्रधानः स्यादपकारपरेऽप्यराविति' सदाचारं स्मारयन्, विपदि प्रत्युपकाराशया कृतज्ञतायै आश्रयमददतामस्माकमुद्योगं प्रतीक्षमाणः, क्षणं क्षणं गणयति क्षमाक्षेमाभिलाषी आयुर्वेदपुरुषो नाम ।

अष्टाङ्गस्याप्यस्यैकमप्यङ्गमनालोचयद्भिः स्वीयं नियोगभारमगणयद्भिरस्माभिरज्ञानदुरन्धकारेऽमुं प्रक्षिपद्भिर्निष्कलङ्केऽस्मिन् पूर्णज्ञानराशौ अपूर्णोऽयमकिञ्चित्करोऽयमित्यादिकलङ्कराशेरारोपकारणतामाश्रयद्भिः किं न बहु प्रत्युपकृतम् ।

सप्तभिरस्याङ्गैरज्ञानान्धकारेऽधुना विलीनम्, केवलमेकमेव कायचिकित्साख्यमङ्गं बहुषु तदुपाङ्गेष्वपि स्वकर्मायोगजातजाड्येषु अनन्यसाधारणं कर्मातिशयं प्रदर्शयत् स्वस्य सर्वाङ्गोपाङ्गपूर्णस्यानुमापयति प्रभावातिशयम् ।

एवं चास्याङ्गप्रत्यङ्गानां तिरोभावरूपो महता कालेन परिवर्धमानोऽयमज्ञानान्धकारमलीमसं वैद्यानां मानसमाश्रयं कुर्वन् कर्त्तव्यज्ञानविज्ञानं प्रणाशयन् शारीरज्ञानमपि मुष्णन् मोहमयस्तामसो व्याधिराक्रामति स्म भारतीयवैद्यान् स्वव्याधिनिग्रहे क्षीणविक्रमान् क्रमेण ।

सोऽयं व्याधिः सप्तविधेषु व्याधिषु कालजो नाम—यो हि कालव्यापादतो जायतेऽपरिरक्षणतश्च । तत्र कालव्यापादो भारतेतिहासविज्ञतमैः सर्वैरेव नापरिचितः पूर्वैस्सभापतिभिः स्पष्टमुपपादितश्च । अपरिरक्षणं चास्माभिरनुष्ठितमनुभूयत एव प्रतिपदम् । न प्राचीनानां कुत्रापि संहितानां दर्शनम्, न च शस्त्रयन्त्राणां

प्रतिकृतयो लभ्यन्ते, न च भेषजानां नामरूपगुणानां युक्तेश्च परिचयो वैद्यानां कांश्चिन् महापुरुषान् विहाय । कुत्रान्तर्भूतः स विस्मयावहो धातुवादो रसायनशास्त्रे डिण्डिमघोषं घोष्यमाणः । क्व तिरोभूता रसशास्त्रेषु निपुणं वर्णिताश्चारणजारणसारणक्रामणप्रभृतिसंस्कारप्रक्रियाः । क्व सा मूर्च्छना या 'अव्यभिचरितव्याधिघातकत्वं मूर्च्छना' इति लक्षणेन लक्षिता । क्व तन्मूर्तिबद्धत्वं पारदस्य, यद्धि 'बद्धः साक्षात्-सदाशिव' इति स्तूयते, 'स्वाभाविकद्रवत्वे सति वह्निना अनुच्छिद्यमानत्व'मिति लक्षणेन च लक्ष्यते । क्व सा खेचरी गुटिका । क्व तदरिष्टविज्ञानं यत्प्रभावात्पूर्वतनैर्वैद्यैः संवत्सरान्मासषट्कात्पूर्वमेवायुःक्षयपरिमाणं विज्ञायते स्म, एवमादीनि बहूनि कर्माणि पूर्वेषां यानि रक्षणार्थमस्मासु न्यासीकृतानि लेखशेषतां नीतानि तानि चान्यैरद्यतनैस्तादृशीमुन्नतिमनारूढैर्विज्ञानिभिरसत्यान्येतानीत्युपहस्यन्ते । एतेषां नामशेषतानयने वैदेशिककृतास्मत्पूर्वपुरुषोपहासे च वयमेव कारणमेतद्रक्षायां प्रमादवन्तः, न त्वन्यत् किञ्चिद्देवादिकम् । तथा च मुनिः--

प्रज्ञपराधात् सम्भूते व्याधौ कर्मज आत्मनः ।
नाभिशंसेद् बुधो देवान्न पितॄन्नापि राक्षसान् । इत्यादि

अथ दोषत्रयस्यावैज्ञानिकत्वं पाश्चात्यचिकित्सकैरुद्घुष्टं खण्डयितुं यदुक्तमिह, तद्विज्ञानप्रौढिपरिचयाय किञ्चिदुदाह्रियते--

"अत्रेत्थमपरे प्रत्यवतिष्ठन्ते--यद् हृदययकृत्प्लीहान्त्ररक्तादिषु शारीरभावेषु यद् वैकृत्यमुपजायते तद् बाह्यान्निदानादेव । एतेष्वेव च भावेषु संचलनादिक्रिया पृथक् पृथग् विभज्यमाना प्रत्यक्षतो वानुमेया वा दृश्यते, न हि या हृदयस्य क्रिया सैव यकृतः, अन्त्रस्य वा, तयोर्वा तस्य, सिराधमनीनां या रक्तसञ्चरणादिक्रिया न सामाशयस्येति सर्वेषामेव पृथक् पृथक् सिद्धौ व्याधीनां च तथैव पृथक् पृथग्व्यवस्थितौ वास्तवीं शारीरस्थितिमपरिच्छिद्यैवासत्कल्पनामूलकोऽयं वातपित्तकफप्रपञ्चः । कृतमन्तर्गडुनामुना ।"

तत्रेदं प्रतिविधानम्--रक्तार्शःप्रदररक्तपित्तसिराव्यधव्रणादिषु रक्ते, कासश्वासक्षययक्ष्मादिषु च कफे, स्तन्यरोगेषु स्तन्ये, मेहादिषु मूत्रे, ज्वरातीसारपाण्डूदरादिविविधरोगपरिगृहीतेषु नानारोगिषु विण्मूत्रत्वङ्नखनेत्रादिषु वैवर्ण्यरौक्ष्यकार्कश्यविविधवर्णत्वपाककोथक्लेदोपलेपादयो नानाविधा विकृतयो दृश्यन्ते । तत्त्वतो विविच्यमानास्तास्त्रिविधा एव सम्पद्यन्ते---आग्नेय्यः, सौम्या, वायवीयाश्च । तत्र निखिलेष्वपि शारीरभावेषु रौक्ष्यलाघवशैत्यखरत्वसौक्ष्म्यसञ्चलनादयः स्रंसव्यासादयो या विकृतयस्ता वायवीयाः, यास्तु औष्ण्यतैक्ष्ण्यविस्रतासरत्वशुक्लारुणवर्ज्यवर्णता कटुकाम्लरसतादयो दाहकोथादयस्ता आग्नेय्यः, याश्च स्निग्धत्वगौरत्वमाधुर्य्यमात्स्न्यादयः श्वैत्यशैत्यकण्डूस्थैर्य्यगौरवस्तम्भसुप्तिक्लेदोपदेहचिरकारित्वादयस्ताः सौम्याः । एवं ताः सर्वा विविधा विकृतयोऽन्याश्चानुक्ताः स्वयमूह्यमाना अपि एतास्वेवान्तर्भवन्ति त्रिविधासु । यतश्च लोके रौक्ष्यादयो गुणा स्रंसव्यासादयश्च क्रिया वायौ, औष्ण्यादयो दाहादयश्च वह्नौ, स्निग्धत्वादयश्च जलेऽनुभूयन्ते । अतः शरीरेऽपि रौक्ष्यादयो वातस्य, औष्ण्यादयः पित्तस्य, स्निग्धत्वादयश्च श्लेष्मण एव निर्धार्य्यन्ते । तत्रापि शरीरे पृथिवीजलपरिणामः श्लेष्मा, आकाशवाय्वोर्वातः, तेजसः पित्तम् । तथा च

तत्समानगुणबहुलैर्द्रव्यगुणकर्मभिरेता उत्पद्यन्ते विवर्द्धन्ते च; तद्विपरीतगुणैश्च शाम्यन्ति । अर्थात् वातपित्तकफप्रत्यनीकैरेव औषधान्नविहारैः सर्वा अपि विकृतयः प्रायो निवर्त्तन्ते । अतोऽप्यनुमीयते सर्वासामासां विकृतीनां कारणं वातपित्तकफा एव । आप्तोपदेशाच्च निश्चिनुमः—यद्वातपित्तकफानामेवैताः क्रियाः । तथा च चरके—'नास्ति रोगी विना दोषैः' इति ।

वृद्धवाग्भटेऽपि—'सर्व एव विकारा नान्यत्र वातपित्तकफेभ्यो निर्वर्त्तन्ते' इति, 'दोषा एव हि सर्वरोगैककारणम्' इति । 'यथा च विद्युद्वर्षादयो नभसि भवन्ति, न त्ववश्यम्, निमित्ततस्त्ववश्यं भवन्ति, तरङ्गबुद्बुदादयश्चाम्भसस्तथा दोषेषु रोगाः ।' इति च ।

न च केवलं निजेष्वेव दोषसम्बन्धः, आगन्तुष्वपि दोषसम्बन्धेनैव रुगनुबन्धदर्शनात् । तथा च वृद्धवाग्भटः—

'निजेषु पूर्वं वातादयो वैषम्यमापद्यन्ते, ततो व्यथाभिनिर्वर्त्तते; बाह्यहेतुजाश्चागन्तवस्तेषु व्यथा पूर्वमुपजायते ततो दोषवैषम्यम्, दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते प्रवर्द्धते च; एवं च कृत्वा न च दोषव्यतिरेकेण रोगानुबन्धः, केवलं पौर्वापर्ये विशेषः ।' इति

तथा च सर्वासां विकृतीनां प्रत्यक्षानुमानागमैर्वातपित्तकफा एव मूलं सिद्ध्यन्ति । अमुमेवार्थमुररीकृत्य भगवानुपदिशति धन्वन्तरिः—

'सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्चेति' । सु० सू० २४ अ०

यच्चोक्तं प्रत्यक्षेण ( यन्त्रसाहाय्येन ) अनुमानतो वा हृदादिष्वेव वैकल्यं सञ्चलनादिक्रिया च पृथक्पृथग्विभज्यमाना दृश्यते, तेष्वेव च चिकित्सयाऽन्यथापादनेन स्वास्थ्यमुपलभ्यते नातो वाताद्यपेक्षा लेशतोऽपीति । तत्रोच्यते—हृदादियन्त्रेषु यत्किमपि संस्फुरणादि दृश्यते, नैतत्तेषाम् । तानि हि स्थानानि, न हि स्थाने जायमाना क्रिया स्थानस्य किन्तु तदधिष्ठातुः । तथा हि—या कस्मिन्नपि शारीरयन्त्रे क्रिया जायते, सा तद्यन्त्रस्य वा तत्स्रोतःपरिवाहिनो रसरक्तादिधात्वन्तरस्य वा तदधिष्ठातुर्वातपित्तकफान्यतमस्य वेति मीमांसायाम्—न तावत्तद्यन्त्रस्य, प्रायस्तत्क्रियाया अन्यत्रापि दर्शनात् । न वा धात्वन्यतमस्य तत्क्रियाणां प्रीणनं जीवनमित्यादिना परिगणितत्वात् । तथा च पारिशेष्यात्तदधिष्ठातुर्वातपित्तकफान्यतमस्यैव । न हि वाष्पयन्त्रपरिचालितयन्त्रक्रिया तस्य, प्रत्युत तत्परिस्पन्दनाधायकवाष्पस्यैवेति को नाम न स्वीकर्त्तुमुत्सहते । क्वचिच्च तद्यन्त्रस्य तद्वर्त्तिधातोर्वा क्रियापि गुणान्तरद्योतनाय वातादीनामेव निर्दिष्टा, शीतत्वपावनत्वद्योतनाय 'गङ्गायां घोष' इत्यत्र तटेऽपि गङ्गाप्रयोगवत् । अत एव शरीरे हृदादियन्त्राणां क्रिया पृथङ् न निर्दिष्टा, प्राणादिवायुसाधकादिपित्तावलम्बकादिश्लेष्मक्रियाकथनेनैव गतार्थत्वात् । तेषामपि यन्त्रविशेषेषु

क्रियावैशिष्ट्यं तु जिज्ञासुभिर्विवेचनीयम् । अत एव स्वोपार्जितकर्मफलातङ्कानलदह्यमानमानसान् मानुषान् उद्दिधीर्षवः समाधिमात्रसहायाः कारुण्यरसपरिप्लुतमानसाः तपःप्रभावाधिगतदिव्यचक्षुरवधारिताशेषजगत्सारासारविशेषाः प्रत्यक्षमिव परोक्षमप्यधिगन्तुमीशास्तत्रभवन्तो महर्षयः——'आतुराणामवस्थान्तरेषु स्थानविशेषेषु च बहुविधा भवन्ति विकृतयो न ता विशेषेण परिच्छेत्तुं शक्यन्ते, तासामेकैकस्या अपि वयोबलदेशकालादिविशेषै रूपान्तरत्वेनासंख्येयत्वात्' इति सम्यगालोच्य सर्वेऽपि रुग्विशेषा एष्वेवान्तर्भवन्ति इति च सम्यगनुभूय वातपित्तकफत्रैविध्येन सञ्चिक्षिपुः, तत्तद्विशेषान् परिज्ञातुं च मार्गं दर्शयामासुः ।" इत्यादि ।

अग्रेऽपि वैज्ञानिकत्वसाधनाय विवृतम्—

तदेवं रोगाणां हेतूनामौषधानां च सर्वेषामुक्तप्रकारेण वातादिसम्बद्धत्वाद्वातादीनां च भूतेभ्योऽनतिरिक्तत्वात् तत्त्वतो विवेके स्थूलस्यास्य प्रपञ्चस्य भौतिकत्वमेव । यदुक्तं सुश्रुते—

'भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते' इति । तत्र शरीरं रोगाधिष्ठानं पञ्चभूतमयं तत्रस्थं वातादिधातुत्रयं तत्तन्त्रकं साम्यभावेन वर्त्तमानं वैषम्यभावेन च वर्त्तमानं तद्दूषकं वातादिदोषत्रयं सर्व्वरोगोद्भवबीजभूतं पाञ्चभौतिकमेव । तदुद्भवत्वात्तन्मयत्वाच्च सर्व्वे रोगा अपि भूतमयाः । तेषां निदानानि कोपनानि औषधानि शमनानि च भूतमयान्येव । यदुक्तं सुश्रुते द्रव्यविशेषविज्ञानीये—

'गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा ।
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः ।' इति

एतेनैतदुक्तं भवति——यावद्भिस्तत्त्वैः शरीरमुत्पद्यते वर्द्धते वर्त्तते च, तावन्त्येव तत्त्वानि तदुत्पादकवर्द्धकेषु बाह्येष्वपि द्रव्येषु सन्त्येव, अन्यथोत्पत्तिवृद्ध्यसम्भवात् । तस्मात् सर्वाणि द्रव्याणि पञ्चविधानि भवन्ति । पञ्चभूतात्मकत्वेऽपि सर्वेषां तत्तद्भूतगुणाधिक्येन तद्व्यपदेशात् । तथा च द्रव्यविशेषविज्ञानीये सुश्रुते—तत्र 'स्थूलसारसान्द्रे'त्यारभ्या'धोगतिस्वभाव'मित्यन्तेन पार्थिवमित्येवं पञ्चविधमपि प्रदर्श्यान्ते प्रोक्तम्—'अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद् द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्य्ययुक्तानि द्रव्याणि कर्मकराणि भवन्ति' इति ।

युक्तिसमीक्षैव च द्रव्याणां कार्य्यकर्तृत्वावधारणे प्रधानं कारणम् । युक्तिश्च संयोज्यमानानां बहूनां कारणानां संयोगविशेषादुत्पद्यमानकार्य्यविशेषज्ञानम् । यथा बहुविधेषु पार्थिवद्रव्येषु एकस्मिन् यन्मानेनोत्कर्षापकर्षभावतो वर्त्तमानानां यादृग्वर्णरसस्पर्शगन्धादीनां पञ्चानामपि कारणभूतानां यादृशेन प्रकृतिसमसमवायेन विकृतिविषमसमवायेन वा मिश्रणेन लोलनेन पाकेन परिणामेन वा यादृग्गन्धवर्णरसस्पर्शादयो जायन्ते कार्य्यद्रव्ये तत्सर्वं ज्ञानं युक्तिशब्दवाच्यम् ( साइन्स ) । युक्तिश्चायुर्वेदे प्रत्यक्षानुमानवत्प्रमाणम् । तथा च तिस्रैषणीये भगवान् पुनर्व्वसुः—

'बुद्धिः पश्यति या भावान् बहुकारणयोगजान् ।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया ।' इत्यादि

तस्माद् युक्त्या युक्तिज्ञाने समादरो विधेयः सप्रयत्नातिशयम् ।

प्राचीनेषु चरकसुश्रुतादिषु रसचिकित्सा न विस्तरेण लभ्यते, पश्चात्तु सातिविस्तरं गता कस्तत्र हेतुरिति विचारे मननीया स्वामिमहाभागानामद्भुता विवेचना—

"पुराकाले भेषजतन्त्रविदां समवाये जाङ्गमौद्भिदपार्थिवान्येव तत्तेषां व्याधीनामुपशमाय प्रायशः परिगृहीतान्यासन् । आसीत्तस्मिन् समयेऽस्माकं जन्मदात्र्या एतस्या रत्नगर्भायाः सृष्टिनियमेन तादृशी दशा यदेतस्यामुत्पन्नाः काष्ठौषधयो महाशक्तिसम्पन्ना आसन् । ततश्च बहुतराणां व्याधीनां प्रतीकारः पूर्वमुक्तैस्त्रिविधैरौषधैरेव संसिद्धोऽभूत् । परं विकासवादस्य सिद्धान्तानुसारं पृथिव्याः शक्तिर्न सर्वदा एकाकारैव तिष्ठति । शान्ताया इव सुस्थिराया इव क्रियाशून्याया इव जनैः प्रतीयमानाया एतस्याः पृथिव्याः स्तरेषु अहर्निशं जायन्ते महान्ति महान्ति परिवर्त्तनानि । एतस्य परिवर्त्तनस्य प्रभावः पृथिव्याः शक्तेरुपरि भूयसांशेन परिपतति नाम । मन्ये सोऽयं विषयो नाधिकं विस्तरमपेक्षते । विदितमेतत्सर्वं पार्थिवविज्ञानविदां सर्व्वेषामपि सभ्यमहोदयानाम् । अस्तु—प्रकृते परिणामनियमो भूमिशक्तेरुपरि प्रभुर्बभूव । पूर्वं सर्वतः प्रसरणशीलः पार्थिवो रसः समाकुञ्चननियमानुसारं कुहचित् कुहचिद् भूमिगर्भे संघातरूपमभजत । एवञ्च भूमेरुपरितनानां स्तराणां शक्तिर्न यथापूर्वमभवत् । अत एव भूमिपृष्ठे ( न भूमिगर्भे ) प्ररोहणशीलानां काष्ठौषधीनां तत्समशीलानामन्यासां चौषधीनां शक्तिर्न्यूनतामभजत् । सैषा न्यूनता बौद्धसभ्यतायाः समये तत्सामयिकानां सिद्धभिषजां परं विचारस्थानमासीत् । अतएव बौद्धानां मान्यतमः श्रीनागार्जुनः यशोधनव्याडिप्रभृतयश्चान्ये बहवः सिद्धाचार्य्या रसशास्त्रप्रचारं चक्रुः । यथा च तत्कालीनैर्विवेकिभिर्नियम्यान्तरात्मानमध्यात्मप्रवणाभिश्चेतोवृत्तिभिः साक्षात्कृत्य नवनवानि दार्शनिकतत्त्वान्याविश्चक्रिरे । सर्वोपनिषत्प्रतिपादितान् लोकमान्यानलौकिकान् वेदान्तसिद्धान्तान् पुनराविष्कुर्वता भगवता श्रीशङ्कराचार्य्येणाध्यात्मतन्त्रसारे नवीन इव युगः समारेभे च । तथैव च तत्कालीनैस्तन्त्रसिद्धान्तानुयायिभिः सिद्धैरपि भूमौ निगूढानि नवनवानि तत्त्वानि रसोपरसात्मकानि आविष्कुर्वद्भिर्वैद्यकसंसारेऽपि नवीन एव युगः प्रादुर्भावयामासे । तत्प्रभावादायुर्वेदीयानां सिद्धान्तानां परिवृत्तिसहानां चिकित्साप्रक्रियायाश्च भेषजसाधनविधानयोरपि परिवृत्तिः संजातैव कालानुसारं न मूलसिद्धान्तानाम् । एवमेवाद्यापि नवयुगारम्भे मूलसिद्धान्ताविरोधमनुरुध्य नवीनान्याविष्कृततत्त्वानि आत्मीयरूपे विपरिणमय्य स्वीक्रियन्तां वैद्यैः ।

अथ तपति महीमण्डले बौद्धभूभुजां प्रतापमार्त्तण्डे नागार्जुनयशोधनव्याडिप्रभृतयः सिद्धाः काष्ठौषधीनां क्रमेण हीनगुणवत्त्वात् ऋषभकादीनां दुर्लभप्रायत्वात् मिलितानामपि कटुतिक्तबहुलतया अधिकमात्रतया च सुखसङ्गिनामरुचिकरत्वात् कालविलम्बेन वर्षादिक्लेदादिना गतरसतया कार्य्यासाधकत्वात्

असामञ्जस्यमवालोक्य सूक्ष्मविवेचनया निखिलातङ्कनिबर्हिणीं सकलपुरुषार्थप्रदायिनीं बाल्यतारुण्यवार्द्धक्यानुकूलां नैकवर्षातिक्रमेऽपि अपरिणामिनीं सर्वयोगवाहिनीमल्पमात्रतया क्षीरपायिनामपि सुखप्रयोगामेकत्र वस्तुनि शक्तिं चिरमन्वेषयन्तो निखिलदुःखार्णवपारदे पारदे तां निरधारयन् । एवं हि ते पारदं स्तुवन्ति—

'अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥

मूर्च्छितो जयति व्याधीन् मृतो जीवयति स्वयम् ।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥

सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् ।
तदपि च शमयति यस्मात् कोऽन्यस्तस्मात् पवित्रतरः ॥

रसबन्धश्च स धन्यः प्रारम्भे यस्य सततमिव करुणा ।
सिद्धे रसे करिष्ये महीमहं निर्जरामरणाम् ॥' इति

एतद्बलेनैव प्राच्याचार्य्यव्यवस्थापितं व्याधीनामसाध्यत्वमपि नाङ्गीकुर्वन्ति । तथा च तेषां वचनम्—

'साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिभिः ।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ॥' इति

किम्बहुना पारदोपसेवनयैव ते मुक्तिमपि कुटीरपरिसरचारिणीं मन्यन्ते । यथाहुर्जगद्गुरुश्रीशङ्कराचार्य्याणां गुरवः श्रीगोविन्दाचार्य्यपादाः—

'तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् ।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥" इत्यादि

अन्येऽपि रसचिकित्सैवं स्तूयते--

"सैषा रसचिकित्सा दुर्द्धर्षानपि व्याधिविशेषान् नर्महसितकेन प्रसह्य समुन्मूलयन्ती विपक्षानपि डाक्तरहकीमादीन् स्वगुणैरावर्जयन्ती भारतीयसकलौषधालयभित्तिमञ्जूषा ( अलमारी )मलंकुर्वाणा सांप्रतमपि विजयते। सर्वथाऽयं रसचिकित्साया एव महिमा स्तुत्यः—यद्विविधशास्त्रकर्मनिपुणमतिभिर्नैकयन्त्रसाहाय्यप्रत्यक्षीकृतशारीरसूक्ष्मावयवप्रदेशैरपि डाक्तरहकीमैः प्रत्याख्यातान् रोगिणः सुखं नयन्त्यरोगतां वैद्या इति।

अपि च यावन्तः प्रख्यातकीर्त्तयो यावनवैद्याः मृगाङ्कानन्दभैरवादीन्येव रोगिणो विषमदशायामाश्रयन्ति दक्षतराश्च मकरध्वजादीनीति दृष्टचरमेवेति ।

एतस्याः पुराकालिकीं समुन्नतिं वर्त्तमानकालिकीमवनतिञ्च विचारयन् को नाम प्रेक्षावान् शोकानुतप्त-हृदयो नोष्णं निःश्वसिति ।

अल्पावशिष्टेष्वपि काष्ठौषधिप्रधानेषु संहिताग्रन्थेषु तेषां सिद्धान्ताः प्रायो हृदयङ्गमा दृश्यन्ते भिषजाम् । रसतन्त्रेषु तु बहुषूपलभ्यमानेष्वपि न तथा, कुत एतदिति मीमांसायामेवं नो निर्द्धारणा—संहिता-कर्त्तारो हि बभूवुः ऋषयस्ते च त्रिविधशिष्यबुद्धिगम्याभिर्वाग्भिरुपदिदिशुः । रसकर्माविष्कर्त्तारश्च प्रायस्ता-न्त्रिकाः सिद्धाः, एते हि निजाविष्कारं स्वावबोधार्थं साङ्केतिकशब्दैरुल्लिख्य 'गोपनीयं प्रयत्नत' इति दृढप्रत्यया विश्वासभूमिषु निजदीक्षादीक्षितेषु स्वशिष्येष्वेव कथञ्चित् प्रचारयामासुः । इत्येवं क्रमेण कालवैषम्येण वा अधिकारिविरहेण वा रोगिलोकस्यापुण्यपरिणामेन वा अस्माकमधन्यतया वायं नागार्जुनादिसिद्धविचारार्णवगृही-तजन्मा रसकर्मकलानिधिरिदानीं कलामात्र एवावशिष्ट इति । अस्य च पुनरुदयाय विधेयः समुद्यम इति।"

कतिपयान्येतानि निदर्शनानि । सप्ततिपृष्ठात्मकं सर्वमेव व्याख्यानमिदं मननार्हमित्यवोचाम । सर्वा एव जलो-पवासाचिकित्साद्या इदानीं प्रसूता आयुर्वेदस्यैवैकदेशभूता इतीह सम्यक् प्रतिपादितम् । इदानीं वैद्यानां तत्संमेलनस्य वा किं कर्तव्यमित्यपि चातुर्येण सम्यग्विवृतम् ।

१९८० विक्रमाब्दे मद्रासप्रान्तीयशासकसमित्या आयुर्वेदसंबन्धे सम्मतिं प्रदातुमुपसमितिरेका (कमीशन) प्रक्लृप्ता । सा च स्वामिमहाभागानां साक्ष्यमादातुं जयपुरेऽप्यायाता । तत्सविधे साक्ष्यरूपेण यद्विलिख्य दत्तं स्वामिमहोदयैः, तदप्यायुर्वेदप्रणयिनामतिशयेन मननार्हम् । तत्रापि आयुर्वेदपद्धतेर्वैज्ञानिकत्वं बहुधा युक्तिभिरुपपादितम् । इदानीं राज्ञः प्रजानां चायुर्वेदसंबन्धे कर्तव्यान्यपि बहु विवृतानि । एतदपि मुद्रितम्—अस्यापि किञ्चिन्निदर्शनमिहोपस्थापयामि । आदावायुर्वेदमह-त्वख्यापनम्, अग्रे च तस्य वैज्ञानिकत्वप्रदर्शनमिति प्रकरणद्वयस्यैव कञ्चिदंशं संगृह्णामि, नाधिकम्, विस्तरभयात् ।

"( १ )—मम संमतावायुर्वेदीयचिकित्सापद्धतेर्वास्तविकतानिर्णयाय नियुक्तायामस्यां समितौ कश्चन विद्वान् वैद्योऽपि चेन्नियुक्तोऽभविष्यत्तर्हि समुचितमभविष्यत् । अस्ति चाधिकतरं ममाशा यदवश्यं कश्चन वैद्यविद्वान् अत्र भवेद् विनियुक्तः । नाधुना समितौ संमिलितो भवेच्चेत्साक्षिणां भाषानिर्णयसमयेऽवश्यमेकः सुप्रतिष्ठितोऽनुभवी वैद्यविद्वान्निमन्त्रणीयो यः खलु समये आयुर्वेदविषयस्य विवरणं पक्षपोषणं च कुर्यात् ।

( २ )—पूर्वस्मिन्युगे कीदृशमभवत् स्वरूपमायुर्वेदस्य । यत्र हि आयुर्वेदीयचिकित्साया आधारे-णैव तात्कालिकं जगज्जीवति स्म । नासीत् कश्चनान्य उपायः । अत एव तस्मिन् समयेऽस्या उन्नतयेऽभि-वृद्धये, उपयोगितायै च महान्त उद्योगाः, समुचिता आश्रयाः, प्रकाण्डाश्च प्रयत्ना अवलम्ब्यन्ते स्म । एतस्यैव कारणमस्ति यदनेन शास्त्रेण सुमहद् गौरवं विशदञ्च स्वरूपमवाप्तमस्ति ।

( ३ )—आयुर्वेदशास्त्रं हि दिव्यदर्शनसपन्नानां महर्षीणां वैद्यमहाभागानाञ्च परःसहस्रव-र्षाणामनुभवस्य, प्रयोगस्य, उद्योगस्य नैसर्गिकजीवदयायाः, स्वाभाविकभूतसहानुभूतेश्च फलमस्ति । अनेक-

कालपरिसाध्यानां परीक्षितानामौषधानां, योगानाञ्च येयमव्यभिचरिता व्यवस्थावलोक्यते, एतस्यापीदमेव कारणं यदेते अनन्तकालादनन्तशरीरेषु रोगादीनुपशमय्य सिद्धाः सन्तो लोकेषु प्रसिद्धा अभवन् । भूतदयापराः प्राचीनमहर्षयो वैद्याश्च स्वार्थवशेन नेमान्यौषधानि नैतान्योगांश्च प्रायुञ्जत, किन्तु निस्पृहाः स्वार्थत्यागिनश्च ते भूतानुकम्पापरवशाः सन्तः संसारकल्याणायैव तानिमान्प्रायुञ्जत ।

( ४ )–किञ्चायुर्वेदे य इमे व्यापकसिद्धान्ताः स्थिरीकृताः सन्ति तेऽपि सुस्पष्टमिदं साधयन्ति यदेतेऽवधानपूर्वकं चिरकालायातप्रयोगानुभवद्वारैव स्थिरीभूताः सन्ति । य एतावत्कालं नवीनसंस्कारं विनैव यथायथं कार्येषु परिणमिता अद्याप्यव्यभिचरितं प्रदर्शयन्ति फलम् । एवंविधानां व्यापकसिद्धान्तानां स्थिरीकरणं न साधारणपरिज्ञानस्य कार्यं भवितुमर्हति। तेषामेव सिद्धान्तानां मूलभूतः सिद्धान्तः सेयं त्रिदोषपद्धतिर्नाम । या किल शरीरे संरक्षिणी शक्तिः, विघातिनी शक्तिश्चोरीक्रियते, सा हि वस्तुतोऽस्माकं सिद्धान्तानुसारं वातपित्तकफानां प्राकृती वैकृती च गतिरूपावस्थास्ति । वातपित्तकफाश्चापि शरीरे सूक्ष्मस्थूलरूपेण द्विविधा अभ्युपेयन्ते । तेषु सूक्ष्मा वातादयः केवलं कार्यानुमेया एव । स्थूलवातादयस्तु अनेकरूपेषु अनेककार्याणि कुर्वन्तो विलोक्यन्ते । अत एव शरीरस्य स्वस्थदशायां रुग्णदशायां वा प्राकृतवैकृतभेदेन धातादीनां सम्बन्ध एव निश्चीयते । यदाश्रयेणायुर्वेदस्य जीवनसर्वस्वं महत्त्वं चावतिष्ठते। एवंविधानां गम्भीराणामपरिवर्तनशीलानां सङ्ग्रहेण साधारणबुद्धिमतां कार्यनिर्वाहाय, विशेषज्ञानां सूक्ष्मतमज्ञानस्य दिक्प्रदर्शनाय चोपयोगं प्रददसौ सर्वविधमनुष्याणां लाभप्राप्तेरनुपमसाधनसम्पन्नोस्ति ।

( ५ )–आयुर्वेदवर्णितरोगाणां निदानं लक्षणम्, औषधञ्चेति त्रिपुटी सम्पूर्णपदार्थतत्त्वानां सामान्यज्ञानस्य विपर्ययज्ञानस्य चायत्तास्ति । सामान्यविपर्ययज्ञानं च प्रत्यक्षम्, युक्तिसहकृतं तर्कं वा विना दुःसम्भवम्, यावत्पर्यन्तं रोगाणां बाह्यकारणेषु, आभ्यन्तरकारणेषु च सामान्यभावो विपर्ययभावो वा न सम्पद्यते तावत्पर्यन्तं तद्द्वाराभ्यन्तरपदार्थानां वृद्धिक्षयरूपं परिवर्तनं न सम्भवति । अत एव रोगस्वरूपावबोधाय सामान्यज्ञानस्य, एवमौषधव्यवस्थापनाय च विपर्यज्ञानस्यावश्यकतास्ति । एवमेव स्थूलात् स्थूलानि सूक्ष्मात् सूक्ष्माणि च सम्पूर्णानि रोगकारणानि सामान्यज्ञानद्वारा रोगस्वरूपनिर्धारणे साहाय्यभूतानि भवन्ति । किञ्च स्वास्थ्यरक्षणायाभ्यन्तरिकावश्यकतापूर्तये सामान्यज्ञानस्य, तथा अनावश्यकानां विनाशकानां च पदार्थानां परित्यागाय च विपर्ययज्ञानस्य च प्रातिक्षणमावश्यकता प्रतीयते । केवलमौषधानां प्रभावज्ञानायैव तयोर्विशेषेण नोपयोगः । एवंविधस्थलेषु विशिष्टानुभवानामाप्तपुरुषाणामनुभवोपदेश एव प्रमाणमभ्युपेयते। यतो हि पदार्थानां सम्पूर्णशक्तेः परिज्ञानं सर्वज्ञस्येश्वरस्यैव सम्भवति नान्यस्य, एतदाधुनिकविज्ञानेनापि सिद्ध्यति ।

( ६ )–आयुर्वेदशास्त्रेण अन्येषामङ्गानां ह्रासोन्मुखत्वेऽपि कायाचिकित्सारूपस्यात्मन एकस्याङ्गस्य परिपुष्टौ विरलविरलाया अपर्याप्ताया अपि सहायताया लाभेन कियताञ्चन सङ्ग्रहग्रन्थानां निर्माणेन

च पूर्वमाधिकमुन्नतेः स्वरूपमुपलब्धमासीत् । येनास्य कायचिकित्सारूपस्याङ्गस्य चिकित्सापद्धतिः, चिकित्सा-सूत्राणि, चिकित्सायाः प्रकाराः, तस्याः साधनानि, शरीरेण सह सम्बन्धार्थमनन्ताः कल्पनाः, भेषजद्र-व्याणि, इत्याद्यनन्तानामाकरयिता सम्पन्नास्ति । इयं साधनसम्पत्तिरेवानेकविधानां विघ्नबाधानामुत्तरोत्तर-मवपतनेऽपि, अनेकविधानामाक्रमणानां सहनेऽपि, साम्प्रतमायुर्वेदस्य जीवनं स्थिरीकर्तुं प्रभुरभवत् ।

( ७ )-एतस्या वर्तमानोऽयं भग्नावशेषो बहुतरं छिन्नभिन्नावस्थायां वर्तते सर्वथाप्याश्रयाभावेन शिक्षायाश्चाप्रबन्धेन प्रतिदिनमुत्तरोत्तरमवनमतीव । एवं स्थितौ पूर्वोक्तैः कारणैर्वयमायुर्वेदस्य सम्पूर्ण-सिद्धान्तानां विशेषतत्त्वानाञ्च पूर्णतया परिचयं न प्राप्तुमशकाम । आयुर्वेदस्य वास्तविकं स्वरूपं न शक्नुमः प्रकाशयितुं तथापि भग्नावस्थामाश्रयद्भिरपि सिद्धान्तैः कृतानां कार्याणामद्भुतां सफलतामवलोक्य वयमनुमातुं शक्नुमो यत् आश्रयस्य शिक्षायाश्च प्रबन्धे सति पूर्वस्वरूपमापन्ना सेयमायुर्वेदीयचिकित्सा कियतीं सफलतामवाप्नुयात्, देशस्य कल्याणसाधने कियन्तञ्चोपयोगं प्राप्नुयादिति ।

( ८ ) पाश्चात्त्यस्यौषधविज्ञानस्य ( Medical seience ) पञ्चाशतो वर्षेभ्यः पूर्वं या स्थितिरासीत्, साम्प्रतञ्च यास्य स्थितिः, उभयोरनयोस्तुलनायां स्पष्टमिदं सिद्ध्यति यदायुर्वेदोक्तानां बहूना-मोषधीनामेतस्मिन्समावेशः सम्पन्नोऽस्ति । सम्भावयामश्चाग्रे, आयुर्वेदस्य बहवः सिद्धान्ताः, प्रक्रियाश्चाऽपि शनैः शनैरनुभवानुसारं पाश्चात्त्यभैषज्यपद्धतेर्ग्राह्या भविष्यन्तीति ।

( ९ ) आधुनिकविज्ञानस्य आङ्ग्लभाषायाश्च न मे परिचय इति केवलमायुर्वेदशास्त्रज्ञान-मात्रेण यथामति यथास्थानञ्च प्रश्नानामुत्तरं संस्कृतभाषायां निबन्धुं प्रयते ।"

"पूर्वमेवोक्तम्—यद् बाह्यं निदानं शरीरेण संबद्धं सत् रोगोत्पादनाय द्विधा व्याप्रियते—यथा किंचित्तु निदानं शरीरसंबन्धानन्तरं संचयप्रकोपादिक्रमेण दोषान् व्यापारयत् शारीरभावानां वृद्धिक्षयमुत्पाद्य पीडाकरं भवतीति । तदिदं निदानं निजत्वेन व्यपदिश्यते तदुत्पादितानां रोगाणामपि निजत्वेनैव व्यवहारः, यत्तु निदानं पूर्वं रोगस्वरूपं पीडाकरमुत्पाद्य पश्चाद्दोषान् संचयादिषु व्यापारयति तदिदमागन्तुनाम्ना प्रोच्यते तदुत्पादितानां रोगाणामपि आगन्तुसंज्ञयैव व्यवहारः कीटाणूनामप्यत्रैवान्तर्भावः । तत्र आगन्तूनां रोगाणां शरीरे प्रादुर्भावो द्विधा दृश्यते-स्वतन्त्रोत्पत्त्या, संक्रमणेन च । तत्र काष्ठलोष्ठाद्यभिघातेन व्रणादयः स्वतन्त्रतयोत्पद्यन्ते । 'संक्रमणम्' संक्रमस्तु एकस्माद् व्याधितात् अन्यस्याऽव्याधितस्य शरीरे औपसर्गिकाणां दूषितानां कुष्ठादीनां च रोगाणाम् । तद्द्वाराणि च । ( द्वाराणि त्वागन्तूनां नखदशनपतनाभिघाताभिषङ्गा-भिचाराभिशापवधबन्धनव्यधनवेष्टनपीडनरज्जुदहनशस्त्राशनिभूतोपसर्गादीनि विज्ञेयानि" चरक. सू. २० अ ) । तथा तत्तद्रोगाक्रान्तपुरुषेण सह मिथुनीभावः, तद्गात्रसस्पर्शादि, तेन सहैकपात्रे, भोजनम्, तदीयनिःश्वासग्रहणम्, तदुच्छिष्टभोजनम्, अविहितामूलशोधनेषु तदीयपात्रेषु भोजनम्, तेन सहैकशय्यायामेकासने वाऽवस्थानम्, तदास्तरणप्रावरणादीनामुपयोगः, तेन धृतानां तत्स्वेदादिबहिर्मलोप-

सृष्टानां वस्त्राणां धारणम्, तदुपयुक्तानामुपकरणानां व्यवहारः, तदुपघ्रातमाल्यपुष्पादिकानामाघ्राणम्, तदन्तर्गतमेव कीटाण्वाद्यपि संक्रमणकारणम् । इत्यादि । तत्संग्रहश्लोकश्च—

प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ।
एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥

जनपदोपध्वंसनाय एकरूपस्य व्याधेराक्रमणम्—यदातु असमानप्रकृतिषु, असमानाहारविहारेषु, असमानशरीरसंस्थानबलादिषु, तथा असमानवयःक्रमेषु, बहुषु प्राणिषु युगपत् एकरूपस्यैव व्याधेराक्रमणं भवति । तत्र वायुर्जलं देशः कालो वेति चत्वारि रोगकारणसंश्लिष्टानि कारणानि भवन्ति । तत्र वायुरस्वाभाविकोऽतिशीतोऽत्युष्णोऽतिचलोऽतिस्तिमितोऽपरुषोऽत्यभिष्यन्दी असात्म्यगन्धः ( गन्धेऽसात्म्यत्वं नाम शरीरे विकृतिकारकत्वं यथा विषोपसृष्टत्वादि ) पूत्यादिगन्धवहुलः ( वायोः पूतिगन्धत्वे तु शारीरमलव्याधितश्लेष्मपुरीषादिसूक्ष्मकणोपसृष्टिरेव कारणम् ) असात्म्यवाष्पप्रचुरोऽसात्म्यधूमोपहत इत्येवमादिरूपो विकृतिकारणम् । अत्र यद्यपि वातसंपृक्ता अनेकविधा अस्वाभाविकाः नानारूपाः सूक्ष्माः पदार्था एव विकृतौ कारणानि, वायुस्तु द्वारभूत एव तथापि विक्षेपशक्तिरूपेण वातेनोपनीयमानाः शरीरसम्बन्धे वातरूपतयैवोपलभ्यमानाः पदार्था वायुरिति कृत्वा वायोः कारणत्वव्यपदेशः ।

जलमपि विकृतगन्धं विकृतवर्ण विकृतरसं विकृतस्पर्शमपक्रान्तशुद्धजलचरजीवमित्यादिरूपं विकृतिकारणम् । अत्रापि जलगतानामनन्तविधानां रोगकारणानां जलरूपेण पीयमानानां जलत्वव्यपदेशः।

देशोऽपि विकृतो यथा ज्ञातव्यस्तथोच्यते—

भूम्यादिरूपस्य देशस्य विकृतेः पूर्वं ये प्राकृता गुणाः वर्णगन्धरसस्पर्शादयो भावाः तेषां विकृतत्वं यथा—वर्णान्तरोत्पत्तिर्गन्धान्तरोत्पत्तिः शीतोष्णादिमृदुकठिनत्वादिविकृतस्पर्शान्तरोत्पत्तिरित्यादि तथा क्लेदबाहुल्यम्, तथा नानाविधमशकशलभमक्षिकामूषिकव्यालादिभिरुपसृष्टत्वम्, तथोपवनेषु तृणोलुपप्रायत्वं प्रतानादिबाहुल्यं अप्राकृतावपतितशुष्कनष्टशस्यत्वमित्यादिरूपा बहुविधा भूम्यादिविकृतिसङ्घाता देशविकृतिरूपेण शास्त्रे निर्दिष्टाः । तथा च सर्वत्र सर्वभावेषु प्रतिक्षणं वैलक्षण्यमापादयन् उद्भिद्जङ्गमादिनिखिल स्थावरजङ्गमादिरूपं पार्थिवादिरूपं च भौतिकद्रव्यसमूहं प्रतिक्षणं परिणमयन् प्राकृतानां वैकृतानां वा सर्वेषां भावानां कालः स्वभावेन कारणम् । इति चरकविमाने—

क्रिम्यादीनां रोगोत्पत्तिकारणत्वे स्वीयसिद्धान्तसंक्षेपः—

यद्यपि प्रतिरोगं भिन्नाकाराः क्रिमयः कारणमिति प्रत्यक्षमुपलभ्यते इत्यतः क्रिमीणामेव कार-

णत्वं स्यादिति विचार्यते, तथापि तत्तदाकारक्रिमिव्यक्तीनां केषुचिदेव कुष्ठादिषु रोगविशेषेषु उत्पादकत्वम्, तदन्यत्र तु संक्रामकत्वमेव, उत्पादकत्वं तु तत्तत्क्रिमिविशेषशरीरारम्भकाणामभिवर्द्धकानां पोषकाणां वायुजलदेशकालानामेव । यतो वायुविशेषो जलविशेषश्च ( आहारत्वेन ) देशविशेषश्च ( विहारत्वेन ) तत्तत्क्रिमीणामारम्भको वर्द्धकः पोषकश्च भवति सामान्यात् । इत्यतस्तदनुकूलवायुजलादय एव कारणानि । ते च तत्त्वतो विविच्यमाना लोके सोमाग्निवायवः, शरीरान्तश्च विविच्यमाना वातपित्तकफाः । यतस्तदानुकूल्यमेव लोके वा शरीरे वा सर्वेषां जङ्गमोद्भिदादीनां तदन्तर्गतानां क्रिमीणामपि उत्पत्त्यभिवृद्ध्योः कारणम्, तत्प्रातिकूल्यं च विघातकारणमिति सर्वत्र वातपित्तकफसम्बन्धो न व्यभिचरतीति सिद्धान्तः । केवलमागन्तुकारणत्वेन पौर्वापर्य्यभेदः ।

लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वातस्य पित्तस्य च कफस्य च ॥
इति चिरचिकित्सिते २८ अध्याये ।" इत्यादि

इदं साक्ष्यव्याख्यानमपि दशप्रश्नानुत्तरयत् त्रिचत्वारिंशत्परिमितेषु पृष्ठेषु समाप्यते । बहव उपयुक्ता विषया इह संगृहीता विवेचिताश्च ।

एवं युक्तप्रान्तीयशासनसमितिनिर्मितोपसमित्यापि वाराणसीहिन्दुविश्वविद्यालये स्वामिमहोदयानां साक्ष्यं गृहीतम् । उभाभ्यामपि शासकसमितिभ्यामुपसमितिविवरणमनुमत्यायुर्वेदोन्नत्यै प्रयत्ना अप्यारब्धाः । वङ्गीयशासकसमित्याप्युपसमितिरेका नियमितासीत्, तथापि स्वामिमहाभागाः साक्ष्यार्थमामन्त्रिताः, परं कार्यान्तरव्यग्रतया न तत्रैते साक्ष्यं कर्तुं प्राभूवन् ।

हिन्दूविश्वविद्यालयः, निखिलभारतवर्षीयायुर्वेदविद्यापीठम्, हरिद्वारस्थमृषिकुलम्, कलिकातास्थं वैद्यशास्त्रपीठम्, लवपुरस्थ डी. ए. वी. कालेजसंबन्ध्यायुर्वेदविभागः, पाटलिपुत्रदेहलीत्यादिनगराणां वैद्यकपरीक्षाश्चेत्यासु सुप्रसिद्धासु संस्थासु सर्वत्रैव स्वामिमहाभागानां सदस्यता परीक्षकता च बहोः कालादनुवर्तते । राजपुत्रप्रान्ते च बहुभ्यः स्वतन्त्रनरपतिभ्योऽप्यनेकधा संमानप्राप्तिरेभिरनुभूता ।

आयुषः षष्टितमाब्दपूर्त्तावेव श्रीस्वामिमहाभागैर्जयपुरराजकीयसंस्कृतपाठशालाध्यापनकार्यं परित्यक्तम् । तदा १६-६० विक्रमाब्दस्याश्विने मासि तदभिनन्दनार्थं संस्कृतपाठशालायां सुमहान् समितिसमारोहोऽभवत् । पाठशालीया नगरस्थाश्च प्रायेण सर्वेऽपि संस्कृतविद्वांसः, सुप्रसिद्धा वैद्याः, राजसामन्ताः, इङ्गलिशकालेजाध्यापकाः, प्रतिष्ठिता नागरिकाः श्रेष्ठिप्रभृतयश्छात्राश्च सर्वेऽपि तत्र समवेता आसन् । जयपुरराजकीयपदशिक्षासचिवपदधितिष्ठद्भिः क्षत्रियप्रवरैः श्रीनरेन्द्रसिंहमहाभागैः सभापतिपदमलंकृतम् । मङ्गलपाठानन्तरं पूर्वं श्रीरूपनारायणशास्त्रिभिर्हिन्दीभाषागीतिरेका स्वामिनां गुणगणावलीगुम्फितागीयत । तदनु स्वामिनां छात्रवर्ग-प्रातिनिध्येन कल्याणप्रसादशर्मणायुर्वेदाचार्येण हिन्दीभाषामयमभिनन्दनपत्रं पाठितम् । ततश्च कतिपयैश्छात्रैः कतिपयैर्विद्वद्भिश्च स्वामिनां गुणगणसंबन्धे स्वस्वकविताः श्राविताः । तासु काश्चिदत्र प्रकाश्यन्ते —

कामः कम्पन एव मोहमहिमा प्राप्तः स मोहं स्वयं
क्रोधः क्वापि पलायितो भयवशाल्लोभो विलीनः क्वचित् ।
मात्सर्यं मृतमेव शान्तिरधुना यस्यास्ति चित्ते स्थिरा
लक्ष्मीरामभिषग्वरः स सुचिरं संमोदतां विज्वरः ॥ १ ॥

चित्ते यस्य दया दयाऽनुगुणतो यस्यास्ति दाने रुचिः
नो दानं त्वविचारतो न च गुणान् बोद्धुं न शक्तो हि यः ।
सोऽयं सद्गुणिसत्कृतो धृतमतिर्वैद्येन्द्रचूडामणि—
र्लक्ष्मीरामबुधाग्रणीर्जनहितं कर्तुं चिरं जीवतात् ॥ २ ॥

यस्य व्याकृतिबोधो न्यायसमो योऽसमः काव्ये
साहित्येऽप्याति दक्षो न प्रतिपक्षोऽस्तिवैद्यके यस्य ॥ ३ ॥

सोऽयं लक्ष्मीरामो विश्रामं प्राप्य सेवायाम् ।
अस्मादृशभक्तानां स्मरणे विश्राममाप्नुयान्नैव ॥ ४ ॥

स्वामिन् स्मर निजभक्तं मूर्यं नैवास्य विस्मृतिं कुर्याः ।
मुञ्चन्तोऽपि नरेन्द्रान् सुहृदो मुञ्चन्ति नो सुजनाः ॥ ५ ॥

—श्री पं० सूर्यनारायणशास्त्री व्याकरणाचार्यः

यदनुग्रहतः प्राप्य प्रकर्षं, पुरतोद्य नः ।
ईदृशाः पुरुषा भान्ति, जयतात्सा सरस्वती ॥ १ ॥

विद्वान् स्याद् यदि वैद्यके, न स भवेत्तादृक्चिकित्सापटुः
विद्वानप्यथ भेषजेषु कुशलो, नाऽध्यापने स्यात्कृती ।
वैद्योऽध्यापक-पण्डितोपि विधिना पीयूषपाणिर्भवेत्
सर्वा सद्गुणसंहतिर्विलसति श्रीस्वामिवर्येऽधुना ॥ २ ॥

विश्वस्मिन् वितताद्य राजबलतोऽसौ द्राक्तरी पद्धतिः
सौलभ्येन च सौष्ठवेन च जनास्तत्रैव सज्जन्त्यमी ।
एवं घोरपरिस्थितावपि, पुरेऽस्मिन्नेव किं, सर्वतो
येन प्राच्यचिकित्सितं प्रविततं स्वामी स किं वर्ण्यताम् ॥ ३ ॥

आयुर्वेदसंहितासु मार्मिकः प्रमितवचा
धार्मिकः समस्तसाधुलोकैरपि शस्यते ।

भारते चिकित्साकर्मनिपुणानामन्यतम—
श्छन्दोत्रिचिकित्सा विदाममुना निरस्यते ।
मञ्जुनाथ शिष्यगुणघोषितविपुलयशा
श्रीरशान्तसत्यब्रह्मचारी वरिवस्यते
नामी वैद्यपण्डितेषु चामीकरतुल्यतनुः
स्वामी सोयं लक्ष्मीराममुकृती प्रशस्यते ॥ ४ ॥
— भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः

सद्वैद्यानां मौलिभिः पूजिताङ्घ्रिं पृथ्वीपालैः सत्कृतं सद्गुणाढ्यैः ।
आयुर्वेदोद्धारकं श्रद्धयाऽहं "लक्ष्मीरामं" श्रीगुरुं सन्नमामि ॥ १ ॥
परीक्षासु वैदुष्यमालोक्य शस्तं पुरा पुस्तकानां मिषेण प्रतुष्टः ।
ददौ द्वारकानाथसेनः किलास्मै भिषग्वर्यनेतृत्वसन्मानपत्रम् ॥ २ ॥
सदोनायकाद्वैद्यसम्मेलने च रुजां शान्त्युपायं हितं ज्ञानमापुः ।
तदा भाषणं दातुरस्मात् सुवैद्या वने नैमिषे शौनकाद्या व ( इव ) सूतात् ॥ ३ ॥
परोपकाराय धनं न केवलं गुणा अपीहारहितस्य तस्य ।
अतोपयच्चात्र समागतं य-द्विज्ञानदानेन कमीशनं तत् ॥ ४ ॥
सति प्रभुत्वेऽपि विरक्तभावश्चाध्यापने प्रेम गुणावितीमौ ।
महोदयं दीनहितं शरण्यं धन्वन्तरेर्बोधयतोऽवतारम् ॥ ५ ॥

लक्ष्मीश्चेन्न सरस्वती तदुभयं चेदस्ति नोदारता,
तच्चापि त्रितयं भवेदिह पुनः पुण्यैरगण्यैरिह ।
सौजन्यं न विजृम्भते तदपि चेदास्ते न धर्मे रतिः,
"लक्ष्मीरामबुधे" रमेशकृपया तत्सर्वमालोक्यते ॥ ६ ॥
नैकत्र सर्वो गुणसन्निपात उक्तेर्भवन्तस्त्वपवादभूताः ।
वक्तृत्व-विद्या-प्रतिभाप्रभावोदारत्वशीलानुभवैरुपेताः ॥ ७ ॥
कालेजमेतं त्यजता क्रियन्ते प्रत्यग्रशिष्या भवता सदुःखाः ।
समूलमेषान्न जडत्वरोगो नष्टः सुधास्यन्दिभवद्वचोभिः ॥ ८ ॥
अस्मादृशानां ननु बालिशानां को मानसाऽज्ञानतमः प्रगाढम् ।
विना हि "मार्तण्ड"मपाकरोतु कश्च प्रकाशं विदधातु हृत्सु ॥ ९ ॥
श्रीमानस्मास्वाशिषः संप्रयुङ्क्तामायत्यां नो भावुकं याभिरस्तु ।
कारुण्यं वै पूर्ववच्छ्रीमतां स्यान्नैतान् बालान् विस्मरेयुः कदापि ॥ १० ॥

ईश्वरं प्रार्थयामो विनम्रा वयं यत्स पूज्यं भिषक्वृन्दवन्द्यं सदा ।
श्रीयुतं स्वामिनं सद्वदान्यं गुरुं कीर्तिवित्तं विदध्याच्चिरञ्जीविनम् ॥ ११ ॥

भवच्चरणकमलमकरन्दमिलिन्दो
ब्रह्मदत्तशर्मा आयुर्वेदशास्त्रिकक्षास्थः
गाजीपुर ( अलीगढ़ )

## ( हिन्दीभाषामयी कविता )

"जाओ" ऐसा यदि हम कहैं आपको, तो बड़ी ही
होती पीडा दुसह मनमें हानि श्रीमान जैसी ।
"ना जाओ" जो इस तरह भी हा ! कहैं आपको, तो
होती वैसे समुचित कमी आपके सौख्य में है ॥ १ ॥
विचार से यों हम छात्र भोले पड़े हुये हैं द्विविधा महा में ।
वियोग जो है गुरु की विदाका कहो कहेंगे किस भांति से वो ॥ २ ॥
छात्रका तो, वचन गुरुका शीष रखना धर्म है,
कार्य भी अनुकूल होकर पूर्ण करना कर्म है ।
सार है बस एक यह ही शास्त्र के उपदेश का,
इस लिये अधिकार हमको है नहीं आदेश का ॥ ३ ॥
किन्तु हम लाचार होकर प्रार्थना करते यही,
हो दया वह आप की जो आज तक हम पर रही ।
प्रेम का निर्मल सुखद यह स्रोत बहता ही रहै,
छात्र-वल्ली फिर उसीसे फूलती फलती रहै ॥ ४ ॥
बस शुभाशीर्वाद हमको आपका यह चाहिये,
हर्षयुत हमको इसीसे आप करते जाइये ।
किन्तु स्वामिन् ! आप जो जाते यहां से हैं अभी,
दीन हम विद्यार्थियों को भूल मत जाना कभी ॥ ५ ॥

### ईश्वर के प्रति प्रार्थना

जगदीश ! तुमसे प्रार्थना हम नम्र होकर कर रहे,
सब तरह स्वीकार करना अधिक इससे क्या कहैं ।

कालेजाध्यापनकार्याद्विश्रमावसरे



आयुर्वेदाध्यापकमध्यस्थः श्रील० स्वामिमहोदयः [ शास्त्र्याचार्यश्रेण्योर्विद्यार्थिनश्च ]

श्रील स्वामीजी हमारे मुदित चिरजीवी रहैं,
विश्व में यश की ध्वजाएं खूब लहराती रहैं ॥ ६ ॥

शङ्करप्रसाद भट्ट,

आयुर्वेदोपाध्याय ३ वर्ग, संस्कृत कालेज, जयपुर.

अथैतत्कवितापाठानन्तरं संस्कृतपाठशालाध्यक्षः श्रीगिरिधरशर्मा चतुर्वेदोऽभिनन्दनपत्रं पठितुमुदतिष्ठत् । पूर्वमेतेन वक्तृतारूपेण स्वामिनां गुणवर्णनं संक्षेपेण कृतम् । इदमप्युक्तम्—'स्वेच्छया स्वपदं त्यजद्भ्यो विद्वद्धुर्येभ्योऽभिनन्दनपत्रसमर्पणस्यायं प्रथम एवावसरोऽस्यां संस्कृतपाठशालायाम् । परं स्वामिनां कृते नैतच्चित्रम् । यतः सर्वत्रैभिः प्राथम्यमेवावलम्बितम् । संस्कृतपाठशाया अस्या आचार्यपरीक्षोत्तीर्णेष्वेते प्रथमाः, अत्रैवाधीत्यात्र कालेजविभागे स्थानमपि सर्वतः प्रथममेभिरेव लब्धम् । राजकीयपाठशालाकार्यं कुर्वन्तोऽपि जनतासेवार्थं संस्थाद्विप्रतिष्ठापका अपि प्रथमामिम एव । तत्प्रथममेवाभिनन्दनमपि एत एव प्राप्नुयुश्चेत्, किमत्र चित्रम्' । एवं संक्षेपेण कियन्तंचित्कालं वाचिकोपन्यासानन्तरं निम्ननिर्दिष्टमभिनन्दनपत्रमनेनापाठि—

ॐ स्वस्तिश्रीमन्महितमहिममहनीयानाम्, सकलशास्त्रावारपारीणशेमुषीसमपनीतवाचस्पतिमतिमानलक्षणाम्, अप्रतिमप्रतिभाप्रसरप्रसारितयशःपटप्रावृतदिगङ्गनाङ्गानाम्, विसारिवाङ्मयाविवरणाविधूतविरोधिवचोऽवितसनातनविवेकविधिनिधीनाम्, समादृतैकपरोपकृतिव्रतानुमितसर्वात्मभावदर्शनगरिष्ठानाम्, 'आयुर्वेदमार्त्तण्ड'-'वैद्यरत्न'-'वैद्यवर्य'-'प्राणाचार्य' विद्वत्प्रवरश्रीलक्ष्मीरामस्वामिनाम् 'आयुर्वेदाचार्याणाम्' करकमलयोर्मिलिन्दायताम्

# अभिनन्दनपत्रमिदम् ।

माननीयाः श्रीस्वामिमहाभागाः !

अद्य श्रीमतां पाठशालानियताध्यापनकर्मणोऽवकाशग्रहणावसरे, प्रशान्तमधुरा स्मिताविराजिता विनयमहिमानं स्फुटमिव विभ्रती बलादिव चेतःसु शान्तिमासजन्ती भवन्मूर्त्तिरियं न पुरेव प्रत्यहं नयनयोरस्माकमासेचनं स्यादिति वियोगखेदलवणार्णवे, 'अधीतमध्यापितमर्जितं यशो न शोचनीयं किमपीह भूतले' इति चिरन्तनीमृषिकल्पपण्डितप्रकाण्डवचोभङ्गीं प्रत्यक्षमिव दर्शितवतां श्रीमतामनुस्मर्यमाणगुणावलीवलितानन्दपरम्परादिव्यसरिति च युगपन्निमज्जन्तः कमपि वचोऽतिगं भावमनुभवन्तो जडीभूता इव वचोव्यापारवैधुर्यमुपगता अपि वयं कर्त्तव्यवशात्कानिचिन्मनोभावावेशलेशसमर्पकाणि प्रस्खलन्त्यक्षराणि भवत्सेवायामुपायनीकर्तुं प्रवृत्ताः स्मः ।

महाभागाः! वर्णनातिगः खलु श्रीमतां गुणगणगरिमा । भवद्गुणगणमौक्तिकमालां बिभ्रती कियतीं शोभामियं संस्कृतपाठशाला समुपयाति स्म । भवद्भिरस्यां पाठशालायामेव शास्त्राण्यभ्यस्य सर्वतः प्रथमं च गौरवास्पदमाचार्यपदमुपलभ्य, तत एवानुदिनमध्यापयद्भिश्चतुर्विंशतिर्विद्वांस आयुर्वेदाचार्यपदं लम्भिताः । 'उपकृतिं चतुर्गुणं प्रत्युपकुर्वीते' ति महात्मनां श्रवणविषयीकृतः पन्थाः, भवद्भिस्तु चतुर्विंशतिगुणं प्रत्युपकुर्वाद्भिः कोऽपि नव एवाऽध्वा चित्रमाविष्कृतः । भवदन्तेवासिनां शास्त्रिणान्तु संख्या सप्ततिमप्यतिशते । न केवलमेतावदेव, किन्त्वद्य यावदत्रत्यपरीक्षासूत्तीर्णाः पाठशालाबहिर्वर्त्तिनोऽपि प्रायः श्रीमतां शिष्य-प्रशिष्यपरम्परामेवोपश्रयन्ते । प्रसृमरं भवद्यशःसौरभमाघ्रायमाघ्रायं दिग्दिगन्तेभ्यः प्रसह्य समाकृष्टा इव छात्रमधुकरा इह पाठशालायां 'खले कपोत'न्यायमनुस्मारयन्तो निपतन्ति स्म, इतश्च कृतकार्याः प्रतिनिवृत्ताः पाठशालाया अप्यस्याः सुश्लोकैर्दिशोऽनुदिशश्च झाङ्कारयन्ति स्म । आनयपालम्, आपञ्चनदम्, आसिन्धुसौवीरम्, आगुर्जरानर्त्तम्, आवङ्गोत्कलम्, आविदर्भं च भवच्छिष्यनिवहा आयुर्वेदं पुरस्कृत्य समुपकुर्वन्ति लोकनिवहम् । कीदृशं तद्भवेत्पत्तनं नगरमुपनगरं वा भारते, यत्र भवच्छिष्य-प्रशिष्यपरंपरापतितः कोऽपि सुश्लाघश्चिकित्सको वा, भवद्भिरुल्लाघतां गमितः कोऽपि सुजनो वा न दर्शनपथमुपेयात् । शास्त्रव्याख्यानपाटवमप्रतिमम्, चिकित्सानैपुणी चाऽनन्यसाधारणीत्युभयोः सत्कविशब्दार्थयोरिवाऽन्योन्यप्रतिस्पर्द्धिता क्व वाऽन्यत्र दृष्टचरी ? वैज्ञानिकमानिभिश्चिकित्सकैः सुस्पष्टं प्रत्याख्याताः सर्वथा जीवने निराशा ये भवाद्भिः पुनरपि जीवलोके प्रवेशिताः तेषां स्वदेशे विदेशेषु चाऽतिभूयसी संख्या । अस्यां पाठशालायां छात्राणां प्रायोगिकशिक्षाप्रारम्भो भवदुपज्ञमेव । भवाद्भिः स्थापितो धन्वन्तर्यौषधालयश्च भवद्यशःपताकेव मध्येनगरं परिस्फुरति । तदेवम्, आर्षस्यायुर्वेदस्य, भारतशिरोरत्नायमानस्य जयपुरस्य, जयपुरमहाराजानां कीर्त्तिसुवर्णकलशायमानायाः सुख्याततमायाश्चास्याः पाठशालायास्तुल्यमेव गौरवं भवद्भिः प्रतिष्ठापितम् ।

विलुप्तप्रायार्षपद्धतावस्मिन् युगेऽपि सर्वत्र समाद्रियमाणेषु वङ्गेषु अखिल भारतवर्षीयस्यायुर्वेदसम्मेलनस्य सभापतिसिंहासनमलङ्कुर्वद्भिः श्रीमद्भिर्न केवलं जयपुरस्य, अपि तु निखिलस्य राजपुत्रप्रदेशस्य जगति शिर उन्नमितम् । सा श्रीमतां सभापतिवक्तृता, आयुर्वेदसम्बन्धिन्या दक्षिणभारतराजकीयाया अन्वेषणपरिषदः संमुखे साक्ष्ये समुपस्थापितो भवन्निबन्धश्चायुर्वेदवाङ्मये चिरस्थायिवस्तुतया समभिमन्येते विपश्चिद्वरैः । प्रथम एव वयसि स्वीयगुरुचरणानां वैद्येषु रूढिं गतं कविराजपदं यथार्थयतां ख्याततमानां वैद्यानां कविप्रवराणां च श्रीकृष्णरामभट्टमहाभागानां सिद्धभेषजमणिमालायां टिप्पणं विधाय तत्परितोषावेदिनीं तन्मुखात्प्रसादरूपेण स्वीयां प्रशंसां च प्रख्याप्य विकसिष्यन्तः स्वीया अनन्यसाधारणगुणास्तदात्व एव भवद्भिरनुमापिताः । अतिप्रशस्यतरं चेदं श्रीमतां कर्म, यद्विविधरोगेभ्यः परित्रातैः श्रेष्ठिप्रभृतिभिर्महाराजैश्च काले काले य उपायनीकृतो द्रव्यराशिः, तमखिलमपि लोकहिते नियुञ्जानैर्भवद्भिर्वारांनिधेरपः संगृह्य लोकमुपकुर्वाणस्य प्रावृषेण्यस्य जलदस्य सुस्पष्टमनुकारः प्रदर्शितः । अत्रापि श्रीमद्भिः स्मृतिपथे रक्षितेयं पाठशाला, अत्राध्येष्यमाणानां दीनानां छात्राणां छात्रवृत्तिप्राप्तिकृतेऽपि विपुलो द्रव्यराशिर्नियोजित इत्यहो श्रीमतामुदारता । कियद्वा वक्तव्यम् ? न स्वल्पेन कालेन भवद्गुणावदानानि परिसंख्येयानि ।

एवं नानोपकारैर्विश्वशरीरं विराजं पुरुषमेतावत्पर्य्यन्तमासेव्य, इदानीं ध्यानैकगम्ये सूक्ष्मे परमात्मनि भवतां मनोवृत्तिः समासजतीति तदपि समुचितं शास्त्रपरिशीलनस्य स्वीयस्याऽऽश्रमस्य च । अत्रापि पथि विधेयाद्भगवान् भवदभिलषितपूर्तिमित्याशास्महे । एवं जगतो विरक्तैरपि भवद्भिः स्वाध्यायं धर्ममाकलयद्भिर्योग्याश्छात्रा अमूल्यादुपदेशतो न वञ्चनीया इत्यस्त्यस्माकं विज्ञाप्यम् । अपरं च—

कलयसि यमिदानीं राजसेवाविरामं तव चिरसयुजोऽस्मान् बाधते स प्रकामम् ।
तदपि कृतकृतिं त्वां वीक्ष्य सम्पूर्णकामं प्रणयि हृदयमेतद्धन्त भावाभिरामम् ॥ १ ॥
सरसि सुचिरमस्मिंस्तत्तदुल्लोलघातेष्वनुदिनसहचारिन् ! हंस ! विश्रान्तिहेतोः ।
यदि वसतिरभीष्टा तीरदेशे, ऽस्तु, किन्तु प्रतिवसतु हृदन्तर्बन्धुतेयं सदा ते ॥ २ ॥

भवदनुगृहीतः—

जयपुरराजकीयसंस्कृतपाठशालाया अध्यापकवर्गः, छात्रसंघः, भवदन्तेवासिवैद्यनिवहश्च ।

पाठोत्तरमिदमभिनन्दनपत्रं शिक्षासचिवमहाभागेन श्रीलक्ष्मीरामस्वामिनां करकमलयोरर्पितम्, उदभूत्सर्वतो-विसृत्वरः करतलध्वनिः । श्रीस्वामिमहाभानां शिष्यैरुपायनार्थं निर्मापितैका राजती औषधपेटिकापि शिक्षासचिवमहोदयस्य हस्तेनैव स्वामिभ्यः समार्प्यत । ततः स्वामिमहाभागैरभिनन्दनस्योत्तररूपेण सर्वोपस्थितजनबोधार्थं हिन्दीभाषयैव स्वीया वक्तृता समारब्धा । तत्रादौ मङ्गलरूपेणेदं पद्यमपाठि—

पृष्ठे कूर्मतया चतुर्भुजतया दोर्मण्डले मन्दरं
रुद्ध्वा क्षीरसमुद्रमौषधभृतं निर्मथ्य निष्पादितैः ।
आनीतैरमृतैर्भिषक्क्रमतया योषित्तया पायितै-
र्देवानामजरामरत्वमकरोत्तस्मै नमो विष्णवे ॥

अस्य पद्यस्य विस्तृतां व्याख्यां कुर्वद्भिः स्वामिमहोदयैरुक्तम्-यद् औषधसज्जीकरणे कियतः प्रयत्नस्य श्रमस्य चावश्यकता भवतीति औषधसारस्यामृतस्य प्रकटनाय, दानाय च रूपचतुष्टयं बिभ्रता स्वयं भगवता विष्णुनैव निदर्शितम् । तथा हि—

कच्छपावतारेण स्वपृष्ठे मन्थनदण्डधारणेन भेषजनिष्पादकस्याविचलत्वं सर्वक्लेशसहत्वादिकं च संसूच्यते । स्वीयचतुर्भुजरूपेण द्वयोर्भुजयोरन्यैर्देवासुरैः सह मन्थनक्रियायां व्यापारमन्ययोर्द्वयोर्भुजयो-र्युगपदेव अमृतनिष्पादनक्रियायां व्यापारं कुर्वन् सर्वासु भेषजक्रियासु ( उद्धरणप्रक्षालनाभिषवणादिषु ) प्रधानस्यावधानं व्यापारवत्त्वं च सूचयति ।

मन्दरं चौषधभृतं क्षीरसमुद्रमपि चौषधभृतमिति मन्दरसमुद्रयोर्द्वयोरपि विशेषणमौषधभृत-मिति । औषधानि त्रिविधानि, जाङ्गमौद्भिदपार्थिवभेदेन । यदुक्तम् ''तत् पुनस्त्रिविधं प्रोक्तं जाङ्गमौद्भिदपा-र्थिवम्'' । अत्र हि सर्वविधभेषजावरोधः पर्वतसमुद्रयोश्चौषधाकरत्वं प्रसिद्धमेव, यतः सर्वाण्युद्भिज्जानि सर्वाणि

च पार्थिवानि ( खनिजानि ) भूयांसि च जाङ्गमानि पर्वतेष्वेव जायन्ते वर्द्धन्ते च। समुद्रे च प्रायो जाङ्गमानि। जीवनीयानि बृंहणीयानि बल्यानि वृष्याणि आयुष्याणि च औद्भिजानि सोमादीनि दिव्यौषधानि च पर्वतेष्वेवोपलभ्यन्ते। अधुनापि "सालिममूसली-सकाकुलादि-कन्दानि" तत एवानीयन्ते। आकरोद्भवानां हीरकमाणिक्यादिस्वर्णरजतपारदगन्धकादीनां पर्वतोद्भवत्वमतिस्फुटमेव। कस्तूर्यादीनि जाङ्गमान्यपि पर्वतेष्वेव भवन्ति। समुद्रेऽपि प्रवालमुक्तागिनिजार ( अम्बर) शुक्तिशङ्खादीनि समुपलभ्यन्ते। आधुनिकानां बल्यबृंहणीयेषु सर्वोत्कृष्टं कॉर्डलीवर ओयल इति समुद्रत एवोपलभ्यते। इति सर्वभेषजाकरत्वं स्फुटमेव पर्वतसमुद्रयोः। 'निर्मथ्य निष्पादितैः' अनेन च भेषजानां क्षीरे अभिषवणादिपूर्वकं मन्थनादिना घृते भेषजसाराकर्षणं सूच्यते। अधुनापि एवमेव भैषजैः सह क्षीरपाकाद्दध्यापादनद्वारा मन्थनादिना घृतादि उद्धृत्य प्रयुज्यते। क्षीरद्वारैव च विषोपविषशोधनमपि विधीयते, तेन क्षीरं विघातकभागं निःसारयति इति अमृतोत्पादने साधकम्। सर्वगुणसम्पन्नमपि भेषजमज्ञातमाकिञ्चित्करं च भवति प्रत्युत कुत्रचिद् विघातकमपि भवति। "औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः। विज्ञातं चापि दुर्युक्तमनर्थायोपपद्यते" इति प्रियप्राणैः सर्वैरपि अज्ञातं किञ्चिदपि न सेव्यते इत्यतः भेषजस्य सर्वविधज्ञानं तत्प्रयोगज्ञानं च वैद्यस्यैव भवति इत्यतो भगवता धन्वन्तरिरूपं बिभ्रे। सम्यग्ज्ञातस्य सुप्रयुक्तस्यापि भेषजस्य पानादिष्वनवधानात् सर्वगुणावहत्वं न भवतीति स्वयमेव योषिद्रूपं ( मोहिन्यवतारं ) परिचारिकात्वं ( नर्स ) दधार। "स सर्वगः सर्वशरीरभृच्च स विश्वकर्मा स च विश्वरूप" इति को नाभिजानीयात्। आदिवैद्यो धन्वन्तरिः। आदिभेषजममृतम्। आद्या रोगिणः देवाः। आद्यः परिचारकः श्रीभगवान् मोहिनीरूपधरः। आद्या व्याधयश्च जरामृत्युप्रभृतय इति संक्षेपः।

अनन्तरं स्वामिमहाभागैरुक्तम् "नाहमभिनन्दनयोग्यं स्वीयं किमपि कार्यं पश्यामि। पाठशालायां मया स्वकर्तव्यमेवांशतः पालितम्, न त्वधिकं किमपि कृतम्। इदानीं पदत्यागेऽपि कर्तव्यपालनमेव। 'वनं पञ्चाशतो व्रजेत्' इत्यस्माकं शास्त्राज्ञा। मया तु 'पदं पष्टेः परं त्यजेत्' इत्येतावदेव कृतम्। एवं स्थितेऽप्यभिनन्दनमिति भवतां महत्त्वम्। एतदर्थं सर्वेषां वः कृतज्ञतामावहामि" इत्यादि। अनन्तरं च संस्कृतपाठशालायामस्यां प्रायोगिकशिक्षारम्भस्येतिहासं वद्भिः स्वामिमहाभागैः प्रतिपादितम्, "यत् इतः पञ्चत्रिंशतोऽब्देभ्यः प्रागेव श्रीलक्ष्मीनाथशास्त्रिद्रविड़महाभागानां पाठशालाध्यक्षत्वे, श्रीकालीपदवन्द्योपाध्याय, श्रीसञ्जीवनगङ्गोली एम. ए. महाशययोः क्रमेण शिक्षाविभागाध्यक्षत्वे च आयुर्वेदप्रायोगिकशिक्षाप्रदानप्रस्ताव उत्थितः, स च दैवादधुना श्रीश्यामसुन्दर एम. ए. महाशयानां शिक्षाविभागाध्यक्षतायां महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदस्य पाठशालाध्यक्षतायां च पूर्तिं गतः। प्रायोगिकशिक्षामन्तरेणायुर्वेदपाठनं पाठनाभास एव" इत्यादि। अनन्तरं चायुर्वेदच्छात्रेभ्यो हितं मितं चोपदिश्य स्वीयवक्तव्यं स्वामिमहाशयैः पूरितम्। तदनु सभापतिना श्रीनरेन्द्रसिंहवर्मणा सचिवमहाभागेन 'कर्तव्यपालनमेव मुख्यम्, तदेव चेज्जनेन कर्तुं शक्येत, नूनं जन्मसाफल्यं तेन संपादितम्' इत्यादि विवृण्वता स्वामिमहाभागानां प्रशंसा कृता। शिक्षाविभागाध्यक्षेण ( डाइरेक्टर आफ एज्यूकेशन) च युरोपाभिजनेन श्री विलियम आवेन्स एम. बी. ई. बी. ए. महाशयेन सभापतय उपस्थितसज्जनेभ्यश्च धन्यवादान् प्रदाय समितिकार्यं समाप्तिं नीतम्। पाठशालाविद्वद्भिः सह श्रीस्वामिनां छायाचित्रग्रहणमपि निर्वृत्तम्।

॥ इति ॥

